॥ श्रीनिकुञ्जविहारिणे नमः ॥

* महामुनीन्द्राय श्री १०८ भगवन्निम्बार्काचार्याय नमः *

# छान्दोग्योपनिषत्

पूर्वाचार्योक्तितः

श्री पं० अमोलकरामशास्त्रिणा

सम्पादिता

अनादिनिवृत्तिपथप्रवर्तक-ब्रह्मविद्योपदेशक-लोकाचार्य-
श्री १०८ सनन्दनाद्युपदिष्टस्वाभाविकद्वैताद्वैत-
सिद्धान्तानुसार्युपनिषत्प्रकाशिकाटीका
सम्वलिता

सा च

रोहतकजिलान्तर्गतबेरीनगरनिवासिनः रायसाहेबेत्युपाधि-
विभूषितस्य श्रीहरिगुरुसत्सेवापरायणस्य श्रेष्ठिप्रवर-
स्योदारमहानुभावस्य श्रीपरशुरामस्य पुत्राभ्यां श्री
१०८ भगवन्निम्बार्कसम्प्रदायानुगतोक्तोपाधि-
विभूषितलक्ष्मीनारायणमनोहरलालवैष्ण-
वाभ्यां मुद्रापयित्वा प्राकाश्यं नीता ।

* श्रीराधासर्वेश्वरो विजयतेतराम् *

पूज्यपाद श्री १०८ महामुनीन्द्र भगवन्निम्बार्काचार्यचरणकमलाभ्यां नमः

# छान्दोग्योपनिषत्



अनादिनिवृत्तपथप्रवर्तकब्रह्मविद्योपदेशकलोकाचार्य्यश्रीसनन्दनादिप्रवर्तित श्री १०८ महामुनीन्द्रभगवन्निम्बार्काचार्यचरणोपबृंहितवैदिकसत्सम्प्रदायानुगतपूज्यपादनिखिलरसिकचक्रचूडामणि श्री १०८ स्वामिहरिदासपदाश्रिताश्रितपरमविरक्तमहानुभाव श्री १०८ स्वामिनीशरणपादपद्मचञ्चरीकेण कुरुक्षेत्रान्तर्गतपुण्डरीकनगरलब्धजनिना श्रीवृन्दावनवास्तव्येन गौडवंसावतंसश्रीशालिग्रामोपाध्यायात्मजेन श्रीहरिप्यारीदेव्याःगर्भजेन तर्कादिशास्त्रविदुषा तर्कतीर्थ, तर्करत्न, तर्कवागीशोपाधिविभूषितामोलकरामशास्त्रिणा पूर्वाचार्योक्तितः सम्पादितोपनिषत्प्रकाशिकाख्या टीका तया सम्वलिता

## सा च

रोहतकजिलान्तर्गतवेरीनगरनिवासिनः रायसाहेबेत्युपाधिविभूषितस्य श्रीहरिगुरुसत्सेवापरायणस्य श्रेष्ठिवरस्योदारमहानुभावस्य श्रीपरशुरामस्य पुत्राभ्यां श्री १०८ भगवन्निम्बार्काचार्यसम्प्रदायानुगतविद्वद्गोष्ठिवरिष्ठसकलशास्त्रनिष्णात श्रीहरिप्रियाशरणोपनामकपण्डितश्रीदुलारेप्रसादशास्त्रिणांचरणकमलानुगामिभ्यां रायसाहेबेत्युपाधिविभूषितश्रेष्ठिप्रवरलक्ष्मीनारायणमनोहरलालवैष्णवाभ्यां द्रव्यसहाय्येन मुद्रापयित्वा प्राकाश्यं नीता ।



# कृतज्ञता प्रकाशः ।

अनादिनिवृत्तिपथप्रवर्तकब्रह्मविद्योपदेशकलोकाचार्यं श्री-सनन्दनादिभिः स्वशिष्याय पूज्यपाददेवर्षिनारदायोपदिष्टस्तेन स्वशिष्याय श्री १०८ निम्बार्काचार्यायोपदिष्टः श्रुतिस्मृतिसूत्रसम्मतः स्वाभाविकद्वैताद्वैतसिद्धान्तः तत्सरण्यनुकूला छान्दोग्योपनिषदः व्याख्या पं० अमोलकरामशास्त्रिणा पूर्वाचार्यो- क्तितः सङ्गृहीता । मुद्रिता चास्या अध्ययनाध्यापनतस्तत्सम्प्रदायस्य- भविष्यतिविपुलः प्रचारः ।

रोहतकजिलान्तर्गतवेरीनगरनिवासिनः रायसाहेवेत्युपाधिविभू-षितस्य श्रीहरिगुरुसत्सेवापरायणस्य दानिवदान्यस्य श्रेष्ठिप्रवरस्यो-दारमहानुभावस्यश्रीपरशुरामस्य पुत्राभ्यां रायसाहेवेत्युपाधिविभूषि-तश्रेष्ठिप्रवरश्रीलक्ष्मीनारायणमनोहरलालवैष्णवाभ्यां सकुटुम्वाभ्यां बहुतरं धन्यवादं वितरामः येषां प्रचुरद्रव्यसाहाय्येन मुद्रापितस्यास्य ग्रन्थस्य सर्वेषां सौलभ्यसम्पादने वयं कृतार्थतामलभामहि । अत-एवोदारमहानुभावयोरत्यन्तमनुगृहीताः सन्तो महोपकृतिञ्च मन्य-मानाः सततमनयोरुन्नतिं कामयामहे ।

अमोलकराम शास्त्री,

श्रीवृन्दावन

श्री १००८ पूज्यपादस्वामी मोहिनीदासजी का

टट्टीस्थान ।

* श्रीनिकुञ्जविहारिणे नमः *

* श्रीभगवते निम्बार्काय नमः *

# भूमिका

को न जानात्यासेतु हिमाचलं 'श्रीभगवदवताराः महर्षयश्चत्वारो वेधसा मनसा सृष्टाः संसारान्मोक्षणशक्त्यन्विता निवृत्तिपथप्रवर्तका मोक्षशास्त्रेषु लोकाचार्य्याः श्री १०८ सनन्दनादयः, इति । तदुक्तं महाभारते मोक्षधर्मे—

सनन्दनादयो ये च पूर्वं सृष्टास्तु वेधसा ।
न ते लोकेषु सज्जन्ते निरपेक्षाः प्रजासु ते ॥
सर्वे ते चागतज्ञाना वीतरागा विमत्सराः ।
स्वयमागतविज्ञाना निवृत्तिधर्ममाश्रिताः ॥
एते योगविदो मुख्याः लोकाचार्य्याः प्रकीर्तिताः ।
आचार्य्या मोक्षशास्त्रेषु मोक्षशास्त्रप्रवर्तकाः ॥ इति ॥

श्रीमद्भागवते ब्रह्माप्याह—

"तप्तं तपो विविधलोकसिसृक्षता मे आदौ सनात्स्वतपसः स चतुःसनोऽभूत् । प्राक्कल्पसंप्लवविनष्टमिहात्मतत्त्वं सम्यग् जगाद मुनयो यदचक्षतात्मनः" इति ॥

एकादशे श्रीभगवताप्युक्तम् ।

एतावान् योग आदिष्टो मच्छिष्यैः सनकादिभिः ।
सर्वतो मन आकृष्य मय्यद्धाऽऽवेश्यते यथा ॥ इति ॥

तस्मादनादिनिवृत्तिपथप्रवर्तका ब्रह्मविद्योपदेष्टारस्स्वाभाविकद्वैताद्वैतसिद्धान्तप्रवर्तकाः श्रीसनन्दनादयश्चत्वारः कुमाराः श्रीम-

द्वंसरूपेणावतीर्णस्य सर्वज्ञत्वसर्वशक्तिमत्त्वादिसद्गुणाश्रयत्वातिशय-साम्यशून्यत्वसच्चिदानन्दरूपत्वजगज्जन्मादिकारणत्वसर्वनियन्तृत्वमुक्तोप-सृप्यत्वादिधर्माश्रयस्य भगवतः पुरुषोत्तमस्य श्रीकृष्णस्य शिष्याः, इति निश्चीयते । एते महाभागवता जगद्गुरवः सनन्दनादयः देवर्षि-पूज्यपादश्रीनारदाय तत्त्वं परं भागवतञ्च धर्मं सम्प्रदायार्थ-मुपादिशन् । एतच्च छान्दोग्ये सप्तमाध्याये भगवत्सनत्कुमारस-म्वादे स्पष्टम् ।

**नारायणमुखाम्भोजान्मन्त्रस्त्वष्टादशाक्षरः ।**
**आविर्भूतः कुमारैस्तु गृहीत्वा नारदाय वै ॥**
**उपदिष्टः स्वशिष्याय निम्बार्काय च तेन तु ।**
**एवंपरम्पराप्राप्तो मन्त्रस्त्वष्टादशाक्षरः ॥**

इति विष्णुयामलवचनेभ्यः प्राङ्निर्दिष्टानामाचार्यचरणानां गुरुशिष्य भावः सिद्धः । तदेव तत्त्वं तदनुसरणीविद्भिः परवर्त्तिभिराचार्य्यै-र्ऋषिमहर्षिभिश्चानेकधोपबृंहितम् । तद्यथा प्रतिनियतदेशकालनिमित्त-क्रियाफलाश्रये, अचिन्त्यविविधविचित्ररचनारूपे प्रपञ्चेऽस्मिन् अनादिकर्मात्मकाविद्यावशतः नानायोनिषु परिभ्राम्यतः जीवाना-लोक्य परमकारुणिकः ब्रह्मादिसुरगणेडितकीर्तिरनन्ताचिन्त्यस्वाभा-विकशक्तिगुणनिधिः श्रियः पतिः भगवान् श्रीवासुदेवाख्यः श्रीकृष्ण-द्वैपायनव्यासरूपेण सत्त्यवत्यामवतीर्य निखिलप्राणिनां प्रधान-क्षेत्रज्ञपरब्रह्मयाथात्म्यज्ञानेन समस्तसांसारिकदुःखजातमुन्मूलयितुमशे-षजगद्धितानुशासनप्रवृत्तान् स्वनिःश्वसितान् ऋग्यजुःसामाथर्व-रूपान् वेदान्विभज्य तेषां पृथक् पृथक् शाखामुपदिदेश । तत्रैकविं-शतिशाखा ऋचः, नवाधिकशतशाखा यजुषः, सहस्रशाखा साम्नः, पञ्चाशच्छाखा अथर्ववेदस्य, तत्रैकैकस्याः शाखाया एकैकोपनि-षदा भाव्यमतोऽशीतिसहितशताधिकसहस्रसङ्ख्याकाभिरुपनिषद्भिर्भवित-व्यम् । तासु सारतरा उपनिषदोऽष्टोत्तरशतसङ्ख्याका उपलभ्यन्ते ।

उपनिषीदति उपास्योपासकविषयकं सन्देहं, संसारग्रन्थिं वा, साद-यति नाशयति उपसमीपस्थं निश्चितं, परमात्मानं प्रापयतीति वा, उपनिषद् ब्रह्मविद्या। तत्सम्पर्काद् ग्रन्थोऽप्युपनिषद्। तथाच धर्मार्थकाम-मोक्षाख्याश्चत्वारः पुरुषार्थाः वेदे उपदिष्टास्तेषु मोक्षस्यैव परम-पुरुषार्थत्वं श्रुतिसूत्रस्मृतिभिर्निश्चीयते। तथाहि—"न पुनरावृत्तिः।" बृ० ६।२।१५॥ "एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नाव-र्त्तन्ते" छा० ८।१५।५॥ "ब्रह्मलोकमभिसम्पद्यते" छा० २।१५।१॥ "नच पुनरावर्त्तते" छा० ८।१५।१॥ श्रुत्योपनिषत्कगत्यभिधानाच्च ब्र० सू० १।२।१७॥ अनावृत्तिः शब्दादनावृत्तिः शब्दात्" ब्र० सू० ४।४।२२॥ स च भगवद्भावापत्तिलक्षणः। "मद्भक्त एतद्वि-ज्ञाय मद्भावायोपपद्यते, वहवो ज्ञानतपसा पूता मद्भावमागताः" इति-श्रीमुखोक्तेः। भावपदं स्वयमेव व्याख्यातं श्रीमुखेन। इदंज्ञान-मुपाश्रित्य मम साधर्म्यमागता" इति श्लोकेन। स एव साम्य-सायुज्यब्रह्मामृतमहिमादिशब्दैरभिधीयते। "निरञ्जनः परमं साम्यमुपैति, "नारायणे सायुज्यमाप्नोति" 'ब्रह्मविद् ब्रह्मैव भवति" जुष्टं तेनामृतत्वमेति, "तन्महिमानमेति वीतशोकः" इत्यादि श्रुतिभ्यः।

भगवद्भावापत्तिरूपनिःश्रेयसैकप्रयोजनकमेवोपनिषदां ज्ञानम्। अतः सर्वैरपि मुमुक्षुभिरुपनिषदर्थो ज्ञातव्यः। ईशादिदशोपनिषदां भाष्यमनादिनिवृत्तिपथप्रवर्तक-ब्रह्मविद्योपदेशक--लोकाचार्य--सनन्दना--दिप्रवर्त्तित श्री १०८ महामुनीन्द्रभगवन्निम्बार्काचार्योपबृंहितवैदिका-नादिसत्सम्प्रदायानुगतनिखिलशास्त्रपारावारीणाविसृत्वरकीर्तिधवलीकृत-दिङ्मण्डलेन स्वाभाविकद्वैताद्वैतसिद्धान्तसमर्थनदक्षजगद्विजय्या-चार्य्य श्री १०८ केशवकाश्मीरिभट्टेन निर्मितमिदमिति प्रायो जनानां वादः श्रूयते। तच्चेदानीं कार्त्स्न्येन नो लभ्यते, किन्तु मुण्डकमात्रस्य भाष्यमुपलब्धं, तच्च मुद्रापितमस्ति। तदितरभाष्याणां दौर्लभ्यादेता-

वत्कालपर्य्यन्तं मुद्रणं नासीत् । साम्प्रतमेतत्सम्प्रदायानुयायिनो वैष्णवाः विद्वांसश्च स्वसिद्धान्तानुसारेणोपनिषदर्थं जिज्ञासमानाः समुपलद्यन्ते, अतस्तदर्थमेषाच्छान्दोग्यस्य टीका पूर्वाचार्योक्तितः मया सम्पादिता, ते प्येतां टीकामवलोक्य स्वसम्प्रदायसिद्धान्तं विज्ञाय याथात्म्यतत्त्वज्ञानेन सन्तुष्टास्सन्तः स्वीयसम्प्रदायोन्नतावनिष्टनिवृत्तिपूर्वकेष्टप्राप्तये निवद्धकक्षा भविष्यन्तीत्याशास्ते ।



# छान्दोग्योपनिषद्विषयसूचीपत्रम्



## अथ प्रथमाध्यायः


| विषयाः | खण्डाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| ब्रह्मविद्यासाधनकर्माङ्गविषयकप्रणवोपासनोपदेशः | १ | १ |
| रसतमत्वपरमश्रेष्ठत्वादिगुणवत्त्वेन प्रणव उपास्यइति कथनम् | १ | ३ |
| उद्गीथावयवे प्रणवे मुख्यप्राणदृष्टिंविधातुमाख्यायिकाप्रस्तावः | २ | ६ |
| एतद्विद्यायाः फलम् | २ | १२ |
| इतरप्राणादितो मुख्यप्राणस्य विजातीयत्वम् | २ | १२ |
| आदित्यदृष्ट्या प्राणादिदृष्ट्या चोद्गीथोपासनम् | ३ | १५ |
| उद्गीथानामक्षरोपासनम् | ३ | २० |
| स्वरशब्दितोंकारस्य प्रशंसा | ४ | २० |
| प्रणवोद्गीथयोरेकत्वविज्ञानेनोपदेशस्तस्य फलञ्च | ५ | २२-२३ |
| आदित्यमण्डलान्तवर्त्तिपुरुषस्योपासना | ६ | २५ |
| चक्षुःस्थस्य परमात्मन उपासना | ७ | २७-२८ |
| शिलकदाल्भ्यजैवलिसम्वादः | ८-९ | २९-३० |
| प्रस्तावोद्गीथप्रतिहारभक्तित्रयविषयकोपासनविधानार्थमुषस्त्याख्यायिका | १०-११ | ३५-४० |
| श्वदृष्टोद्गीथस्तुत्यर्थं दाल्भ्यस्याऽऽख्यायिका | १२ | ४१ |
| सामावयवान्तर्गतस्तोभाक्षरविषयाण्युपासनान्तराणि | १३ | ४२-४३ |

| विषयाः | खण्डाङ्कः | पृष्ठाङ्कः |
|---|---|---|

## अथ द्वितीयाध्यायः


| | | |
|---|---|---|
| समस्तसामोपासनम् | १ | ४४ |
| हिङ्कारप्रस्तावोद्गीथप्रतिहारनिधनलक्षणपाञ्चविध्य-युक्तसाम्न उपासनम् | २ | ४६ |
| वृष्टिदृष्ट्या पञ्चविधसामोपासनम् | ३ | ४६ |
| अब्दृष्ट्या पञ्चविधसामोपासनम् | ४ | ४७ |
| ऋतुदृष्ट्या पञ्चविधसामोपासनम् | ५ | ४८ |
| पशुदृष्ट्या पञ्चविधसामोपासनम् | ६ | ४९ |
| प्राणादिदृष्ट्या पञ्चविधसामोपासनन् | ७ | ५० |
| वाकूच्छब्दितशब्ददृष्ट्या हिंकारप्रस्तावोंकारोद्गीथ-प्रतिहारोपद्रवनिधानाख्यसप्तविधसामोपासनम् | ८ | ५१ |
| सप्तविधे साम्न्यादित्यबुद्धिः | ९ | ५२–५५ |
| अतिक्रान्तादित्यसप्तविधसामोपासनम् | १० | ५५–५६ |
| प्राणेषु गायत्रसामोपासनम् | ११ | ५६ |
| अग्नौ रथन्तरसामोपासनम् | १२ | ५८ |
| मिथुने वामदेव्यसामोपासनम् | १३ | ५८ |
| आदित्ये बृहत्सामोपासनम् | १४ | ५९ |
| पर्जन्ये वैरूप्यसामोपासनम् | १५ | ६० |
| ऋतुषु वैराजसामोपासनम् | १६ | ६० |
| पृथिव्यादिदृष्ट्या शक्करीसामोपासनम् | १७ | ६० |
| पशुदृष्ट्या रेवतीसामोपासनम् | १८ | ६१ |
| अङ्गदृष्ट्या यज्ञायज्ञीयसामोपासनम् | १९ | ६१ |
| देवतादृष्ट्या राजनसामोपासनम् | २० | ६२ |
| त्रयीविद्यादिदृष्ट्या सामोपासनम् | २१ | ६३ |
| गानविशेषोपदेशः | २२ | ६४ |

| विषयाः | खण्डाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| ओङ्कारेण ब्रह्मोपासनविधिः | २३ | ६६-६७ |
| कानिचित्कर्माङ्गाणि | २४ | ६८-७० |


# अथ तृतीयाध्यायः


| | | |
|---|---|---|
| आदित्यादौ मध्वादिदृष्टिः | १ | ७१-७२ |
| दक्षिणादिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः | २ | ७३ |
| पश्चिमदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः | ३ | ७३ |
| उत्तरदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः | ४ | ७४ |
| ऊर्ध्वदिक्स्थरश्म्यादौ मधुनाड्यादिदृष्टिः | ५ | ७५ |
| वसूपजीवनभूतप्रथमामृतोपासने वसुत्वप्राप्तिपूर्वकब्रह्मप्राप्तिः | ६ | ७६ |
| रुद्रोपजीवनभूतद्वितीयामृतोपासने रुद्रत्वप्राप्तिपूर्वकब्रह्मप्राप्तिः | ७ | ७७ |
| आदित्योपजीवनभूततृतीयामृतोपासन आदित्यत्वप्राप्तिपूर्वकब्रह्मप्राप्तिः | ८ | ७८ |
| मरुदुपजीवनभूतचतुर्थामृतोपासने मरुत्त्वप्राप्तिपूर्वकब्रह्मप्राप्तिः | ८ | ७८ |
| साध्योपजीवनभूतपञ्चमामृतोपासने साध्यत्वप्राप्तिपूर्वकब्रह्मप्राप्तिः | ९ | ७९ |
| नामरूपकृत्यादिरहितकार्यावस्थारहितादित्यजीवशरीरकब्रह्मोपासनम् | १० | ७९ |
| मधुविद्यासम्प्रदायः | ११ | ८०-८१ |
| ब्रह्मणि गायत्रीसादृश्यानुसन्धानम् | १२ | ८२ |
| द्वारपोपासनम् | १३ | ८६ |
| परस्य ब्रह्मण आभिरूप्यकीर्तिमत्त्वरूपफलविशेषार्थकौक्षेयज्योतीरूपत्वेनोपासनम् | १३ | ९० |
| शाण्डिल्यविद्या | १४ | ९१ |

| विषयाः | खण्डाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| पुत्रदीर्घायुष्यफलकत्रैलोक्यात्मककोशविज्ञानम् | १५ | |
| दीर्घायुष्ट्वफलकपुरुषविद्या | १६ | ६२ |
| पुरुषस्य यज्ञसादृश्यनिरूपणम् | १७ | १०१ |
| अध्यात्मं मनस्यधिदैवतमाकाशे च ब्रह्मदृष्टिः | १८ | १०४ |
| आदित्ये सकलब्रह्मदृष्टिः | १९ | १०६-१०८ |

## अथ चतुर्थोऽध्याय

| | | |
|---|---|---|
| सम्वर्गविद्यास्तुत्यर्थाऽऽख्यायिका जानश्रुतेर्हंसोक्त्या· रैकनिकटे क्षत्तृप्रेषणम् | १ | १०९ |
| रैक्काय जानश्रुतेर्धनादिदानम् | २ | ११२-११३ |
| आख्यायिकासहिता सर्वज्ञब्रह्मलक्षणादनुभवफला सम्वर्गविद्या | ३ | ११४-११६ |
| षोडशकलब्रह्मविद्या तत्र सत्यकामेन ब्रह्मचर्यार्थं· गौतमस्य गोचारणम् | ४ | १२०-१२१ |
| वलीवर्दस्य सत्यकामाय ब्रह्मणः प्रथमपादोक्तिः | ५ | १२२ |
| अग्नेः सत्यकामाय ब्रह्मणो द्वितीयपादोक्तिः | ६ | १२३ |
| हंसस्य सत्यकामाय तृतीयपादोक्तिः | ७ | १२४ |
| मद्गोः सत्यकामाय चतुर्थपादोक्तिः | ८ | १२५ |
| सत्यकामस्य गुरुकुले पुनर्गमनम् | ९ | १२६ |
| उपकोसलविद्या | १० | १२७ |
| गार्हपत्याग्निविद्या | ११ | १२९ |
| अन्वाहार्यपचनाग्निविद्या | १२ | १३० |
| आहवनीयाग्निविद्या | १३ | १३० |
| अग्नीनामुपकोसलं प्रति वचनम् | १४ | १३१ |
| अक्षिपुरुषोपासना | १५ | १३३ |

| विषयाः | खण्डाङ्कः | पृष्ठाङ्कः |
| --- | --- | --- |
| यज्ञे क्षत उत्पन्ने व्याहृतयः प्रायश्चितार्थहोममन्त्रतया- विधातव्यास्तदभिज्ञस्यैव ब्रह्मत्वलक्षणमार्त्विज्यं तस्य च ब्रह्मणो मौनमावश्यकमित्यादि विधानम् | १६ | १३६-१२२ |
| यज्ञभ्रंशे व्याहृतिहोमः प्रायश्चित्तम् | १७ | १३९-१४१ |


## अथ पञ्चमोऽध्यायः


| | | |
| --- | --- | --- |
| प्राणविद्या | १-२ | १४२-१४९ |
| संसृतिवैराग्यहेतुभूतप्रकृतविविक्तजीवयाथात्म्यविषय- पञ्चाग्निविद्यार्थं श्वेतकेतुप्रवाहणसम्बादः | ३ | १५२-१५५ |
| चिरकालमुषितवते गौतमाय राजकृतविद्योपदेशः, तत्र वेत्थ यथा पञ्चम्याहुतावाप इतिपञ्चम- प्रश्नस्य प्रतिवचनम् | ४-९ | १५५-१५९ |
| वेत्थ यथा देवयानस्य पितृयाणस्य च व्यावर्तना३- इति तृतीयप्रश्नस्य प्रतिवचनम् | १० | |
| वेत्थ यथा पुनरावर्तन्त इति द्वितीयप्रश्नस्य प्रतिवचनम् | १० | |
| वेत्थ यथाऽसौ लोको न सम्पूर्यत इतिचतुर्थप्रश्नस्य- प्रतिवचनम् | १० | १६०-१६३ |
| औपमन्यवादिभिः पञ्चभिरुद्दालकेन सहितैः कैकेयस्य सम्वादः | ११ | १६५-१६७ |
| औपमन्यवकैकेयराजसम्वादः | १२ | १६२ |
| सत्ययज्ञकैकेयराजसम्वादः | १३ | १६६ |
| इन्द्रद्युम्नकैकेयसम्वादः | १४ | १७० |
| जनककैकेयसम्वादः | १५ | १७१ |
| बुडिलकैकेयसम्वादः | १६ | १७१ |
| उद्दालककैकेयसम्वादः | १७ | १७२ |
| सर्वैःसहकैकेयसम्वादः | १८ | १७४ |

| विषयाः | खण्डाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| विदुषोऽग्निहोत्रसिद्ध्यर्थं प्राणाय स्वाहेति प्रथमाहुति-कथनम् | १९ | १७५ |
| व्यानाय स्वाहेतिद्वितीयाहुतिकथनम् | २० | १७६ |
| अपानाय स्वाहेति तृतीयाहुतिकथनम् | २१ | १७७ |
| समानाय स्वाहेतिचतुर्थाहुतिकथनम् | २२ | १७७ |
| उदानाय स्वाहेतिपञ्चमाहुतिकथनम् | २३ | १७७ |
| एवं विदोऽग्निहोत्रफलम् | २४ | १७७ |

## अथ षष्ठोऽध्यायः

| | | |
|---|---|---|
| सद्विद्योपदेशार्थमाख्यायिका | १ | १८१-१८३ |
| अन्यपक्षनिरसनपूर्वकस्वमतोपन्यासः | २ | १८४ |
| ब्रह्मव्यतिरिक्तेतरसर्वस्यापि तेजोवन्नात्मकबीजत्रय-प्रसूतत्वम् | ३-४ | १८३-१८६ |
| अन्नाद्यशितं त्रेधा भवतीति | ५ | १९० |
| भक्ष्यमाणस्याणीयोभागो मन आदिर्भवतीति | ६ | १९१ |
| षोडषकलपुरुषोपदेशः | ७ | १९२ |
| सुषुप्तिकालस्थित्युपदेशः | ८ | १९५-१९६ |
| सुषुप्तौ प्रजानां सत्सम्पत्तिर्न श्रद्धेयेति मन्वानस्य श्वेत-केतोरसद्दृष्टान्तेनोपदेशः | ९ | २०३ |
| सुप्तोत्थितस्य गृहादागतोऽस्मीति प्रतिसन्धानवत्सुषुप्ति-दशायां परमात्मनि सम्पन्नस्य सुषुप्त्यनन्तरं सत-आगतोऽस्मीतिप्रतिसन्धानं स्यादितिशङ्कमानस्य-श्वेतकेतोर्नदीदृष्टान्तेनोपदेशः | १० | २०४-२०५ |
| देहवियोगसमये जीवस्य नाशः कस्मान्नभवतीत्या-शङ्कमानस्य श्वेतकेतोर्वृक्षदृष्टान्तेनोपदेशः | ११ | २०६ |
| सच्छब्दितस्यानेकब्रह्माण्डहेतुत्वे, आशङ्कमानस्य श्वेतकेतोर्वटफलदृष्टान्तेनोपदेशः | १२ | २०७ |

| विषयाः | खण्डाङ्कः | पृष्ठाङ्कः |
|---|---|---|
| कारणानुगतस्य परमात्मनोऽनुपलम्भे शङ्कमानस्य-श्वेतकेतोर्लवणदृष्टान्तेनोपदेशः | १३ | २०८–२०६ |
| सर्वव्यापिनः सच्छब्दितस्यावगत्युपायप्रदर्शनार्थं-गन्धारदेशानीतपुरुषदृष्टान्तेनोपदेशः | १४ | २१० |
| देहराहित्योपजोविनी ब्रह्मसम्पत्तिरपि न श्रद्धेयेति-मन्वानस्य श्वेतकेतोर्मुमूर्षुपुरुषदृष्टान्तेनोपदेशः | १५ | २१२ |
| सत्यभूतं सदात्मकत्वमनुसन्धानस्यैवानर्थनिवृत्तिरिति चौरपरशुग्रहणदृष्टान्तेन कथनम् | १६ | २१३ |


# अथ सप्तमोऽध्यायः


| | | |
|---|---|---|
| पूज्यपाद श्रीदेवर्षिनारदाय श्रीभगवत्सनत्कुमारोपदेशः | १ | २२०–२२३ |
| वाङ्नाम्नो भूयसीति | २ | २२४ |
| मनो वाचो भूय इति | ३ | २२५ |
| सङ्कल्पो मनसोभूयानिति | ४ | २२६–२२७ |
| चित्तं सङ्कल्पाद्भूय इति | ५ | २२८–२२६ |
| ध्यानं चित्ताद्भूय इति | ६ | २३० |
| विज्ञानं ध्यानाद्भूय इति | ७ | २३१ |
| वलं विज्ञानाद्भूय इति | ८ | २३२ |
| अन्नं वलाद्भूय इति | ९ | २३३ |
| आपोऽन्नाद्भूयस्य इति | १० | २३३–२३४ |
| तेजोऽद्भ्योभूय इति | ११ | २३४ |
| आकाशस्तेजसोभूयानिति | १२ | २३५ |
| स्मरणमाकाशद्भूय इति | १३ | २३६ |
| आशा स्मरणाद्भूयसीति | १४ | २३७ |
| प्राणः आशाया भूयानिति | १५ | २३८ |
| सत्यं त्वेवविजिज्ञासितव्यमित्युपदेशः | १६ | २३६ |
| विज्ञानन्त्वेव विजिज्ञासितव्यमित्युपदेशः | १७ | २४० |
| मतिस्त्वेवविजिज्ञासितव्येत्युपदेशः | १८ | १४१ |

| विषयाः | खण्डाङ्कः | पृष्ठाङ्कः |
| --- | --- | --- |
| श्रद्धा त्वेव विजिज्ञासितव्येत्युपदेशः | १९ | २४१ |
| निष्ठा त्वेव विजिज्ञासितव्येत्युपदेशः | २० | २४२ |
| कृतिस्त्वेव विजिज्ञासितव्येत्युपदेशः | २१ | २४२ |
| सुखं त्वेवविजिज्ञासितव्यमित्युपदेशः | २२ | २४२ |
| भूमा त्वेव विजिज्ञासितव्य इत्युपदेशः | २३ | २४३ |
| भूमाल्पयोःस्वरूपकथनम् | २४ | २४५ |
| सर्वात्मभूतस्यभूम्न उपासनाप्रकारः | २५ | २४७ |
| उपासकः सात्त्विकाहारसेवी भवेदित्युपदेशः | २६ | २४८ |

## अथाष्टमोऽध्यायः

| | | |
| --- | --- | --- |
| दहरविद्योपासनम् | १ | २५२-२५९ |
| दहरविद्योपासनाफलम् | २ | २६० |
| असत्यापिहितसत्योपासनं नामाक्षरोपासनञ्च | ३ | २६१ |
| सेतुरूपात्मोपासनम् | ४ | २६२ |
| ब्रह्मचर्य्यप्रशंसा | ५ | २६४ |
| मूर्द्धन्यनाडीगमनप्रशंसा | ६ | २६५-२६७ |
| अथ प्रत्यगात्मविद्या तत्रेन्द्रविरोचनयोः प्रजापतिसकाशं गमनम् | ७ | २६८-२६९ |
| इन्द्रविरोचनयोरुदशराव आत्मदर्शनम् | ८ | २७१ |
| इन्द्रस्य पुनरागमनम् | ९ | २७३ |
| इन्द्राय स्वप्नपुरुषोरुपदेशः | १० | २७५ |
| सुषुप्तपुरुषोपदेशः | ११ | २७६ |
| मर्त्यशरीराद्युपदेशः | १२ | |
| श्यामाच्छवलमितिमन्त्रः | १३ | |
| कारणत्वेनाऽऽकाशाख्यब्रह्मोपदेशः | १४ | |
| परम्परागतमात्मज्ञानमित्युपदेशः | १५ | |




॥ श्रीनिकुञ्जविहारिणे नमः ॥

श्री१०८ भगवन्निम्बार्कमहामुनीन्द्राय नमः ।

अमोलकरामशास्त्रिणा पूर्वाचार्योक्तितः सङ्गृहीता–

उपनिषत्प्रकाशिकाटीका–तया सम्बलिता—

# छान्दोग्योपनिषत् ।



आनन्दमजरन्नित्यं श्रीगोपीजनजीवनम् ।
अनन्ताऽचिन्त्यलावण्यं नमामि पुरुषोत्तमम् ॥१॥

यत्प्रसादं विना नास्ति तत्त्वस्याधिगमो नृणाम् ।
निम्बार्कदेशिकं नौमि तं सर्वज्ञं जगद्गुरुम् ॥२॥

श्रीनिवासं गुरुं वन्दे करुणावरुणालयम् ।
वादरायणसूत्राणां भाष्यकारम्मुनीश्वरम् ॥३॥

आशुधीरमहं वन्दे भक्तिवैराग्यवारिधिम् ।
स्मयमानमुखाम्भोजं माधुर्य्यभावदायकम् ॥४॥

ज्ञानवैराग्यभावादिकल्याणगुणसागरम् ।
आशुधीरस्य शिष्यं श्रीहरिदासं नतोस्म्यहम् ॥५॥

स्वामिनीशरणं नौमि भावुकं परमं गुरुम् ।
हृत्तमो नाशने शक्तं श्रीगोविन्दपदाश्रितम् ॥६॥

नत्वान्यान् देशिकान् मान्यान् पूर्वाचार्योक्तितः खलु ।
छान्दोग्योपनिषद्व्याख्यां व्याकरोमि यथामति ॥७॥

ब्रह्मविद्योत्पत्तौ कर्मणां साधनत्वेन परमपरयोपयुक्तत्वात् कर्माङ्ग-विषयमुपासनं तावत् प्रस्तूयते—

**ओमित्येतदक्षरमुद्गीथमुपासीत ।**
**ओमित्युद्गायति तस्योपव्याख्यानम् ॥१॥**

ओमित्येतदक्षरे वर्णात्मके उद्गीथस्य तादात्म्यसंसर्गेणान्वयस्यानुपपत्त्या उद्गीथपदेनोद्गीथावयवत्त्वं लक्ष्यते, तथा चोद्गीथावयवत्वेन रूपेणोमित्येतदक्षरमुपासीत इत्यर्थः । ओमित्येतदक्षरस्योद्गीथभक्त्यवयवादक्षरत्वमुपरिष्टाद्व्यक्तं भविष्यति । ओमित्यक्षरस्योद्गीथावयवत्वादुद्गीथशब्दवाच्यत्वमव्याहतमेव । प्रणवस्य तथात्वं कस्मान्निर्णीतमित्यत आह-ओमित्युद्गायति हीति ।

हि यस्मात् उद्गाता ओमित्यारभ्य उद्गायति = उद्गानं करोति तस्मात्सिद्धं प्रणवस्योद्गीथावयवत्वम् । तस्य = प्रणवस्य । उपव्याख्यानम् = रसतमत्वप्राप्तिः समृद्धिरित्येवं गुणकमुपासनम् । परमः पराध्यर्स्तेनेयं विद्या वर्तते, इत्याद्या विभूतिः स्तुतिरूपा आपायिता ह वै कामानामित्यादिफलमित्यादिप्रकारेण कथनमुपव्याख्यानं प्रतिजानीत इति शेषः ॥१॥

**एषां भूतानां पृथिवीरसः पृथिव्या आपो रसः । अपामोषधयो रसः । ओषधीनां पुरुषो रसः । पुरुषस्य वाग्रसो वाच ऋग्रसः ऋचः सामरसः साम्नामुद्गीथो रसः स एष रसानां रसतमः पराध्योऽष्टमो य उद्गीथः ॥२॥**

प्रणवस्य पृथिव्यादिभ्यो रसतमत्वं प्रदर्शयन् प्राक् प्रतिज्ञातार्थमुपपादयति एषामित्यादिना । एषां प्रसिद्धानां भूतानां प्राणिनामगानाञ्च पृथिवी रसः । गतिः । सर्वेषां भूतानां स्थितिहेतुत्वात्, पृथिव्या रसत्वं नहि पृथिवीमन्तरा भूता अन्यत्र स्थातुं शक्नुवन्ति ।

( पृथिव्या आपो रसः) तस्या जलोपादानकत्वात् । तासां पृथिवीरसत्वम् । अद्भ्यः पृथिवीति श्रवणात् । अपामोषधयो रसः । आप एवौषध्याकारेण परिणमन्ते । अत ओषधीनां जलकारणकत्वाद्रसत्वमुपपन्नं भवति । रसशब्दोऽत्र गोरस इति वत् कार्यपरत्वेन व्याख्येयः। एवमुत्तरत्रापि । ( ओषधीनां पुरुषो रसः ) पुरुषशरीरस्यान्नपरिणामित्वात्तस्य

रसत्वम् । पुरुषस्य वाग्रसः वाक्पुरुषस्योपकारं करोति । वाग्विहीनं पुमांसं सर्वे विनन्दन्ति ।अतो वाचः सारत्वम् ।वाच ऋग्रसः = वाङ्निर्वर्त्यत्वादृच-स्तद्रसत्वमित्यर्थः । ऋचःसामरसः = ऋचः सकाशादपि सामरसः सार-तरम् । गायमानं हि साम वक्तृश्रोत्रोः सुखकरं भवति । अतस्तस्य सारत-रत्वमुपपद्यते साम्नामुद्गीथो रसः = उद्गीथावयव-ओङ्काररसः सार-तरः । पृथिव्यादिभ्य उत्तरोत्तरेषां सामादीनां यदर्थं रसत्वमभिहितं तत् सम्प्रति दर्शयति–स एष इति । स एष उद्गीथावयवः प्रणवः पृथिव्यपे-क्षयाऽष्टतमत्वेन परिगणितो भूताद्यानां सामान्तानामतिशयेन रसो रसतमः परमः = अत्युत्तमः । परस्य परमात्मन अर्धं स्थानमर्हतीति परार्ध्यः। छन्द-सीवेति यत् । ब्रह्मविदां प्रणवस्याप्युपास्यत्वादित्याशयः । तथाच रसतमत्व परमश्रेष्ठत्वपरमस्थानार्हत्वगुणवत्वेन प्रणव उपास्य इति फलितार्थः॥३॥

**कतमा कतमर्क्कतमत् कतमत्साम कतमः कतम उद्गीथ इति विमृष्टं भवति ॥ ४ ॥ वागेवर्क्क प्राणः सामो मित्येतदक्ष-रमुद्गीथः, तद्वा एतन्मिथुनं यद्वाक्च प्राणश्चर्कच साम च ॥५॥**

भूताद्यानां वागन्तानां वस्तूनां तदभिमानिदेवतानाञ्च प्रसिद्धत्वात् तेषां विमर्शं परित्यज्य ऋगादीनां ज्ञानस्य विशिष्टफलजनकतया तेषां विमर्शः क्रियते । प्रश्नोत्तराभ्यामित्यतः प्रश्नं निर्दिशति कतमेति । ऋक् कतमा का, साम कतमत् किम , उद्गीथः कतमः, वा इति विमष्टं विमर्शः कृतो भवति । कतमेत्यादिद्विरुक्तिरादरार्था ॥४॥ क्रमेणो-त्तरयति—वागेवर्गित्यादिना । पुरुषसारत्वेनाभिमतावागेव ऋक् = अत एव न वाचो विमर्शः कृतः । प्राणो मुख्यप्राणः साम सर्वभूतेषु समत्वात् सामदेवतात्वाच्च ॥ तृतीयप्रतिवचनमभिप्रेत्याह—ओमित्येतदक्षरमुद्गीथः इति गत्याद्यर्थस्यावतेर्मनप्रत्यये प्रत्ययस्य टीलोपे कृते ऊठादेशे अवतेष्टिलोप-श्चेति सूत्रात्—ओमिति निष्पन्नम् ॥

अखिलं जगदस्मिन् ओतं प्रविष्टमित्योम् ।

उच्चत्वं गीतत्वं सर्वस्थानत्वञ्चोद्गीथशब्दघटकीभूतानामक्षराणां क्रमेणार्थः ।

पारम्पर्य्येण वाक्प्राणयोः सर्वकामसम्बन्धादुद्गीथस्यापि तथा भूतवागादिसम्बन्धादस्तिसर्वकामसम्बन्धः । सम्प्रति-प्रणवस्य वाक्प्राण-

द्वारा सर्वकामसम्बन्धे हेतुं दर्शयति तद्वा इति। वै शब्दो मिथुनप्रसिद्ध्यर्थः।। तदेतत् मिथुनं वै किं तत् वाक्चप्राणश्च ऋक् च सामचेति इतरेतरयोगे च शब्दाः। यथा वाक्प्राणौ मिथुनमेवं ऋक्सामे च स्वातन्त्र्येण मिथुनं न शङ्क्यम्। वाक्प्राणयोर्मिथुनत्वेन तदभिन्नेन ऋक्सामयोरपि मिथुनत्वात्। कथमन्यथा तदेतन्मिथुनमित्येकवचननिर्देश उपपद्येत। नच मिथुनयोरनुगतं यन्मिथुनत्वं तत्रैकवचनोपस्थाप्यैकत्वान्वयाभिप्रायेणैकवचनमुपपत्स्यत इति वाच्यम्। उपक्रमभङ्गेन स्वतन्त्रमिथुनद्वयस्याविवक्षितत्वात् ॥ ५ ॥

**तदेतन्मिथुनमोमित्येस्मिन्नक्षरे संसृज्यते । यदा वै मिथुनौ समागच्छत आपयतो वै तावन्योन्यस्य कामम् ॥६॥ आपयिता हवै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥७॥**

ऋक् सामात्मकं तदेतन् मिथुनमोमित्यस्मिन्नक्षरे संसृज्यते। वाङ्मयत्वमोंकारस्य प्राणनिष्पाद्यत्वञ्च मिथुनेन संसृष्टत्वं मिथुनस्य सर्वकामाप्तिगुणवत्वं प्रसिद्धमिति निर्दर्शनमुच्यते। यदा वै मिथुनाविति यदा दंपतीमिथुनीभूतौ ग्राम्यधर्मतया समागच्छतः संयुज्येयातां तदाऽऽपयतः प्रापयतः अन्योन्यस्य इतरेतरस्य तौ,कामम्,अभिलषितप्रापकत्वं प्रसिद्धम्। मिथुनाविति पुंस्त्वद्विर्वचने च्छान्दसे ततश्चोंकारस्यापि स्वात्मसंसृष्टमिथुनेन सर्वकामाप्तिगुणवत्वं निष्पन्नमिति भावः ॥ ६ ॥

उक्तप्रकारेण तदुपासकस्योद्गातुः फलं दर्शयति आपयितेति। योऽधिकारी विद्वान् एतदक्षरमेवाप्तिगुणवदुद्गीथमुपास्ते स कामानां काम्यानामापयिता यजमानस्य भवति ॥ ७ ॥

**तद्वात्र एतदनुज्ञाक्षरं यद्धि किञ्चानुजानात्योमित्येव तदाहैषो एव समृद्धिर्यदनुज्ञा समर्धयिता हवै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते ॥८॥**

समृद्धिगुणवत्वेन प्रणवस्योपास्तिं दर्शयति। तद्वेति। तदेतदोङ्कार-

मनुज्ञात्तरम्। अनुज्ञाप्रदत्तरं वै कस्मात् हि यस्मात् यत्, यदा पुमान किञ्च = किञ्चिदनुजानाति। अनुज्ञानं करोति। तदोमित्येवाभिदधाति तस्मादेव तदनुज्ञात्तरमिति सम्बन्धः। एषा उ एव समृद्धिर्यदनुज्ञा याऽनुज्ञा अयं ते कामः समृद्ध इति भावेनैवानुज्ञाप्रदानात्। तस्मात्सिद्धमोङ्कारस्य समृद्धि वाचकत्वमित्यर्थः। तद्रूपेणोपासकस्य फलं दर्शयति समर्द्धयितेति योऽधिकारी। एतत् अक्षरमुद्गीथम्। एवम्, समृद्धिगुणविशिष्टत्वेन विद्वानुपास्ते। स यजमानस्य कामानां काम्यानां समर्धयिता समृद्धिकारको भवति हवै ॥ ८ ॥

**तेनत्रयी विद्या प्रवर्त्तते। ओमित्याश्रावयति, ओमिति-शंसति, ओमित्युद्गायति, एतस्यैदक्षरस्याचिन्त्यमहिम्ना रसेन ॥ ९ ॥ तेनोभौ कुरुतो यश्चेतदेवं वेद नाना तु विद्या-चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तर भवतीति खल्वेतस्यैवाक्षरस्योपव्याख्यानं भवति॥१० इति प्रथमाध्यायस्य। प्रथमः खण्डः॥१॥**

प्रणवस्य प्रागुदाहृतगुणवत्त्वेनोपास्यत्वात्तं प्ररोचनार्थं स्तौति तेनेति प्रक्रान्तेन तेनाक्षरेण प्रणवेन प्रवर्तते त्रयीविहितं कर्म तदेव विशदयति, (ओमित्याश्रावयति = अध्वर्युरोमित्युच्चार्याश्रावयति, आश्रावमन्त्रं पठति ओमित्युच्चार्य्य शंसति, शंसनमन्त्रं पठति तथोद्गातोमित्युद्गायति। आध्वर्यवहोत्रौद्गात्रसमाहारस्य दर्शपौर्णमासादिष्वसम्भवादग्निष्टोमादिषु च सम्भवात्त्रितयसमाहारलिङ्गादोङ्कारेण प्रवर्तमानं त्रयीविहितं कर्म सोमयाग इति प्रतिभातीति भावः॥ ओंकारपूर्वकत्वेन तथाविधमन्त्रपाठस्य किं प्रयोजनमित्यत आह—एतस्यैवाक्षरस्येति। रसेन सारभूतेन महिम्ना महत्वेन युक्तस्यैतस्यैवाक्षरस्योङ्कारस्यापचित्यै पूजार्थमित्यर्थः ॥९॥

यस्योक्तरूपेणाक्षरविज्ञानमस्ति तन्निष्पाद्यं कर्म तद्विज्ञानवतोऽनुष्ठे-यमित्याशङ्क्याह। तेनोभाविति। तेन = ओङ्काराक्षरेण—उभावपि कर्म कुरुतः। तौ कौ यश्चैतत् प्रागुपदर्शिताप्रकारेणाक्षरं वेद। यश्चकर्म-मात्रं जानाति, नतूक्तरूपेणाक्षरतत्वं वेद ता उभाविति सम्बन्धः॥ विद्वदविदुषोर्वैलक्षण्यविद्याविद्याधर्मप्रयुक्तमतो विद्याविद्ययोर्वैलक्षण्यमाह-नानात्विति। विद्याचाविद्या च परस्परयोगे चशब्दौ। तुविशेषेण

नाना विलक्षणे तयोर्वै लक्षण्यं कुतः फलवैलक्षण्यादित्याह। यदेवेति। श्रद्धा आस्तिक्यबुद्धिस्तया युक्तया उपनिषदा, उपनिषज्जन्यब्रह्मात्मकतत्त्वज्ञानेन यत्कर्म करोति। तदेव वीर्य्यवत्तरमनन्तफलसाधनं भवति। अविद्यया यत्करोति न तथेत्यर्थः॥ रसतमत्वकामाप्तिसमृद्धिगुणवत्त्वादिभिरुक्तप्रकारैर्विहितमुपासनं सर्वमेतदक्षरविषयकमेवेत्यर्थः॥ १०॥

इति प्रथमस्याध्यायस्य प्रथमः खण्डः ॥१॥

एतत्खण्डान्तर्गतबाक्यविषयाधिकरणान्युपन्नस्यन्ते। तृतीयाध्यायस्य चतुर्थपादे उद्गीथादिविद्यादिषु, स एष रसानां रसतमः परमः पराध्योंष्टम य उद्गीथ इतिवचनमुपन्यस्य चिन्तितम्। तथाहि-इदं रसतमत्वादिप्रतिपादनं प्रकृतोद्गीथस्तुत्यर्थम्॥ उत तस्मिन् रसतमत्वादि दृष्टिविधानार्थमिति संशये पूर्वपक्षः। "इयमेव जुहूः स्वर्गो लोक आहवनीयः" इत्यादिषु जुह्वादिरिवकर्माङ्गस्योद्गीथस्योपादानात्तद्वदेव स्तुत्यर्थत्वम्। स्तुतिमात्रमुपानादितिचेन्नापूर्वत्वात्। ब्र० सू० ३।४।२१॥ इति सूत्रखण्डेन। भावशब्दाच्च।३।४।२२॥इति सूत्रेण च वादरायणमहर्षिणा राद्धान्तःकृतः तथाहिः। नेतिपूर्वपक्षनिवृत्तिः। जुह्वादिविधिवदुद्गीथादिविधेरत्रासन्निधानेन रसतमत्वादेरप्राप्तत्वादुपासीतेति प्रत्ययो न स्तुतिमात्रमपितु, तद्दृष्टि विधिरेव, नच प्रदेशान्तरे विहितस्योद्गीथस्य प्रदेशान्तरे स्तुतिरूपमुच्यते विधायकस्य पदसमूहस्यानन्तरं पुरस्तात् परस्ताद्वा समाम्नातोऽर्थवादस्तेनेकवाक्यतामेति यथा वायुर्वैक्षेपिष्ठेति तदुक्तं विधिनात्वेकवाक्यत्वात् स्तुत्यर्थे न विधीनां स्युरिति भावो विधिः। उद्गीथमुपासीत सामोपासीतेत्यादिविधिशब्दाच्चाप्युपासनाविध्यर्थान्युद्गीथादिवाक्यानि,अतो रसतमत्वादिमप्युपास्यमेव ततश्च रसतमत्वे न रूपेणोद्गीथोपासनं कार्यं तत्फलार्थिभिरिति स्थितम्॥ १॥ तथा ओमित्येतदक्षरमुपासीतेत्यादौ निर्विशेपसामान्येन व्यवहारासम्भवात्, विशेषाकाङ्क्षायां यत्र शाखायामुद्गीथाद्याश्रयमुपासनमुक्तं तच्छाखागतानामेवोद्गीथव्यक्तीनां सन्निहितत्वात्तन्मात्र विषयत्वमेवोद्गीथश्रुतेरिति युक्तं ततश्च सामवेद एव ताण्डिशाखाप्रभृतयो बह्व्यः, शाखास्तासु च शाखासु सामावयवोद्गीथाः स्वरवर्णविशेपादिभेदेन-

भिन्नाः ताण्डिशाखायाञ्चाप्त्यादिगुणविशिष्टतया हिरण्यप्राणाकाशादिदृष्टिविशिष्टतया चोद्गीथाद्युपासनानि विहितानि तानि क्रतुमध्येऽनुष्ठेयानि तत्र यदा क्रत्वङ्गतया ताण्डिशाखागतोद्गीथः प्रयुज्यते, तदा तस्मिन्नैव तच्छाखाविहिताप्त्यादिगुणविशिष्टोपासनं कर्तव्यम्। उत शाखान्तरोद्गतेप्युद्गीथे क्रत्वङ्गतया प्रयुज्यमानाऽपि कार्या इति विचिकित्सायां पूर्वपक्षः। तच्छाखागतोद्गीथाद्याश्रया एव तच्छाखाम्नातोद्गीथाद्याश्रयोपासनाः कार्या इति नियमो युक्तः। उद्गीथादिश्रुतेस्सन्निहितविशेषपर्य्यवसाना इति प्राप्ते ब्रूमः। अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्। ब्र० सू० ३।३।५३॥ तु शब्दः पूर्वपक्षव्यावृत्यर्थः। उद्गीथाङ्गप्रतिबद्धा उपासना न शाखास्वेव व्यवस्थिता अपितु, प्रतिवेदं सर्वशाखासु सम्बद्ध्यते हि यतः स्वरादिभेदेनोद्गीथादिश्रुतिरविशिष्टा सती सन्निधिं बाधते, क्रतुमध्यगताश्चोद्गीथादयः प्रत्ययाश्रयाः, न तत्र सन्निधिविशेषः, सर्वशाखाप्रभवत्वात् क्रतोः। तथाच शाखान्तरगतः क्रतुमध्ये प्रयुज्यमान उद्गीथः शाखान्तरोक्तोपासनप्रकारेणाप्युपास्य इत्यर्थः। मन्त्रादिवद्वाऽविरोधः॥ ब्र० सू० ३।३।५४॥ यजुर्वेदिनां कुक्कुटोऽसि। इतिमन्त्रस्तस्य तण्डुलप्रेषणार्थाश्मादाने विनियोगः। कुटुरुरसि। शाखान्तरविहितः मन्त्रः तस्यापि मन्त्रस्य विकल्पेन विनियोगः सोऽपि प्राप्नोति। एवञ्च यथा मन्त्रादीनां क्रत्वङ्गभूतानामैकैकशाखावगतानां सर्वशाखासु क्रतोरेकत्वेन सर्वत्र सम्बन्धो न विरुद्धते तद्वदिहापि न विरोध इति स्थितम्। तथा गुणोपसंहारे ओमित्येतदक्षरमुद्गीथमुपासीतेत्याद्याः कर्माङ्गाश्रयाविद्या श्रूयन्ते, तत्र संशयः। ताः किं कर्मसु पर्णमयीत्वादिवन्नियमेनोपादेयाः। उत दोहनादिवदनियमेनेति। तत्र नियमे नोपादेया इति। यतो यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्य्यवत्तरं भवतीत्युद्गीथादिविद्यासम्बन्धिनो वर्तमाननिर्देशस्य पर्णमयीत्वादिसम्बन्ध्यपापश्लोकश्रवणात्। पृथक्फलप्रतिपादनायोगात्। यत्त्वासां स्ववाक्येषु फलं श्रूयते, आपायिता ह वै कामानां भवतीत्यादितदप्यर्थवादमात्रमपापश्लोकश्रवणादिवत्,न फलप्रधानं तस्मात् यस्य पर्णमयीजुहूर्भवति न स पापं श्लोकं शृणोतीत्येवमादीनामपि जु-

ह्मादिमुखेन कर्मसु प्रवेशादारभ्याधीतवन्नियमेनोपादेयत्वं तथासामपि कर्मा- ङ्गभूतोद्गीथादिमुखेन कर्मसु प्रवेशात् । क्रत्वङ्गतया नियमेनोपसंहार्य्यत्व- मितिपूर्वपक्षे उच्यते ( तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम् ) ब्र० सू० ।३।३।४१।। निर्धारणं निश्चयेन मनसो धारणमुपासनमित्यर्थः। तस्योद्गीथाद्युपासनस्य कर्मस्वनियम कुतः तद्दृष्टेः। तेनोभौ कुरुतो यश्चै- तदेवं वेदश्च य न वेद इत्युद्गीथोपासनरहितस्याविदुषोऽपि क्रत्वनुष्ठान- वचनेनोपासनानुष्ठानस्यानियमदर्शनात् । उपासनस्य कर्माङ्गत्वे तु तदनु- पपत्तेः ।

साङ्गक्रतुफलात् स्वर्गादेः । पृथग्भूतवीर्यवत्तरत्वं ह्यस्योपासनस्य फलम् । तच्चाप्रतिबन्धरूपं । प्रतिबध्यते हि कर्मफलं प्रबलकर्मान्तरफलेन अस्य तु तदभावः । अतः कर्माङ्गाश्रयाणामुद्गीथादिविद्यानां पृथक्फल- त्वाद्गोदोहनादिवत्कर्मस्वनियमेनोपादेयत्वमिति स्थितम् । तथा मुक्ति- व्यतिरिक्तफलकोपासनानामुद्गीथविद्यारहितयज्ञादिकर्मनिष्पाद्यानामपि य- ज्ञादिसाधननिष्पत्तौ विलम्बे हेत्वभावादिहजन्मन्येव निष्पत्तिरितिपूर्वपक्षे प्राप्ते उच्यते—

ऐहिकमप्रस्तुते प्रतिबन्धे तद्दर्शनात् । ब्र० सू० ।३।४।५०।। ऐहिकं विद्याफलं प्रतिबन्धेऽप्रस्तुते सति विद्याविरुद्धफलं देशकालविशेषापेक्षं फलोन्मुखं कर्म प्रतिबन्धशब्दवाच्यं तस्मिन्नविद्यमाने सतीत्यर्थः । प्रस्तुते तु तस्मिन् जन्मान्तरे विद्यासिद्धिः। कुतः तद्दर्शनात्। मृत्युप्रोक्तां नचिकेतोऽथ- लब्धामित्यादिश्रुतिः । ह्यैहिकीं विद्यासिद्धिं दर्शयति । यदेव विद्यया करो- ति श्रद्धया उपनिषदा तदेव वीर्य्यवत्तरं भवतीत्युद्गीथविद्यायाः प्रबलक- र्मान्तराप्रतिबन्धफलवेदनेन प्रबलकर्मान्तरप्रतिबन्धस्यानुज्ञातत्वात् । इति स्थितम् ।। ४ ।।

तथा तदुत्तराधिकरणे यज्ञानुरूपो बलिरिति न्यायेन बलवत्कर्मसाध्यानां- मुक्तिफलकं ब्रह्मोपासनानां प्रबलकर्मान्तरप्रतिबन्धासम्भवान्नियतैहिकत्व- मेवेति पूर्व पक्षे = प्राप्त उच्यते, एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्था- धृतेः।३।४।५१।।ब्र०सू०। यथा साधनसम्पन्नस्येह जन्मन्येव विद्यासिद्ध्यतीति

न नियमः अपितु, प्रतिबन्धनाशोत्तरमेव । एवं विद्यासम्पन्नस्य मुक्तिरेव फलं तस्यानियमः प्रारब्धकर्मणि सति शरीरान्तरपाते, "तदभावे तच्छरीरपात एवेति" कुतः तदवस्थावधृतेः। विद्यावतोऽपि"तस्य तावदेव चिरं यावन्न विमोक्ष्ये अथसम्पत्स्य इति वचनेन प्रारब्धक्षयोत्तरमेव मोक्षकालविनिश्चयादित्यर्थः। पदाभ्यासोऽध्यायसमाप्तिद्योतकः॥ प्रकृतमनुसरामः ।

**देवासुरा ह वै यत्र संयतिरे । उभये प्राजापत्याः तद्ध देवा उद्गीथमाजह्रुरनेनेनानभिभविष्याम इति ॥१॥ ते ह नासिक्यं प्राणमुद्गीथमुपासांचक्रिरे तꣳहासुराः पाप्मना विविधुस्तस्मात्तेनोभयं जिघ्रति सुरभि च दुर्गन्धिच । पाप्मना ह्येष विद्धः ॥ २ ॥ अथ वाचमुद्गीथमुपासांचक्रिरे ताꣳ हासुराः पाप्मना विविधुस्तस्मात्तयोभयं वदति । सत्यञ्चानृतञ्च पाप्मना ह्येषा विद्धा ॥ ३ ॥**

उद्गीथावयवे–ओङ्कारे मुख्यप्राणदृष्टिं विधातुमाख्यायिकां प्रस्तौति। देवा इति। देवाश्चासुराश्च देवासुराः।हवा इति वृत्तार्थस्मरणार्थौ निपातौ। यत्र यदा, संयतिरे योद्धुं सन्नद्धा अभवन् । योद्धुं सन्नद्धत्वे दायादत्वं कारणमाह उभय इति । उभयेऽपि ते देवासुराः। प्राजापत्याः प्रजापतेः कश्यपस्य पुत्राः॥ प्राजापत्या इत्यपत्यार्थे* दित्यदित्यादित्यपत्युत्तरपदात् ण्यत् । यदा संयतिरे। किन्तदेत्यत आह तद्धेति। तत्तदा असुराणां वहुत्वाच्छङ्करवरसद्भावाच तैर्जिता देवा उद्गीथम्- उद्गीथावयवं प्रणवमाजह्रुराहृतवन्तः। उपायत्वेन स्वीकृतवन्त इति यावत् । तत् किमर्थमाजह्रुरित्यत आह अनेनेति ॥ अनेनोद्गीथावयवप्रणवोपासनेन तत्प्रसादाप्तबलेनैतानसुरानभिभविष्यामो जेष्याम इत्यभिप्रायः सन्तः ॥ १ ॥

ते देवाः नासिक्यं नासिकाया भवं प्राणं घ्राणेन्द्रियत्वेनोपासनं कृतवन्त इत्यर्थः ॥ तेऽसुरा अनेनोद्गीथावयवप्रणवोपासनेन नो जेष्यन्तीति विदुरिति वक्तव्यम् ॥ एवं ज्ञातदेवाभिप्राया असुराः नासिक्यं प्राणमसुराः स्वोत्थेन पाप्मना विवधुर्विद्धवन्तः । संसर्गं कृतवन्तः पापहेतुभूतवृत्त्या संयोजितवन्त इति यावत् ॥ २ ॥

* अष्टा ४।१।८५।

**अथ ह चक्षुरुद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं पश्यति दर्शनीयञ्चादर्शनीयञ्च। पाप्मना ह्येतद्विद्धम् ॥ ४ ॥ अथ ह श्रोत्रमुद्गीथमुपासांचक्रिरे तद्धासुराःपाप्मना विविधुस्तस्मात्तेनोभयं शृणोति श्रवणीयश्चाश्रवणीयश्च पाप्मनाह्येतद्विद्धम् ॥ ५ ॥ अथ ह मन उद्गीथमुपासांचक्रिरे तद्धासुराः पाप्मना विविधुस्तस्मात्तेनोभयं सङ्कल्पयते सङ्कल्पनीयमसङ्कल्पनीयञ्च पाप्मना ह्येतद्विद्धम् ॥ ६ ॥ अथ हय एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे तं हासुराः ऋत्वा विदध्वंसुर्यथाश्मानमाखणमृत्वा विध्वंसेत् ॥ ७ ॥**

नासिक्यप्राणस्य विद्धत्वे प्रमाणयति तस्मादिति । हि यस्मात् एष नासिक्यः प्राणः पाप्मना विद्धस्तस्मादेव । तेन = तदभिमतेन नासिकारूपकरणेन । सुरभि च दुर्गन्धिचेत्युभयं जिघ्रति,प्रत्यगात्मा । अन्यथा तन्नस्यादिति भावः ।२। एवमुत्तरत्राप्यर्थोऽवसेयः । अथ, नासिक्यप्राणस्य वेधानन्तरम्, वाचं वागभिमानिन्यग्नौ ॥ ३ ॥ चक्षुः तदभिमानिसूर्ये ॥ ४ ॥ श्रोत्रं = तदभिमानिसोमे ॥ ५ ॥ तं, मुख्यप्राणम् । असुराः पूर्ववदेव ऋत्वा प्राप्य विदध्वंसुः विविधुः । यदा तं विदध्वंसुस्तदा स्वयमेव विध्वस्ता अभूवन्नित्यर्थः । तत्र दृष्टान्तमाह यथेति । आखन्यते इत्याखणं मृत्पिण्डः स यथा असानं पाषाणं प्राप्य विध्वस्तो भवति । आखणमिति च्छान्दसं णत्वं नपुंसकत्वञ्च ॥ ७ ॥ एवं मुख्यप्राणोपासकस्य फलमाह । यथेति । एष एव दृष्टान्तः एवं हैव स विध्वंसते विनश्यति । ह निश्चितम् । कोऽसौ यः पुरुषः एवं विदि, असुरकृतपापाविद्धतया मुख्यप्राणोपासके । पापम् पापफलदुखं कामयते, इच्छति यश्चैनम्, मुख्यप्राणोपासकं प्रति अभिदासति हिनस्ति। सोऽप्येवमेव विध्वंसत इत्यर्थः । दा लवने दो अवखण्डने, इत्यतो- वा लेटसिचवहुलं लेटीति सिपि दासतीतिरूपम् निष्पन्नम् ॥७॥

**एवं यथाऽश्मानमाखाणमृत्वा विध्वंसते एवं हवै स विध्वंसते, य एवं विदि पापं कामयते यश्चैनमभिदासति**

**स एषोऽश्माखणः ॥ ८ ॥ नैवैतेन सुरभि नदुर्गन्धिविजानात्यपहतपाप्माह्येष तेन यदश्नाति, यत्पिबति, तेनेतरान् प्राणानवति एतमु एवान्ततो वित्वोत्क्रामति व्याददात्येवान्तत इति ॥ ९ ॥ तं ᳴ हाङ्गिरा उद्गीथमुपासांचक्रे एतमाङ्गिरसं मन्यन्तेऽङ्गानां यद्रसः ॥ १० ॥**

नन्वसुरा मुख्यप्राणं प्राप्यैव विध्वंसन्त इति प्रागभिहितं नत्वाखणमश्मानं प्राप्य । नच पूर्ववाक्ये यथा गृहीतं तद्वदत्रापि लोष्ठ एव ग्राह्यः । उपासके उपाससाम्यस्य वक्तव्यत्वादित्यतस्तदर्थं व्याचष्टे । स एष इति । स एष मुख्यप्राणोऽस्माखणः आखाणाश्मेत्युच्यते । आखाणास्मसदृशत्वात् । आखाणाश्मे समो हि स इत्युक्तेः । एवञ्चास्मानमाखाणमित्य स्याखाणास्म सदृशं मुख्यप्राण इत्यर्थे नानुपपत्तिरिति भावः ॥ ८ ॥

ननु नासिक्योऽपि प्राणो वाय्वात्मा तस्यापि मुख्यत्वं तथा सति कथं तस्य पाप्मना विद्धत्वमुक्तमित्याशङ्कामपनेतुं मुख्यप्राणस्य नासिक्यप्राणादितो वैलक्षण्यमाह । नेवेति । हि यस्मादेषोऽपहतपाप्माऽपहतो विनाशितोऽपनीतः पाप्मा यस्मात्सोऽयमपहतपाप्मा तदस्मादेवैतेन मुख्यप्राणेन सुरभि न विजानाति । दुर्गन्धिञ्च नविजानाति। घ्राणेनैव तदुभयं विजानाति लोकः । एतेनोभयोः प्राणयोः वैलक्षण्यं समर्थितम् । एवं मुख्यप्राणस्य सर्वदेवेभ्य उत्कृष्टत्वे पापाविद्धत्वं हेतुरित्युक्तम् । इदानीं हेत्वन्तरमाह । तेनेति । तेन मुख्यप्राणेन यदश्नाति, यत्पिबति प्रत्यगात्मा तेनाशितेन पीतेनेतरान् प्राणानिन्द्रियदेवानवति रक्षति । मुख्यप्राणस्याशितेन पीतेनेन्द्रियग्रसङ्घातस्य स्थितिमत्वे कार्यं प्रमाणयति = एतमिति । यत इन्द्रियगणो मुख्यप्राणाशितपीतलब्धसत्ताकः । अतएवान्ते मृत्युसमये मुख्यस्य प्राणस्याशनपानाभावादेवेन्द्रियसंघातः । अशनादिकमवित्वाऽलब्ध्वोत्क्रामति॥ व्याददात्येवान्तत इति । अन्ततः मरणसमये सर्वेन्द्रियगणानामुत्क्रमणादेवास्य व्यादानं करोति । विदीत्याग इतिधातुः ॥ ९ ॥

सम्प्रति पूर्वे महर्षयस्तमुपास्य स्वस्वनामानि लब्धवन्त इत्याह तंहेत्यादिना । अङ्गिरानाम महर्षिस्तं, तत्र मुख्यप्राणे उद्गीथं भगवन्तं वासुदेवमुपासांचक्रे । तेनसोङ्गिरा इति नामधेयं लेभ इति वक्तव्यम् ।

**तेन तं ह वृहस्पतिरुद्गीथमुपासांचक्र एतमुएव वृहस्पतिं मन्यते वाग्धिवृहती तस्या एष पतिः ॥ ११ ॥ तं हाऽयास्य उद्गीथ मुपासांचक्रे। एतमुएवाऽऽयास्यं मन्यन्ते, आस्याद्यदयते ॥१२॥ तेन तं ह वकोदाल्भ्यो विदांचकार सह नैमिशीयानामुद्गाता वभूव । सह स्मैभ्यः कामानागायति॥१३॥आगता हवै कामानां भवति य एतदेवं विद्वानक्षरमुद्गीथमुपास्ते । इत्यध्यात्मम् ।**

**इति प्रथमाध्यायस्य द्वितीय खण्डः ॥ २ ॥**

उद्गीथोपासनात् प्रागेव तस्यर्षे अङ्गिरा नामकत्वं प्रसिद्धं कथं तदुपासनेनैतस्येतन्नाम्नो लाभ इत्यतो नेदमृषिनाम । अपितु मुख्यप्राणस्यैवान्यत्रप्रसिद्धत्वादित्याशयेनाह । एतमिति । मन्यन्ते बिद्वांसः ॥ एतमेव मुख्यप्राणमेवाङ्गिरसं मुख्यतोङ्गिरसनामकम्। तत्राङ्गिरस शब्दार्थं निर्वक्ति। अङ्गानामिति । यत् , यस्मादङ्गानां शरीरावयवानां मुख्यप्राणो रसः नियामकस्तेनासावङ्गिरसः ॥१०॥

न केवलं पूर्वे महर्षय एवतमुद्गीथमुपास्य स्वस्य स्वस्य नामानि लब्धवन्तः किन्तुगीर्वाणाअपीत्याह । तेनेति । तेनांगिरसस्त्वेन गुणेन वृहस्पतिः तमुपासाचक्रे । वागिन्द्रियस्य निखिलार्थप्रकाशकत्वात् । वृहत्वं सा च मुख्यप्राणाधीना । अतः प्राणस्यैव वाक्पतित्वमित्याह एतमु एवेति । एतं मुख्यप्राणं वृहस्पतिम् , बाचो वृहत्या पतिम् । तत्कुत इत्यत आह । वाग्धीति । अतः उपासस्य मुख्यप्राणस्यैब वृहस्पतित्वं मन्यन्त इति पूर्वेणयोजना ॥ ११ ॥

तेन, वृहस्पतित्वेन आयास्य ऋषिः तमुद्गीथमुपासितवान् एतम्= मुख्यप्राणम् । सुराः देवाः। आयास्यं मन्यन्ते ।तत्कुत इत्यत आह । आस्याद्यदयतं । यत् यस्मात् । आस्यान्मुखादयते निर्गच्छति ॥ १२ ॥

तेन प्रागुदाहृतगुणविशिष्टतया तमुद्गीथं दाल्भस्यापत्यो वको नामविदांचकार। प्राणं विदितवान्। ज्ञात्वा सह नैमिशीयानां सत्रं कुर्वतामुद्गाता वभूव । स वको मुख्यप्राणज्ञानसमर्थ्याद्देवेभ्यः ऋषिभ्यः कामान् काम्यान्नुदिश्यागायति । हस्मेत्याश्चर्यद्योतकम् । ते कामास्तैः प्राप्ताः॥ अगायंति-

स लटस्मे–इति लटभूतेऽपि ॥ १३ ॥ अन्योऽप्युद्गाताऽऽगाता कामानां भवति । य एवं विद्वान् यथोक्तगुणमुद्गीथमुपासते सोऽपि यजमानाभीष्टप्रदानसमर्थो भवतीत्यर्थः । अध्यात्ममुद्गीथोपासनम्–समाप्तम् । आत्मशब्देनेन्द्रियमनःप्राणादिसङ्घात उच्यते । अध्यात्मम्, आत्मनीत्यर्थः आत्मविषयमितियावत् ।

इति प्रथमाध्यायस्य द्वितीय खण्डः ॥ २ ॥

---

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणम्–लिख्यते ।

क्रत्वङ्गाश्रयाण्युपासनानि किं यजमानकर्तृकाणि, उत ऋत्विक्कर्तृकाणीति विमर्शे पूर्वपक्षः । ऋत्विक्परिक्रयस्याङ्गार्थत्वात् पृथक्फलवदुपासनं प्रधानं फलार्थिना यजमानेनैवोपासनं कार्यम् । गोदोहनादेः पृथक्फलत्वेऽपि ऋत्विक् कर्तृकप्रणयनाद्याश्रितस्य पृथक् कृत्य यजमानेनोपादातुमशक्यत्वान्न यजमानत्वम् । उपासनानां तु क्रियारूपाणामुद्गीथादिभ्यः पृथक्कृत्य यजमानेन कर्त्तुं शक्यत्वात । प्रधानत्वाच्च यजमानत्वमेव युक्तम् । औद्गात्रसमाख्यादिकन्तु १शास्त्रफलंप्रयोक्तरी तिन्यायविरोधान्नादरणीयमित्यात्रेय आचार्य्यो मन्यते । स्वामिनः फलश्रुतेरित्यात्रेयः । ब्र० सू० ३।४।४४। यदेव विद्यया करोतीति क्रतुवीर्य्यवत्तरत्वफलस्य यजमानाश्रयत्वश्रवणात् । इति सूत्रेण पूर्वपक्षं कृत्वा आर्त्विज्यमित्यौडलौमिस्तस्मै हि परिक्रियते । ब्र० सू० ३।४।४५ ॥ इति सूत्रेण सिद्धान्तितम् । उपासनं फलसाधनत्वेन प्रधानं सदपि ऋत्विक्कर्तृकम् । इत्यौडुलोमिराचार्यो मन्यते–कुतः हि हेतो यतस्तस्मै साङ्गकर्मणे कर्मकरः ऋत्विक् यजमानेन दक्षिणया परिक्रियते तेनैव तन्निवर्त्यं तस्मादिति सूत्रार्थः ॥ यथा गुणोपसंहारपादे चिन्तितं अस्त्युद्गीथविद्यावाजिनां द्वया ह प्राजापत्याः देवाः सुराश्चेत्यारभ्यते ह देवा ऊचुः हन्तासुरान् सुरान् यज्ञ उद्गीथेनात्यायामेति तेषां प्रतिज्ञामभिधायोद्गीथे वागादिमनः पर्यन्तदृष्टावसुरै रभिभवमुक्त्वा । (अथ हेममासन्यं प्राणमुचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायदित्यादिना ) आस्यभवमुख्यप्राणादिदृष्ट्या असुरपराभवमुक्त्वा

---

१. पूर्वमी० १३ । ७ । १८ ॥

भवत्यात्मना परा स्वभ्रातृभ्यो भवति । य एवंवेदेति शत्रुपराभवफलाय प्राणदृष्ट्योपासनं विहितम्। एवं छान्दोगानामपि देवासुरा ह वै यत्र संयेतिरे" इत्यारभ्य तद्ध देवा उद्गीथमाजह्रुरनेनानभिभविष्याम:" इति उद्गीथेनासुरपराभवप्रतिज्ञामुक्त्वा उद्गीथे वागादिदृष्टौ तदवदेव दोषमभिधायाथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासाचक्रिरे । इत्यादिनोद्गीथे प्राणदृष्ट्यैवासुरपराभवमुक्त्वा यथास्मानमाखणमृत्वा विध्वंसन्ते । एवं हैव पाप्मना विध्वंसन्ते । य एवं विदि पापकर्म कामयत इति शत्रुपराभव फलायोद्गीथे प्राणदृष्ट्योपासनं विहितम् । अत्र विद्यैक्यमुत विद्याभेद इति संशये तत्र पूर्वपक्षः तत्रोभयत्र विद्यैक्यं तत्रोभयत्र—एकस्योद्गीथस्यैवोपास्यत्वश्रवणेन रूपाभेदात्। शत्रुपराभवरूपफलसंयोगाविशेषादुद्गीथविद्येति समाख्यैक्याच्चेति । तत्र राद्धान्तछाययापरिचोद्यं परिहरति । अन्यथा त्वंशब्दादिति चेन्नाविशेषात् । ब्र० सू० ।३।३।६।। अन्यथात्वं नानात्वं विद्यायाः कुतः शब्दात् ।

त्वं न उद्गायेति कर्तृत्वं प्राणस्य वाजिभिर्निर्दिश्यते । अन्यत्र कर्मत्वं तमुद्गीथमिति । उद्गानकर्त्तरि प्राणदृष्टिविधानमिति रूपभेदाद्विद्याभेदस्स्यादिति चेन्न । न रूपभेदः कुतः । अविशेषात् । सारूप्यबाहुल्येनाल्पवैषम्यलक्षणस्य भेदकत्वाभावात् । देवासुरसङ्ग्रामप्रवृत्तिः देवानामुद्गीथेनासुरपराभवाभिप्राय इत्येमादिसर्वसमानमिति अतस्तदनुसारेण वाजसनेयिनामप्युद्गीथोपक्रमाविशेषात् तदनुसारेण वाजसनेयकेऽपि उद्गानकर्मण्यैव सौकर्यातिशयविवक्षया तत्कर्तृत्वव्यपदेशः । यथा स्वयमेवासिश्छिन्नतीति सौकर्यातिशयविवक्षया छिदिकरणे तत्कर्तृत्वव्यपदेश इति नेयम् । तस्मादुभयत्रविद्यैक्यमिमि प्राप्त उच्यते । न वा प्रकरणभेदात् परोवरीयस्त्वादिवत् । ब्र० सू० ।३।३।७।। नवेति पक्षव्यावृत्यर्थः। न विद्यैक्यं कुतः प्रकरणभेदात् । एकत्र । ओमित्येतदक्षरमुद्गीथमुपासीतेत्युद्गीथावयवं प्रणवमुपास्यं प्रक्रम्य । उद्गीथमाजह्रुरितिवचनादुद्गीथावयवभूतः प्रणवः प्राणदृष्टेर्विषय उक्तः । वाजसनेयिके तु अविशेषेणोद्गीथेनात्ययाम इत्युपक्रमात् कृत्स्नोद्गीथः प्राणदृष्टेर्विषयः । अतः प्रक्रम-

भेदाद्विधेयभेदः। विधेयभेदे रूपभेदस्तस्माच्च विद्याभेदः ॥ संज्ञातश्चेतदुक्तमस्ति तदपि ॥ ब्र० सू०।३।३।८॥ उद्गीथविद्येतिसंज्ञैक्यादुद्गीथविद्यैक्यमिति चेत्तत्रोत्तरं नवा प्रकरणभेदादित्यनेन प्रकरणभेदात् संज्ञायादुर्बलत्वात् तदपि संज्ञैकत्वमपि विधेयभेदेऽस्त्येव । यथाऽग्निहोत्रसंज्ञा नित्याग्निहोत्रे कुण्डपायिनामयनाग्निहोत्रे च यथा च छान्दोग्ये प्रथमप्रपाठकोदितासु बह्वीषु विद्यासूद्गीथविद्यैति संज्ञैक्यम् । व्याप्तेश्च समञ्जसम् । ब्र० सू० ।३।३।९॥ छान्दोग्ये प्रथमप्रपाठके नानोद्गीथविद्याः समाम्नातास्तासु ओमिमित्येतदक्षरमुद्गीथमुपासीतेत्युद्गीथावयवत्वेनोपास्यतयोपक्रान्तस्य प्रणवस्य व्याप्तेश्च व्यापित्वाच्च मध्यगतस्यापि प्रणवविषयत्वं समञ्जसम् । तद्धदेवा उद्गीथमाजह्रुरिति-अवयवेऽपि पटैकदेशे दग्धे पटो दग्ध इत्यादावयविशब्दप्रवृत्तिर्दृश्यते । एवं सति छान्दोग्ये उद्गीथशब्दनिर्दिष्ट उद्गीथावयवभूतः प्रणव एवोपास्यत्वेन प्रतिपत्तव्यः । वाजसनेयके तूद्गीथशब्दः कृत्स्नोद्गीथविषय इति कृत्स्नोद्गीथप्राणदृष्ट्योपास्य इतिसिद्धो विद्याभेद इति स्थितम् ॥ प्रकृतमनुसरामः ॥

## ॥ अथ प्रथमाध्यायस्य तृतीय खण्डः ॥

**अथाधिदैवतं य एवासौ तपति तमुद्गीथमुपासीतोद्यन्वा एष प्रजाभ्य उद्गायति । उद्यं स्तमोभयमपहन्त्यपहन्ता ह वै भयस्य तमसो भवति य एवं वेद ॥१॥ समान उ एवायं चासौ चोष्णोऽयमुष्णोऽसौ स्वर इतीममाचक्षते स्वर इति प्रत्यास्वर इत्यमुं तस्माद्वा एतमिमममुं चोद्गीथमुपासीत॥२॥**

अधिदैवतमुद्गीथस्योपास्तिमाह । अथेत्यादिना । अध्यात्मविषयकमुपासनानन्तर्य्यमथशब्दार्थः । अधिदैवतम् = देवताविषयमुद्गथोपासनम् । "य एवासावादित्यस्तपति तमुद्गीथमुपासीत" आदित्यदृष्ट्या उद्गीथमुपासीतेत्यर्थः । स्पष्टीकृतोऽयमर्थो भाष्यकारैः। आदित्यादिमतयश्चाङ्ग उपपत्तेः।ब्र० सू० ।४।१।६॥ इति सूत्रे । तथाहि । स एवासौ तपति तमुद्गीथमुपासीतेत्यादीन्यङ्गाश्रितोपासनानि श्रूयन्ते । तत्र फलसाधनभूत कर्माङ्गतयोद्गीथादेरफलेभ्य आदित्यादिभ्य उत्कर्षादादित्यादिसूद्गीथादि-

दृष्टिः कर्त्तव्येति प्राप्ते सिद्धान्तमाह । "आदित्यादिमतयश्चाङ्ग उपपत्तेः" आदित्यादिमतयश्च आदित्यादिदृष्टय एव–अङ्गे कर्माङ्गे–उद्गीथादौ कर्त्तव्यः । कस्मात् ? आदित्यादिदृष्ट्या संस्कृतेषु कर्माङ्गभूतेषूद्गीथादिषु कर्माणि विशिष्टफलप्रदानि भवन्ति । अत उपपद्यते आदित्यादेरुत्कर्षः । तस्मादादित्यादिदृष्टिरुद्गीथादौ कार्येति सिद्धमिति ।

आदित्यस्योद्गीथसादृश्यमुपपादयति । उद्यन्निति । यथा आदित्य उद्यन् । उद्गच्छन्नेव प्रजाभ्यः प्रजानामर्थप्रकाशनं कुर्वन्नुद्गायति । तथोद्गीथोऽपि, उद्यन्नेव तमोन्धकारं तज्जन्यभयञ्च प्राणिनामपहन्ति । अन्धकारादिजन्यभयहन्तृत्वेन रूपेण उभयोस्साम्यमिति भावः । अन्धकारजन्यभयनिवर्त्तकत्वगुणवत्तया आदित्योपासनस्य फलं निर्वक्ति । अपहन्तेति । य एवमुक्तप्रकारेणादित्यदृष्ट्योद्गीथस्योपास्यत्वं वेद स तमसोऽज्ञानस्य तत्कृतभयस्यापहन्ता भवति हवै ॥ १ ॥

**अथ खलु व्यानमेवोद्गीथमुपासीत यद्वै प्राणिति सः प्राण यदपानिति सोऽपानः । अथ यः प्राणापानयोः सन्धिः स व्यानो । यो व्यानः सा वाक् तस्मादप्राणन्ननपानन् वाचमभिव्याहरति ॥ ३ ॥**

उद्गीथावयवस्यौङ्कारस्य मुख्यप्राणत्वेनोपास्तिः, आदित्यदृष्ट्योद्गीथस्योपास्तिः कर्त्तव्येति विहितम् । तत्र प्राणादित्ययोस्साम्यमाह । समान इति । अयम् । अध्यात्मप्रकरण उक्तो मुख्यप्राणः अधिदैवतप्रकरण उच्यमानः । असौ, आदित्यः समानस्तुल्य एव वै । उष्णत्वेन धर्मेण प्राणादित्ययोः सादृश्यं दर्शयति । चोष्ण इति । अयं देहस्थो मुख्यप्राण उष्णः । उच्छ्वासस्योष्णत्वेन प्रतिपत्तेः । असौ, आदित्यश्चोष्णः । तस्योष्णत्वंसर्वैरुपलभ्यमानत्वात् । स्वर इति ॥ इमं प्राणं स्वर इत्याचक्षते कथयन्ति स्वरत्येव गच्छत्येव तस्मिन्नैवस्थूले न प्रत्यागच्छति तस्मात् प्राणे स्वरशब्दस्य प्रवृत्तिः । "स्वृ शब्दोपतापयोरित्य" स्माद्धातूनामनेकार्थत्वात्कर्तर्यपि रूपम् । अमुमादित्यं स्वर इति प्रत्यास्वर इति वाऽचक्षते । प्रत्यहमस्तं गतस्यादित्यस्य पुनरहनि–अहनि–अगतिदर्शनात् । प्रत्यास्वरशब्दस्यापि प्रवृत्ति-

२ अतः स्वरनामत्वेनोष्णगुणत्वेन च प्राणादित्ययोस्साम्यमिति भावः। अन्योन्यसाम्यकं फलं दर्शयति। तस्मादिति। उभयोः प्राणादित्ययोः साम्यात्। इमं प्राणं-अभ्युतादित्यं वा तादृशगुणकमुद्गीथेऽध्यस्योपासीतेत्यर्थः ॥ २ ॥ व्यानत्वधर्मपुरस्कारेणोद्गीथोपासनमाह। अथेति। अथखल्विति पक्षान्तरद्योतकम्। कार्यं प्राणस्य वृत्तिविशेषं तेन रूपेणोद्गीथमुपासीत। व्यानस्य माहात्म्यं वक्तुं तदुपयुक्तत्वेन प्राणापानस्वरूपमाह यद्वैति। यत् यः प्राणिति। ऊर्ध्वं प्राणनं करोति स प्राणो वै,पुमान् मुखनासिकाभ्यां यं वायुं वहिर्निःसारयति स प्राण इति यावत्। यदपानिति। योऽधोनयनं करोति सोऽपानः। यदर्थमेतदुक्तं तदाह। अथेति। यः प्राणापानयोरन्तरावृत्तिविशेषः स व्यानः। व्यानत्वेनोद्गीथोपासने वीजमाह यो व्यान इति। यो व्यानः सा वाक् व्यानकार्यत्वाद्वाचः। तस्या व्याननिर्वर्त्यत्वे लिङ्गं दर्शयति। तस्मादिति। तस्माद्वाचो व्याननिर्वर्त्यत्वादेव हेतोः। प्राणन्नपानन् = प्राणापानशून्यस्सन् वचनमभिव्याहरति उच्चारयति पुमान्। अतो वीर्य्यवत्कर्महेतुत्वात्, व्यानत्वेनोद्गीथोपास्तिः कार्येति भावः ॥ ३ ॥

**या वाक् सर्क्तस्मादप्राणन्नपानन्नृचमभिव्याहरति यर्क्तत्साम तस्मादप्राणन्ननपानन्साम गायति। यत्साम स उद्गीथस्तस्मादप्राणन्ननपानन्नुदगायति ॥ ४ ॥ अतो यान्यन्यानि वीर्य्यवन्ति कर्माणि यथाग्नेर्मन्थनमाजेः सरणं दृढस्य धनुष आयमनम प्राणन्ननपानंस्तानि करोत्येतस्य हेतोर्व्यानमेवोद्गीथमुपासीत ॥ ५ ॥**

या वाक् सा ऋक् ऋग्वेदः वाग्निर्वर्त्यत्वात्। यस्माद्वाग्निर्वर्त्या ऋक् तस्मात्। अप्राणन्ननपानन्, प्राणापानौ निरुद्ध्य वाचमभिव्याहरति। अतो न प्राणापानौ वाक्प्रवर्तकौ किन्तु व्यान एवेति भावः। या ऋक् तत् साम सामवेदः। तस्मादित्यस्य पूर्ववदर्थोऽवसेयः। साम, सामनामकमुद्गीथं गायति। तत्कुत इत्यत आह यत्साम इति। तस्मादित्यस्य पूर्ववदर्थः। अप्राणन्नपानन्नित्युक्त्या व्यानेनैव निवर्तयतीति सूचितम् ॥४॥

न केवलं वागादीनां प्रवर्तकत्वादेव व्यानत्वेन—उद्गीथोपास्तिः कार्या। किन्तु, प्रागभिहितादन्यान्यपि यानि वीर्यवन्ति प्रयत्नाधिक्यसाध्यानि कर्माणि सन्ति तस्मादपीत्याह। अत इति। अतः प्रागभिहितादन्यान्यपि यानि वीर्यवन्ति कर्माणि सन्ति । कानि तानि । यथाग्नेर्मन्थनं निर्घर्षेणोत्पादनम्। आजेर्मर्यादायाः सरणमवनम् । आजेः संग्रामस्यार्थं सरणं गमनं वा। दृढस्य धनुष आयमनम्—आकर्षणमित्यादीनि तान्यपि अप्राणन्ननपानन् करोति, अतो व्यान एव सर्वप्रवर्त्तकतया सर्वोत्तम इति भावः। एतस्य हेतोरेतस्मात्कारणाद् व्यानत्वेन रूपेणोद्गीथमुपासीत ॥ ५ ॥

**अथ खलूद्गीथाक्षराण्युपासीतोद्गीथ इति प्राण एवोत्प्राणेनह्यु त्तिष्ठति। वाग्गीर्वाचोहि गिर इत्याचक्षतेऽन्नं थमन्नेहीदं सर्वं स्थितम् ॥ ६ ॥ द्यौरेवोदन्तरिक्षं गीः पृथिवी थमादित्य एवोद्वायुर्गीरग्निस्थं सामवेद एवोद्यजुर्वेदो गीरृग्वेदस्थं दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति, य एतान्येव विद्वान्नुद्गीथाक्षराण्युपास्त उद्गीथ इति ॥ ७ ॥**

सम्प्रति—त्रीण्युद्गीथनामानुप्रविष्टान्यक्षराण्युपासीत इत्याह । अथेति। तान्येव दर्शयति। प्राणएवोत्—उदित्यक्षरे प्राणदृष्टिः कार्येत्यर्थः। तत्र कारणं निर्वक्ति। प्राणेन ह्यु त्तिष्ठतीति। हि यस्मात् प्राणेनेदं जगदुत्तिष्ठति। वाक् गीः। गीइत्यक्षरे वाग्बुद्धिर्कार्य्या। कुतः। वाचो हि गिर इत्याचक्षते विद्वांसः। थशब्दवाच्यमाह। अन्नमिति। थमित्यक्षरे अन्नदृष्टिः कार्या। कुतः। अन्ने हीदं जगत्स्थितम् ॥६॥ प्रकारान्तरेणाप्युद्गीथनामानुप्रविष्टाक्षराणामुपास्तिमाह। द्यौरेवोदिति। उदित्यक्षरे द्यौर्बुद्धिकार्या। एवमग्रेऽपि योज्यम्। उक्तरूपेणोपासनायाः फलमाह। दुग्ध इति। अस्मै = उपासकाय। वाग्दोहं वाचः फलं दुग्धे। कोऽसौ वाग्दोहः यो वाचो दोहः वाक्साध्यफलमित्यर्थः। फलान्तरमपि निर्वक्ति। अन्नवानिति। स उपास-

कोऽन्नवानन्नादश्चान्नादनसमर्थश्च भवति । य उपासक एतानि प्रागुपदर्शितानि, उद्गीथाक्षराणि, एवं प्रागुपदर्शितप्रकारेणोपास्त इत्यर्थः ॥७॥

**अथ खल्वाशीःसमृद्धिरुपसरणानीत्युपासीत येन साम्ना स्तोष्यन्स्यात्तत्सामोपधावेत् ॥ ८ ॥ यस्यामृचि तामृचं यदार्षेयं तमृषिं यां देवतामभिष्टोष्यन् स्यात्तां देवतामुपधावेत् ॥९॥ येन छन्दसा स्तोष्यन् स्यात्तच्छन्दमुपधावेद्येन स्तोमेन स्तोष्यमाणः स्यात्तं स्तोममुपधावेत् ॥ १० ॥ यां दिशमभिष्टोष्यन् स्यात्तां दिशमुपधावेत् ॥११॥ आत्मानमन्तत उपसृत्य स्तुवीत कामं ध्यायन्नप्रमत्तोऽभ्याशो ह यदस्मै स कामः समृध्येत यत्कामः स्तुवीतेति यत्कामः स्तुवीतेति॥ १२ ॥**

**इति प्रथमाध्यायस्य तृतीयखण्डः ॥ १ ॥**

काम्यसमृद्धिहेतुकोपासनमाह । अथेति । आशीः समृद्धिः । आशिषः काम्यस्य समृद्धिर्येन स आशीःसमृद्धिः । कामसमृद्धिहेतुरुच्यते, इति शेषः। उपसारयन्तीष्टमित्युपसरणानीत्युपासीत इत्यर्थः। उपास्तिप्रकारं दशयति । येनेति । पुमान् येन साम्ना सामविशेषेण स्तोष्यन् स्तोत्रं करिष्यन् स्यात्। तत्सामोपधावेत्=चिन्तयेत्, उपासीत ॥ ८॥ यस्यामृचि आरूढेन साम्ना स्तोष्यन् स्यात्तामृचमुपधावेत्=चिन्तयेत्, यदार्षेयं=येन ऋषिणा दृष्टं साम स्तोतुमिष्टं तमृषिमुपधावेत् चिन्तयेत् यां देवतामभिष्टोष्यन् स्यात् सम्यक्स्तोत्रं करिष्यन् स्यात् तां देवतामुपधावेत् ॥ ९ ॥ येनच्छन्दसा गायत्र्यादिना स्तोष्यन्स्यात्तच्छन्द उपधावेत् । येन स्तोमेन त्रिवृत्पञ्चदशादिलक्षणर्कसङ्ख्याविशेषेण सोमयागे प्रसिद्धेन स्तोष्यमाणः स्यात्तं स्तोममुपधावेत् ॥ १० ॥ यां दिशां दिग्देवतामभिष्टोष्यन्स्यात्तां दिशमुपधावेत् ॥ ११ ॥ उक्तं सर्वं निधाय । अन्ततः, अन्ते आत्मानमपि स्वात्मानमपि ब्रह्मात्मकमुपसृत्य ध्यात्वा आत्मन इदं ध्यायन्नप्रमत्तः स्वरोष्मव्यंजनादिभ्यः प्रमादमकुर्वन्, उद्गाता स्तुवीत । पवमानादि-

स्तोत्रमारभेतेत्यर्थः। यत्कामः। यः कामो यस्य स यत्कामः पुमान् देवतां स्तुवीत सकामः। अस्मै स्तावकायाभ्याशःशीघ्रं समृध्येत। सम्यक्परिपूर्णो भवति। द्विरुक्तिरादरार्था॥ इति शब्दो विद्यासमाप्त्यर्थः॥ खण्डत्रयस्यैकार्थप्रतिपादकत्वेनैकविद्यात्वम्। एकार्थश्चोद्गीथोपास्तित्वम्॥१२॥

इति प्रथमाध्यायस्य तृतीय खण्डः॥ ३॥

---

ओमित्येतदक्षरमुद्गीथमुपासीतोमिति ह्युद्गायति तस्योपव्याख्यानम् ॥ १ ॥ देवा वै मृत्योर्बिभ्यतस्त्रयीं विद्यां प्राविशंस्ते छन्दोभिराच्छादयन्यदेभिरच्छादयंस्तच्छन्दसां छन्दस्त्वम् ॥ २ ॥ तानु तत्र मृत्युर्यथा मत्स्यमुदके परिपश्येदेवं पर्यपश्यदृचि साम्नि यजुषि। तेनु वित्त्वोर्ध्वा ऋचः साम्नो यजुषः स्वरमेव प्राविशन् ॥ ३ ॥ यदा वा ऋचमाप्नोत्योमित्येवातिस्वरत्येव सामैवं यजुरेष उ स्वरो यदेतदक्षरमेतदमृतमभयं तत्प्रविश्य देवा अमृता अभया अभवन् ॥ ४॥ स य एतदेवं विद्वानक्षरं प्रणौत्येतदेवाक्षर ꣳ स्वरममृतमभयं प्रविशति तत्प्रविश्य यदमृता देवास्तदमृतो भवति ॥ ५ ॥

इति प्रथमाध्यायस्य चतुर्थखण्डः ॥ ४ ॥

उद्गीथोपास्तेरुद्गीथाक्षराणामुपासनया व्यवहितत्वात् प्रकरणविच्छेद शङ्कामपनेतुमत्रोद्गीथोपासनस्य पुनरभिधानम्। ओमित्येतदक्षरमिति एतस्य वचनस्य पूर्ववदर्थोऽवसेयः॥ १॥ देवा मृत्योः मरणात् बिभ्यतः भीताः सन्तः त्रयीविद्यां वेदविहितं कर्म प्राविशन्, प्रारब्धवन्तः। ततस्ते देवाश्छन्दोभिः यस्मिन् कर्मणि ये मन्त्रा विनियुक्तास्तैः मन्त्रैः। आत्मानं च्छादितवन्तः। तत्र ज्ञापकमाह। यदिति। एभिः च्छन्दोभिराच्छदयन्निति। यत् छन्दसां देवाच्छादकत्वं तदेव च्छन्दसांच्छन्दस्त्वंच्छन्दःशब्दप्रवृत्तिनिमित्तम् ॥ २॥

तान् तत्र वैदिकानुष्ठानपरान्। उच्छब्दोऽप्यर्थकः। यथा लोके कश्चनपक्षिविशेषो मत्स्यमुदके पश्येदेवं पर्यपश्यत्। तथा मृत्युः त्रयीविहितकर्मपरान्-

देवान् कर्मभ्रंशसमयं प्रतीक्ष्य गृहीतुमैच्छत् । कुत्र ददर्श इत्यत आह । ऋगिति । ऋग्यजुः सामसम्बन्धिकर्मणीत्यर्थः । ते देवाः वित्वा मृत्यु रस्मान् दृष्टवान् इति । ज्ञातवन्तः । विदित्वा ऋचः साम्नो यजुषः एतत्सम्बन्धि-कर्मभ्यः, ऊर्ध्वा व्यावृत्ताः स्वरमेवानुप्राविशन् । स्वरशब्दवाच्यमोंकारमु-पासितुं प्रवृत्ताः ॥ ३ ॥ न स्वरशब्दस्य प्रणववाचकत्वमित्याशङ्क्य परिह-रति । यदा वेति । लोको यदा वा ऋचमाप्नोति तदा ओमित्येव स्वरति । एवं सामैवं यजुरिति यदा सामयजुश्चाप्नोति तदोमित्येव स्वरति । केवलं ऋगादीनां स्वरक्षणेऽसामर्थ्यमालोच्य देवाः सम्प्रत्यपि प्रणवपूर्वं ऋगादीन् जपन्तीति भावः । स्वरशब्दं व्याचष्टे । एष इति । यदेतत्सर्वसन्निहितत्वादेत-न्नामकमक्षरमविनाशि ब्रह्मैष उ एष एव स्वरः । तन्महिमानं दर्शयति । एतद-मृतमिति । एतद् ब्रह्मामृतं नित्यमुक्तम् । अभयं भयशून्यम् । अभयप्रदं वा यद्यत्रापि मृत्युर्देवान् परिपश्येत्तर्हि को विशेष ऋगादिभ्यः स्वरस्येत्यत आह तत्प्रविश्य इति । तत्—अमृतत्वाभयत्वादिविशिष्टमक्षरं स्वरशब्दवाच्यं-प्रविश्य । देवता अमृता अभवन्नित्यर्थः ॥ ४ ॥ न केवलं गीर्वाणानामेव-प्रणवोपास्तिः—अमृतत्वाभयत्वप्रदा । किन्तु, अद्यतनानां योग्यानां जना-नामपीत्याह स य इति ।

योऽधिकारिविशेषः एतदक्षरं प्रणवमेवं देवानाममृतप्रदत्वेन विद्वा-नक्षरं प्रणौति स्तौति । स एतदेवाक्षरं स्वरं स्वरमणमोंकाररूपस्वर-वाच्यममृतभयं प्रविशति । किन्ततः इत्यत आह तत्प्रविश्येति । यत्तच्छब्दौ यथातथाशब्दार्थौ ॥ यत् प्रविश्य देवा यथा अमृता अभ-वंस्तथा तं प्रविश्य अमृतो भवतीत्यर्थः ॥ ५ ॥

इति प्रथमाध्यायस्य चतुर्थः खण्डः ।

---

अथ प्रथमाध्यायस्य पञ्चम खण्डः ।

**अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इत्यसौ वा आदित्य उद्गीथ एष प्रणव ओमिति ह्येषस्वर-न्नेति ॥१॥ एतमु एवाहमभ्यगासिषं तस्मान्मम त्वमेकोऽसीति**

**ह कौषीतकिः पुत्रमुवाच रश्मीं स्तंपर्यावर्त्तयाद्बहवो वैते भविष्यन्तीत्यधिदैवतम् ॥ २ ॥**

प्रणवोद्गीथोरुपास्तिः प्रागभिहिता । तत्र प्रणवोद्गीथयोर्भेदो वा । अभेदोवेति विचिकित्सा जायते, तदपनोदायाभेदपरं मन्त्रमुदाहरति । अथ खल्विति । अमृताभयगुणकाक्षरोपासनानन्तर्य्यमथशब्दार्थः । प्रणवोद्गीथयोरेकत्वे वैदिकप्रसिद्धप्रदर्शनार्थं खल्वित्युक्तम् । य उद्गीथः स प्रणवो । यः प्रणवः, स उद्गीथः । एतेन तयोरैक्यं समर्थितं भवति । आदित्यदृष्ट्योद्गीथोपास्तिः कर्तव्येत्याह । असौ वा आदित्य इति । आदित्य उद्गीथ एव एष प्रणवः । कथं पुनः । उद्गीथादित्ययोरेकत्व मित्यत आह ओमितीति । एष आदित्य ओमित्यनुज्ञां यः स्वरन् कुर्वन् प्राणिनां प्रवृत्यर्थमुद्गायति । स्वृशब्दोपतापयोरित्यस्माद्धातोर्निष्पन्नः स्वरन्निति । तस्मात् प्रणवत्वं सवितुः । अतएवोद्गीथश्चेतिभावः ॥ १ ॥

आदित्यदृष्ट्योद्गीथस्योपास्तावेकपुत्रत्वं बहुरश्मिगुणविशिष्ट्या तस्योपासनेऽनेकपुत्रत्वं भवतीत्यत्र विश्वासजननायाख्यायिकामाह— एतमिति । कुषीतकस्यापत्यं कौषीतकिः । स्वपुत्रमुवाच किमिति । एतमादित्यमेवोद्गीथमेवाहम् । अभ्यागासिषम् । आभिमुख्येन गीतवानस्मि । नत्वनेकरश्मिगुणविशिष्टतयोपासितवानस्मि तस्मात् कारणात् मम त्वमेकोऽसि पुत्र इति । तस्मादनेकरश्मिविशिष्टमादित्यं पर्यावर्त्तयात् । पर्य्यावर्तयोपासनं कुरु तवरश्मिबहुत्वज्ञानमहिम्ना बहवः पुत्राः भविष्यन्ति । पर्यावर्त्तयादिति पुरुषव्यत्ययश्छान्दसः । लेटिलोटो डाटौ इत्याडागमः । वक्ष्यमाणेऽध्यात्मेऽवधानायाभीतं देवता विषयं दर्शनमुपसंहरति । इत्यधिदैवतमिति ॥ २ ॥

**अथाध्यात्मम्, य एवायं मुख्यप्राणस्तमुद्गीथमुपासीतो मितिह्येषस्वरन्नेति ॥३॥ एत मु एवाहमभ्यागासिषंतस्मान्म मत्वमेकोऽसीतिहकौषीतकिः पुत्रमुवाच प्राणस्त्वं भूमानमभिगायदाद्बहवो वै मे भविष्यन्तीति ॥ ४ ॥**

अथ खलु य उद्गीथः स प्रणवो यः प्रणवः स उद्गीथ इति होतृषदनाद्धैवापिदुरु द्गीथमनुसमाहरतीत्यनुसमाहरतीति ॥५॥

इति प्रथमाध्यायस्य पञ्चम खण्डः ॥५॥

अथ = अधिदेवतानन्तरम्। अध्यात्ममुपदिश्यत इति शेषः। यएवा-यमित्यादिवचनस्य पूर्ववदर्थोऽवसेयः । एषः प्राणः वागादिप्रवृत्त्यर्थं स्वरन्नोमिति, अनुज्ञां कुर्वन्नेवेति तस्मात्। प्राणएव प्रणव उद्गीथश्चे-त्यर्थः ॥ ३ ॥

एतमु एवाहमित्यादिपूर्ववदर्थकम् । प्राणांस्त्वं भूमानं बहुत्वोपेतं वागादिकञ्चा भिगायतात्। अभिगाय सम्यग्गानं कुरु । केनाभिप्रायेण मम बहवः पुत्राः भविष्यन्ति वै इत्यभिप्रायेण गानं कुर्वित्यर्थः ॥ ४ ॥

प्रणवोद्गीथयोरेकत्वं दर्शयति। अथ खल्विति । तयोरेकत्व-विज्ञानस्य फलमाह। होतृषदनादिति। अत्र पूर्वपदादिति षत्वम्। होतृष-दनात् । होतृषदनं स्थानं होता यत्रस्थः शंशति तद्धोतृषदनं तेन हौत्रं कर्म लक्ष्यते, होतृकर्मणः शंशनादित्यर्थः। दुरुद्गीतं दुष्टमुद्गीतमुद्गानं कृतम् । उद्गात्रा। होता स्वीयोद्गीथप्रणवैकत्वविज्ञानमाहात्म्यादनु-समाहरति। समादधति। अदृष्टं करोतीति । हवेतिनिपातद्वयमवधार-णातिशयफलकं क्रियापदेन सम्बध्यते। अपिशब्दस्तु निष्ठानन्तरभावि-तया नेतव्यः ॥ द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ ५ ॥

इति प्रथमाध्यायस्य पञ्चमखण्डः ॥ ५ ॥

—०:*:०—

इयमेवर्गग्निः सामतदेतदेत स्यामृच्यध्यूढं साम तस्मा-दृच्यध्यूढं साम गीयते इयमेव साऽग्निरमस्तत्साम ॥ १ ॥

अन्तरीक्षमेवर्ग्वायुः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मा-दृच्यध्यूढं साम गीयतेऽन्तरीक्षमेव सा वायुरमस्तत्साम ॥२॥

द्यौरेवर्गादित्यः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मा-दृच्यध्यूढं साम गीयते द्यौरेव सादित्योऽमस्तत्साम ॥ ३ ॥

न क्षत्राण्येवर्क् चन्द्रमाः साम तदेतदेतस्यामृच्य ध्यूढं साम तस्मादृच्यध्यूढं साम गीयते नक्षत्राण्येव सा चन्द्रमा अम-स्तत्साम ॥ ४ ॥

अथ यदेतदादित्यस्यः शुक्लं भाः सैवर्गथयन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यू रूढं साम गीयते ॥ ५ ॥

पुत्रादिफलप्राप्तये, उद्गीथोपास्तिः प्रागभिहिता सम्प्रति, अ-शेषैश्वर्य्यलब्ध्यर्थमधिदैवाध्यात्मभेदेनोद्गीथविषयक मेवापूर्वोपास्तिर्विधि-त्स्यते एतत्खण्डेन । तत्र तदङ्गभूतोपास्तिस्तावद् विदधाति इयमेवेति । ऋचि पृथ्वीदृष्टिर्विधेया। अग्निः साम साम्निअग्निदृष्टिश्चकार्या । कथं मेतन्निश्चीयते । इत्यत आह तदेतदिति । तदेतत्, अग्न्याख्यं साम, एतस्यां, पृथिवीरूपायामृचि,अध्यूढमधिगतमुपरिस्थितमिति यावत् । अत एवाद्यापि ऋगारूढमेव साम गीयत इत्याह तस्मादिति । साम-नामावयवभूतयोः साशब्दामशब्दयोः पृथिव्यग्निदृष्टिर्विधेयेत्याह । इयमेवसा–अग्निरम् । इयमेव पृथिवी सा सामनामार्धवाच्या इतरार्ध-शब्दवाच्योऽग्निरम इत्यर्थः । तत् साम इति । तत् तस्मात् सा अम इत्येतदुभयं मिलित्वा साम व्यवहारो भवति ॥ १ ॥ अन्तरिक्षमेव-ऋक् वायुः साम इति प्रागुक्तरीत्यार्थोऽवसेयः ॥ २ ॥ नक्षत्राण्येव ऋक्चन्द्रमाः इत्यादिकं पूर्ववत् ॥ ३ ॥ उपासनान्तरमाह । अथेति । आदित्यस्य यद्रूपं शुक्लं भाः तेजो दृश्यते । सैव ऋक् ऋचि तद्दृष्टिः कर्त्तव्याः । आदित्यस्य यन्नीलं नेदमौपचारिकं किन्तु परः परम् कृष्णमतिशयेन कृष्णं तत् साम तदेतत् । एतत् साम एतस्यां ऋचि अध्यूढमधिगतम् । तस्मात् कारणात् ऋचि–अधिरूढं साम गीयते ।

अथ यदेवैतदादित्यस्य शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्सामाथ य एषोऽन्तरा-

दित्ये हिरण्मयः पुरुषो दृश्यते हिरण्यश्मश्रुर्हिरण्यकेश: ॥ आप्रणखात्सर्व एव सुवर्णः ॥ ६ ॥ तस्य यथा कप्यासं पुण्डरीकमेवाक्षिणी तस्योदिति नाम स एष सर्वेभ्यःपाप्मभ्यः उदित उदेति ह वै सर्वेभ्यः पाप्मभ्यो य एवं वेद ॥ ८ ॥

अथ य देवेति अस्यार्थः पूर्ववत् ॥ ५ ॥ एवं ऋचि पृथिव्यादि दृष्टिं साम्नि अग्निवाय्वादित्यचन्द्रादिगतनीलभारूपदृष्टिं विधायाह। अथएष इति । अथ शब्दः प्रकरणान्तरद्योतकः । य एष आदित्ये आदित्यमण्डल एव "हिरण्मयः सुवर्णवर्ण उज्ज्वलो वा इतरविलक्षणः । पूर्णानन्दस्वरूपः तदुक्तं हिरुकसुखं हिरण्यं स्यात् वाह्यानन्दात् पृथग्यतः । आधिक्यार्थे मयड् यस्मादधिकानन्दरूपकः ।" रत्यानन्दौ पूर्णनित्यौ हि तौ तेन हिरण्मयः सुवर्णवर्णतया वासुदेवो हिरण्मय इति पुरुषो दृश्यते तदुपासकैः । तदुक्तम् , दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिरिति । न केवलं भगवतो वासुदेवस्य हिरण्मयत्वं किन्तु तदवयवानामपीत्याह । हिरण्यश्मश्रुरिति । आप्रणखात् । प्रणखमारभ्य सर्वावयव एव सुवर्णः सुवर्ण वर्णः पूर्णानन्दो वा ॥६॥ सर्व एव सुवर्ण वर्ण इति विशेषणेन सर्वावयवानां सुवर्णवर्णत्वे प्राप्ते तदन्तःपातिचक्षुषोऽपि तथात्वं प्राप्तं तत्र विशेषं दर्शयति–तस्येति॥ आदित्यमण्डलान्तर्गतपुरुषस्य कप्यासं कं पिवन्नालं सम्बन्धि अम्लानमिति यावत् , कं पिवतीति कपिः सूर्य्यः तेनास्यते क्षिप्यते विकास्यते । इति कप्यासमिति वा पुण्डरीकं रक्तपद्मम् ।। तद्वदक्षिणी वर्त्तेते । तस्य रहस्य नामाह–तस्येति । तस्य पुरुषस्योदिति नामकत्वं कस्मादुच्यत इत्यत आह–स एष सर्वेभ्यः पाप्मभ्य उदित उद्गतो यतः सर्व पापोद्गतत्वादुदिति नामकत्वं तस्येत्यर्थः ॥ एवं विदः फलमाह–उदेतीति । यो विद्वान् एवं पापोद्गत्वप्रवृत्तिनिमित्तकोन्नामकत्वविशिष्टं भगवन्तं वेद स सर्वेभ्यः पाप्मभ्य उदितः उद्गतो भवति ह वेति निपातौ प्रसिद्धार्थकौ ॥ ७ ॥

**तस्यर्क् च साम च गेष्णौ तस्मादुद्गीथस्तस्मात्त्वेवोद्गातैतस्य हि गाता स एष ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां चेत्यधिदैवतम् ॥ ८ ॥**

**इति प्रथमाध्यायस्य षष्ठः खण्डः ॥६॥**

---

तस्यादित्यमण्डलान्तर्वर्त्तिभगवतो वासुदेवस्य ऋक् च साम च परस्परसमुच्चये च शब्दौ। गेष्णौ गायकौ ऋक् साम गेयत्वोक्त्या सर्वात्मकत्वमभिहितं भवति। एतस्य भगवतः प्रसिद्धमुद्गीथ नामत्वमत एव निष्पन्नमित्याह तस्मादिति । यस्मात्तस्योदिति नाम ऋक् साम गेष्णत्वात् तस्मात्तस्य, परमात्मन उद्गीथत्वमुपपद्यते। उच्चासौ गीयते इति उद्गीथ इति व्युत्पत्तेः। उद्गीथत्वान्न केवलं तस्य परमात्मनः ऋक् सामभ्यां गेष्णत्वात्किन्तूद्गातुरपि । तन्नाम गीयते तस्मादपीत्यत आह तस्मादिति । हि यस्मात् एतस्य यथोक्तस्योन्नाम्नोद्गाता तस्मात्प्रकृतस्योन्नाम्नो भगवतो गानात् उद्गातुरुद्गातेति नाम प्रसिद्धिर्युक्ता। तस्यैव भगवतः सामर्थ्यं दर्शयति । एष इति । आदित्यमण्डलवर्त्तिर्हिरण्मयः पुरुषो भगवान् येचामुष्मात्पराञ्चो लोकाः स्वर्गादयः स्तेषां चेष्टे ऽधिपतिर्न केवलं लोकानां नियन्तृत्वं किन्तु गीर्वाणादीनामपीति च शब्दाल्लभ्यते देवकामानाम्। आदित्यलोकाद्युपरितनलोकेष्वधिष्ठातारो ये देवास्तेषां कामाः काम्यमानफलविशेषास्तेषां दानार्थं चेष्टे ?समर्थो भवति। न हि निरङ्कुशं लोककामेशितृत्वं परस्मात्पराद्ब्रह्मणो वासुदेवादन्यत्र सम्भवति "एष सर्वेश्वर इति" श्रुतेरिति भावः ॥ इत्यधिदैवतम्। देवताविषयं देवस्योद्गीथस्य स्वरूपमुक्तम् ॥ ८ ॥

इति प्रथमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

अथ प्रथमाध्यायस्य सप्तमः खण्डः।

अथाध्यात्मं वागेवर्क् प्राणः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं सामगीयते वागेव सा प्राणोऽमस्तत्साम ॥१॥

अथाधिदैवतोपास्त्यनन्तरम्, अध्यात्ममुपदिश्यते। वागेव ऋक् प्राणः साम ऋचि वाग्दृष्टिः साम्नि प्राणदृष्टिः कर्त्तव्या कुत इत्यत आह। तदेतदिति। प्राणाख्यया साम=एतस्यां वाग्रूपाया मृचि, अध्यूढमधिगतम्। अत एवाद्यापि ऋगारूढं गीयते-इत्यत आह। तस्मादिति। वागेव सा साम नामार्द्धवाच्या। प्राणोऽम इतरार्द्धं शब्दवाच्यः प्राणोऽमः तत् साम तत् तस्मात् साऽम इत्येतदुभयं मिलित्वा साम=साम इति व्यवहारो भवति॥१॥

चक्षुरेवर्गात्मा साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढंसाम गीयते चक्षुरेव साऽऽत्माऽमस्तत्साम॥२॥

श्रोत्रमेवर्ङ् मनः साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते श्रोत्रमेव सा मनोऽमस्तत्साम।३॥

अथ यदेतदक्ष्णः शुक्लं भाः सैवर्गथ यन्नीलं परः कृष्णं तत्साम तदेतदेतस्यामृच्यध्यूढं साम तस्मादृच्यध्यूढं साम गीयते। अथ यद् वैतदक्ष्णः शुक्लं भाः सैव साऽथ यन्नीलं परः कृष्णं तदमस्तत्साम॥४॥ अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते सैवर्क्तत्साम तदुक्थं तद्यजुस्तद्ब्रह्म तस्यैतस्य तदेव रूपं यदमुस्य रूपं यावमुस्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम॥१५॥

एतेषां वचनानामक्षरार्थो प्राग्दर्शितरीत्याऽवसेयः। अध्यात्म ऋचि वाक् चक्षुः श्रोत्रादिगतशुक्लभास्वरत्वदृष्टिः साम्नि प्राण-

अग्निवाधादित्यचन्द्रादित्यगतनीलभारूवत्वदृष्टिश्च कार्येति भावः ।।२।३।४।। उद्गीथाख्यभगवत्स्वरूपमाह । अथेति । अध्यात्मक् वाक् चक्षु-राद्यानन्तर्यमथ शब्दार्थः । स एष पुरुषः, उद्गीथाख्यो भगवान् अद्यन्तर्वर्ती दृश्यते तदुपासकैरिति शेषः । तस्य माहात्म्यं निर्वक्ति-सैवेति । स एवयोऽन्तरक्षिणि पुरुषो दृश्यते सैवसा ऋक् पादै-कवद्धाक्षरात्मिका या ऋक् तदात्मा पुरुषो भगवान् ऋक् शब्दस्य-स्त्रीलिङ्गत्वात्तदपेक्षया सेत्युक्तम् तत्साम स्तोत्रं तदात्मकः । तदुक्थं उक्थादिशास्त्रात्सा ब्रह्म अत्रोक्थस्य ऋक्यजुःसामापेक्षया पृथगुक्तिः गोवलीवर्दन्यायेन द्रष्टव्यातद्यजुः स्वाहा स्वधा वषडादिसर्वमेवाग् यजुः ब्रह्म चक्षुस्थस्यभगवतःकीदृशंरूपादिकमित्यतोयादृशंसूर्यस्थस्यता-दृशमेवापीत्याह- तस्येति । आदित्यान्तर्वर्तिनो भगवतोयद्धिरण्यमयत्वा-दिरूपमभिहितं तत्सर्वं चक्षुस्थस्य भगवतइत्यर्थः ।।५।।

**स एष येचैतस्मादर्वाञ्चोलोकास्तेषां चेष्टे मनुष्यकामाना-ञ्चेति तद्य इमे वीणायां गायन्त्येतं ते गायन्ति तस्मात्तेधनस-नयः ॥ ६ ॥ अथ य एतदेवं विद्वान् साम गायत्युभौ स गायति सोऽमुनैव स एष येचामुष्मात् पराञ्चो लोकास्तांश्चाप्नोति देवका-मास्तांश्च ॥ ७ ॥ अथानेनैव येचैतस्मादर्वाञ्चो लोकास्तांश्चा-ऽऽप्नोति मनुष्यकामांश्च तस्मादु हैवं विदुद्गाता ब्रूयात् ।।८।। कन्ते काममागायानीत्येष ह्येव कामगानस्येष्टे यएवं विद्वान्साम-गायति सामगायति ।। ९ ॥**

**इति प्रथमाध्यायस्यसप्तमः खण्डः ।।७।।**

स एषोऽक्षिस्थो भगवान् वासुदेवो येचास्मादर्वाञ्चो लोकाः पाता-लाद्यास्तेषां चेष्टे तेषामधिपतिर्भवति न केवलमस्य लोकस्येति । च शब्दार्थः मनुष्यकामानां चेष्टे ।। मनुष्याभिलषितफलदानाय समर्थः । उक्तार्थमनु-भवारूढं कर्त्तुमाह । तद्य इति । तत् तस्मात् मनुष्यकामदत्वात् भगवतः । य इमे प्रसिद्धा गायका वीणायां गायन्ति–ते एतमक्षिस्थं पुरुषं भगवन्त-मेव गायन्ति । तस्मात् भगवद्गायकत्वादेव ते गायका धनसनयः ।

सनिर्लाभः । धनानां सनिः प्राप्तिर्येषां ते धनसनयः । यतो भगवतः गायका अतो धनलाभवन्त इत्यर्थः ॥ ६ ॥ य उक्तज्ञानपुरःसरं साम गायति तस्य सामर्थ्यं दर्शयति । अथेति । य उद्गाता एतदधिदैवमध्यात्मं भगवत्स्वरूपम् । एवमुक्तप्रकारेण विद्वान् गायति स उभौ आदित्यचक्षुःस्थितौ भगवन्तावेव गायति । किं स्वसामर्थ्यप्रयुक्तं गानं नेत्याह । सोऽमुनैवेति स उद्गाता गायतीतियत् । तदमुनैव भगवत्प्रेरणयैव । एवंविदः फलान्तरं दर्शयति । स एष इति । स एष भगवदुद्गाता । येचामुष्मादन्तरीक्ष-लोकात् पराञ्चो लोकाः स्वर्गादयो वैकुण्ठादयश्च तांश्चाप्नोति एतल्लोक-प्राप्तिश्चशब्दार्थः । देवकामांश्च देवकाम्यात् भोगांश्चाप्नोति ॥ ७ ॥ अद्य-न्तर्वर्तिन आदित्यान्तर्वर्तिनश्च भगवत उपासनया सर्वलोकावाप्तिरु-दनुग्रहादेवेत्याह । अथानेनैवेति । अद्यादित्यस्थभगवदनुग्रहेण ये चास्मादर्वाञ्चोलोकास्तांश्चाप्नोति उद्गानेन प्रापयति । चशब्दार्थः पूर्ववत् । मनुष्यकामांश्च नृलोककामानभीष्टान् प्रापयतीत्यर्थः । तस्मादेवंविदुद्गातुरति-समर्थत्वादेवंविदुद्गाता यजमानं प्रतिब्रूयात् ॥ ८ ॥ किं तद्वचनमित्यत आह । किमिति । ते तव कं काममुद्दिश्यागायानि उद्गानं कुर्यामिति । नैतद्वचनमात्रम् । य एवं विद्वान् साम गायति एष एव हि यजमानकाम-गानस्येष्टे उद्गानेन यजमानेष्टप्रदानसमर्थः । द्विरुक्तिः पूर्ववत् । एतत्खंडा-न्तर्गतवाक्यविषयकमन्तराधिकरणमत्रानुसन्धेयम् । ग्रन्थबाहुल्यभयेन तदधिकरणार्थो न प्रदर्शितः ॥ ९ ॥

इति प्रथमाध्यायस्य सप्तमः खण्डः ॥७॥

---

प्रथमाध्यायस्याष्टम खण्डः ॥

**त्रयोहोद्गीथे कुशला बभूवुः शिलकः शालावत्य श्चैकि-तायनो दाल्भ्यः प्रवाहणो जैवलिरिति ते होचुरुद्गीथे वै कुशलाः स्मोहन्तोद्गीथे कथां वदाम इति ॥१॥ तथेति ह समु-पविविशुः सह प्रवाहणो जैवलिरुवाच भगवन्तावग्रे वदतां ब्राह्मणयोर्वदतोर्वाचꣳ श्रोष्यामीति ॥ २॥ स ह शिलकः शाला-वत्यश्चैकितायनं दाल्भ्यमुवाच हन्त त्वा पृच्छानीति पृच्छेति हो-**

**वाच ॥ ३ ॥ का साम्नो गतिरितिस्वर इति होवाच स्वरस्य कागतिरिति प्राण इति होवाच प्राणस्य कागतिरित्यन्नमिति होवाचान्नस्य का गतिरित्याप इति होवाच ॥४॥**

उद्गीथोपासनं फलप्रदर्शनमुखेन निरूप्य तन्मीमांसारूपाख्यायिकया, उद्गीथाख्यभगवदुपासनं समर्थयते। त्रय इत्यादि खण्डेन। त्रय उद्गीथे उद्गीथविषये कुशला वभूवुर्ह । के ते ? शिलको नामतः। शालावत्यां भवः शालावत्यः। चिकितायनस्यापत्यं चैकितायनः। दाल्भ्यो दाल्भ्यगोत्रापत्यं दाल्भ्यो नामत इति वा। प्रवाहणो नामतः, जिवलस्यापत्यं जैवलिरिति। त्रय इति सम्बन्धः। ते त्रयोऽन्योन्यमूचुर्ह। किमिति वयमुद्गीथविषये कुशलाः निपुणाः स्मोऽतो हन्त यद्यनुमतिर्भवतां तर्हि-उद्गीथकथां वीतरागकथारूपवादकथां वदाम इति॥१॥ तथास्त्वित्युक्त्वा ते ह समुपविविशुरुपविष्टवन्तः। तेषां मध्ये प्रवाहणो जैवलिः शिलकचैकितायनौ प्रति उवाचह। किमिति। भगवन्तौ पूजार्हावग्रे वदेताम्॥ अहं ब्राह्मणयोर्वदतोर्वाचं श्रोष्यामीति। अनेन प्रवाहणस्य क्षत्रियत्वमवगम्यते॥ २॥ एवमुक्तः सशिलकः शालावत्यश्चैकितायनं दाल्भ्यमुवाच। हन्त! यद्यनुमतिस्तर्हि त्वामहं पृच्छामीति। एवमुक्तो दाल्भ्यः पृच्छेति होवाच॥ ३॥ प्रश्नोत्तरक्रमं दर्शयति। का साम्न इति। गतिरयनं प्राप्यम्। इति पृष्टे स्वर इति होवाच। स्वरात्मकत्वात्साम्नः। स्वरस्य कागतिरितिपृष्टे प्राण इति होवाच। प्राणस्य कागतिरिति पृष्टे, अन्नमिति होवाच। अन्नावष्टम्भोहिप्राणः "शुष्यति वै प्राणं ऋतेऽन्नादि"तिश्रुतेः। अन्नस्य कागतिरित्याप इति होवाच, अप्सम्भवादन्नस्य॥ ४॥

**अपां कागतिरित्यसौ लोक इति होवाचामुष्यलोकस्य का गतिरिति न स्वर्गलोकमतिनयेदिति होवाच स्वर्गं वयं लोकं सामभिसंस्थापयाम स्वर्गसंस्तावं हि सामेति ॥ ५ ॥**

**त ँ्ह शिलकःशालावत्यश्चैकितायनं दाल्भ्यमुवाचाप्रतिष्ठितं वै किल ते दाल्भ्य साम यस्त्वेतर्हि ब्रूयान्मूर्धा ते विपतिष्य-**

**तीति मूर्धा ते विपतेदिति ॥ ६ ॥ हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाचामुष्यलोकस्य का गतिरित्ययं लोक इति होवाचास्य लोकस्य कागतिरिति न प्रतिष्ठां लोकमतिनयेदिति होवाच प्रतिष्ठां वयं लोकं सामाभिसंस्थापयामः प्रतिष्ठा संस्तावं हि सामेति ॥ ७ ॥**

अपां कागतिरिति पृष्टे—असौ लोक इति होवाच। अमुष्माँल्लोका। देव वृष्टि प्रभवादिति भावः। अमुष्यलोकस्य कागतिरिति पृष्टे दाल्भ्य उवाच स्वर्गममु लोक इति होवाच—अतिकम्याश्रयान्तरं साम न नयेत् न प्रत्येत्। अतो वयमपि स्वर्गलोकं सामभिसंस्थापयामः। आश्रयत्वेन स्वर्गं लोकं प्रतिष्ठां सामजानीमः। स्वर्गस्य तत्त्वं हि साम। स्वर्गत्वेन संस्तवनं संस्तावो यस्य तत्साम। "स्वर्गोवै लोकः सामवेद" इति श्रुत्या स्वर्गत्वेन साम्नः सरूपमानत्वादित्यर्थः ॥ ५॥

एवमुक्तः शिलकः शालावत्यस्तं दाल्भ्यं प्रत्युवाच हे दाल्भ्य! ते तव सामस्वर्गलोकमप्रतिष्ठितं न्यायागमाभ्यामुपदेशपारम्पर्य्यमगमः। यत् कृतकं तदनित्यमिति न्यायेन स्वर्गस्यान्तवत्वान्न परायणत्वं संभवतीत्यर्थः। संप्रति प्रतिवादी आगत्यास्यां कथायां विपरीतार्थजानानस्य ते मूर्द्धा विपतिष्यति। यदि ब्रूयात् विष्पष्टं पतिष्यति। एवं ब्रुवाणस्यापराधभागिनो विदुषः शापवाक्यानुसारेण विपतेदेव न संशयः नत्वहं ब्रवीमीत्याशयः ॥ ६ ॥

एवमुक्तो दाल्भ्यो यदि मदीयं सामाप्रतिष्ठितं हन्त तर्हि अहमेतद्भगवतो वेदानि यतः। प्रतिष्ठसामगतिपरमपर्य्याविश्रान्तिभूमिम् त्वत्तो जानीयामिति प्रार्थित इत्यर्थः प्रत्युवाच शालावत्यो विद्धीतिहोवाच अमुष्य लोकस्य कागतिरितिपृष्टो दाल्भ्येन शालावत्योऽयंलोक इति होवाच। यागदानजपतपादिभिर्भूलोकस्य स्वर्गलोकं प्रति कारणत्वादितिभावः। अस्य पृथ्वीलोकस्य, कागतिरिति दाल्भ्येन

पृष्टः शिलक आह प्रतिष्ठां पृथिवीलोकमतिक्रम्य सामगतिपरम्परा-विश्रांतभूमिमन्यत्र कश्चिदपि वदेत्, अतो वयमपि तथैव ब्रूमः ।

**तं ह प्रवाहणो जैवलिरुवाचान्तवद्वै किल मते शालावत्य-साम यस्त्वे तर्हि ब्रूयान्मूर्धा ते विपतिष्यतीति ते मूर्धा विपते-दिति हन्ताहमेतद्भगवतो वेदानीति विद्धीति होवाच ॥८॥**

**इति प्रथमाध्यायस्याष्टमः खण्डः ॥८॥**

अतो वयं प्रतिष्ठां लोकं सामाभिसंस्थापयामः यस्मात्प्रतिष्ठा संस्तावं हि साम । यस्मादेनं लोकप्रतिष्ठात्वेन संस्तुतं साम तस्मादिदं सामप्रत्येतमेवलोकं प्रतिष्ठां जानीम इत्यर्थः । "इयं वै रथान्तरमिति" श्रुतेः । रथान्तरशब्दवाच्यस्य सामविशेषस्य प्रतिष्ठालोकत्वेन स्तुत-त्वात् स्वर्गस्य ज्योतिश्चक्रलग्नतया वंभ्रम्यमाणत्वात् प्रतिष्ठात्वाभावेपि पृथिव्यास्तुस्थिरत्वात् । प्रतिष्ठात्वमित्युक्तवानितिभावः ॥ ७ ॥

एवमुक्तवन्तं ह प्रवाहणो जैवलिरुवाच ।

किल ते हे शालावत्य तेत्वया ज्ञातं साम, अन्तवत् । ततः वेदानीति शिलेकेनोक्तेविद्धीति होवाच आह ॥ ८ ॥

इति प्रथमाध्यायस्याष्टमः खण्डः ॥

---

प्रथमाध्यायस्य नवमः खण्डः ॥

**अस्य लोकस्य कागतिरित्याकाश इति होवाच सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते आकाशं प्रत्यस्तं यन्त्याकाशोह्येवैभ्यो ज्यायानाकाशः परायणम् ॥ १ ॥ स एष परोवरीयानुद्गीथः स एषोऽनन्तः परोवरीयो हास्य भवति परोवरीयसो ह लोका ञ्जयति य एतदेवं विद्वान् परो-वरीयांस मुद्गीथमुपास्ते ॥ २ ॥ तꣳहैतमतिधन्वा शौनक उदरशाण्डिल्यायोक्त्वोवाच यावत्त एनं प्रयाजमुद्गीथं वेदिष्यन्ते परोवरीयो हैभ्यस्तावदस्मिंल्लोके जीवनं भविष्यति॥३॥**

अस्य पृथिवीलोकस्य कागतिरिति शिलकेन पृष्टः प्रवाहण आकाश इति होवाच । अत्राकाशशब्दस्य दीप्त्यर्थकत्वात्—भगवद्वासुदेव-परत्वम्। यत आकाशो ह वै नामरूपयोर्निर्वहितेत्यादि श्रुत्या भूताकाश-परत्वं व्यावर्त्याकाशपदस्य ब्रह्मपरत्वमभिहितम् । परस्य ब्रह्मण एव सर्वभूतोत्पादकत्वं नतु भूताकाशस्येत्याह—सर्वाणीति । सर्वाणि हवा इमानि भूतानि ( अगानि जङ्गमानि ) आकाशादेव समुत्पद्यन्ते। आकाशं प्रत्यस्तं यन्ति । प्रलयसमये तत्रैव लीयन्ते। नहि भूतानां प्रलयः भूताकाशे किन्तु, परस्मिन् भगवति वासुदेव एव, तस्मान्निश्चीयते परमात्मैवाकाशः । परमात्मनो गमकं लिङ्गान्तरं दर्शयति। आकाशो-ह्येवैभ्य इति। हि यस्मात्। आकाशः परमात्मा एवैभ्यः सर्वेभ्यो भूतेभ्यो ज्यायान्। तस्य निखिलकल्याणगुणैः स्वरूपेणाचिन्त्यशक्त्या च निरु-पाधिकनिरतिशयोत्कृष्टत्वमित्यर्थः। आकाशः परायणम्। तस्य परम गतित्वं परमप्राप्यत्वमिति यावत्। तस्मात् परायणत्वज्यायस्त्वलिङ्गाभ्या-मपि भगवान् वासुदेव आकाशपदवाच्यः ॥ १ ॥

"आकाशस्तल्लिङ्गादिति" ब्र० सू० १ । १ । २३ । न्यायेनाकाशस्य परमात्मत्वमभिहितम्, श्रीबादरायणेन सम्प्रति—उद्गीथत्वधर्मपुरस्कारे-णसंपादितस्याकाशस्य परोवरीयस्त्वादीन् गुणानुपदिशति । स एष इति। स एष आकाशः परोवरीयान्। परउत्कृष्टः। वरीयसामपि वरः श्रेष्ठादपि श्रेष्ठतम इति यावत्। अत्र परः शब्दः सकारान्तो द्रष्टव्यः ॥

एवं स्वरूप आकाश उद्गीथः। उद्गीथपदवाच्यः। नहि साम-मात्रस्य एवं गुणकत्वं सम्भवति। किन्तु,परमात्मनः-उद्गीथस्येत्याशयः। आकाशस्य ब्रह्मत्वे लिङ्गान्तरमाह—स एषोऽनन्तः, देशतः कालतः वस्तुतः परिच्छेदशून्यः । नह्यानन्त्यं ब्रह्मणोऽन्यत्र श्रुतं दृष्टं वा "सत्यं ज्ञानमनन्तं ब्रह्मेति" श्रुतेः जागरूकत्वात् । तस्मात् परब्रह्मणो वासुदेवस्यैवाकाशत्वं सिद्धम् । परोवरीयस्त्वगुणविशिष्टस्य ब्रह्मण उपास्तिं विदधाति। एतदेवमिति। एतत् एतं परोवरीयांसं सर्वोत्कृष्टं एवम्, अनन्तत्वविशिष्टमुद्गीथं भगवन्तं वासुदेवं विद्वानुपपास्ते।

तस्यैतत्फलमाह अस्योपासकस्य परोवरीयःपरोवरीयस्त्वगुणकं जीवनं भवति । स उपासकः परोवरीयसः अधिकवरीयसो लोकान् वैकुण्ठश्वेतद्वीपाख्यान् जयति आप्नोति ह ॥ २ ॥

परोवरीयो ह्यास्य जीवनं भवतीत्युक्तं विश्वासजननायाऽऽख्यायिकामाह । तमेतमिति । अतिधन्वा नामतःशुनकस्यापत्यं शौनकः तमुद्गीथं भगवन्तम् । उदरशाण्डिल्याय स्वशिष्यायोक्त्वोवाच । किमिति यावत्ते तव प्रजायां त्वत्सन्ततौ, एनम् = उद्गीथं त्वद्वंशपरम्परा-जाताः पुमांसः वेदिष्यन्ते, उपासिष्यन्ते । तावन्तं कालं हैभ्यः प्रसिद्धेभ्यो लौकिकजीवनेभ्यः परोवरीयः । अत्युत्कृष्टम् । अस्मिँल्लोके जीवनं भविष्यति ॥ ३ ॥

**तथाऽमुस्मिंल्लोके लोक इति स एतदेवं विद्वानुपास्ते परोवरीय एवहास्यास्मिँल्लोके जीवनं भवति । तथाऽमुष्मिँल्लोके लोक इति लोकेलोक इति । इतिप्रथमाध्यायस्य नवमखण्डः॥९**

न केवलमेतावत् तथाऽमुष्मिंल्लोके परलोके । लोकेलोक इतिद्विरुक्तिर्वीप्सायाम् । स यःकश्चिदेतदेवंविद्वान्नुद्गीथमुपास्ते तस्याप्येवमेव परोवरीय उत्कृष्टमेव हास्यास्मिंल्लोके जीवनं भवति । तथामुष्मिंल्लोके लोक इति । लोकेलोक इति। पुन र्द्विरुक्तिरुद्गीथोपास्तिसमाप्त्यर्था । एतत् खण्डान्तर्गतवाक्यविषयकमाकाशाधिकरणं श्रीवादरायणाचार्य्यैः समन्वयाध्याये-प्रथमपादे उपन्यस्तम्–तदर्थोऽत्रानुसंधेयः ॥४॥

इतिप्रथमाध्यायस्य नवमः खण्डः ॥९॥

---

**मटचीहतेषु कुरुष्वाटिक्या सह जाययोषस्तिर्ह चाक्रायण इभ्यग्रामे प्रद्राणक उवास ॥१॥ स हेभ्यं कुल्माषान् खादन्तं विभिक्षे तं होवाच । नेतोऽन्येविद्यन्ते यच्च येम इम उपनिहिता इति ॥ २ ॥ एतेषां मे देहीतिहोवाच तानस्मै प्रददौ हन्तानुपानमित्युच्छिष्टं वै मे पीतं स्यादितिहोवाच॥३॥**

**न स्विदेतेऽप्युच्छिष्टाभो इति । नवा अजीविष्यमिमा नखादन्नेति होवाच कामो मे उदपानमिति ॥ ४ ॥**

सामैकदेशप्रतिहारोद्गीथनिष्ठां भगवदुपास्तिं वक्तुं तदर्थां काञ्चनाख्यायिकामाह । मटचीत्यादिखण्डद्वयेन उषस्तिर्नामतः । चक्रमयनं यस्यासौ चक्रायणः प्रायो रथचक्रसमीपे तिष्ठति । चक्रायणस्यापत्यं चाक्रायणः । कुरुदेशे वसन् कुरुषु मटचीहतेषु वर्षोपलैर्नाशितेषु सत्सु । "उपला इष्टकाःस्थूलामटचीतिप्रकीर्तिताः" इतिशब्दनिर्णये ॥ अतएवातिवृष्ट्या दुर्भिक्षपतिते । आटिक्या आसन्नयौवनया जायया सह इभो हस्तीतमर्हतीति इभ्यः। धनपतिस्तं स्वग्रामे इभपतिग्रामे वा प्रद्राणकोऽन्नपानार्थं द्रवन्नुवास " द्रा कुत्सायां गतौ " ॥ १ ॥ स चाक्रायण अन्नार्थी अटन् कुल्माषान् कुत्सितमाषान् खादन्तमिभ्यं यदृच्छयोपलभ्य विभिक्षे याचितवान् । स इभ्यस्तं प्रत्युवाच । च शब्दोऽवधारणे॥२॥ये मे ममोपनिहिताःसमीपस्थिताः कुल्माषा इम एव विद्यन्ते नतोऽन्ये विद्यन्ते । यत् यस्मात् तस्मात् कुल्माषा न सन्ति दातुम् । इमे च न देया उच्छिष्टत्वादिति भावः । एतेषामुच्छिष्टानामेव कुल्माषाणां मध्ये कांश्चन मे देहीति होवाच चाक्रायणः ॥ ३ ॥ एवमुक्त इभ्यस्तान् कुल्माषानस्मै चाक्रायणाय प्रददौ ॥ हन्त ! तर्हि अनुपानमुच्छिष्टजलपानञ्च कुर्वित्युवाच । एवमुच्छिष्टजलपानार्थं प्रार्थितश्चाक्रायण एतदुदकपाने उच्छिष्टमेव मे मया पीतं स्यादिति होवाच । तत्रेभ्यो वभाषे । एतेऽपिकुल्माषा उच्छिष्टा नस्वित् न किम् । तत्र मुनिरुवाच, इमान् कुल्माषानखादन्नभक्षयन्नैवाजीविष्यं न जीविष्यामि । अतः प्राणात्यये दोषाभावात्ते भक्षिताः । उदपानं जलापनन्तु मे कामो ममेच्छाधीनमिदानीं वर्त्तते वृथोच्छिष्टस्वीकारे दोष प्राप्ते न तत्पिवामीति । उक्तञ्च वादरायणेन सूत्रकृता ।"सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनादि " ति । ब्र० सू० ३ । ४ । २८ ॥ ४ ॥

**स ह खादित्वाऽतिशेषाञ्जायाया आजहार साऽग्रएव सुभिक्षा वभूव तान्प्रतिगृह्य निदधौ ॥५ ॥**

सह प्रातः सञ्जिहान उवाच यद्बतान्नस्य लभेमहि लभेमहि धनमात्रां राजाऽसौ यक्ष्यते स मा सर्वैरार्त्विज्यैर्वृणीतेति ।६॥ तं जायोवाच हन्त यत इम एव कुल्माषा इति तान् खादित्वा-ऽमुं यज्ञं विततमेयाय ॥ ७ ॥ तत्रोद्गातॄनास्तावे स्तोष्यमाणा-नुपविवेश सहप्रस्तोतार मुवाच ॥ ८ ॥

स चाक्रायणस्तान् कुल्माषांस्तत्रखादित्वातिशेषानतिशिष्टान् । जायाया आजहार । सा जायाग्र एव पत्युरागमनात्पूर्वं सुभिक्षा शोभिन-भिक्षा लब्धान्ना बभूव । अतस्तान् कुल्माषान् प्रतिगृह्य निदधौ स्थापित-वती ॥ ५ ॥ स चाक्रायणस्तां रात्रिं नीत्वा सञ्जिहानः शयनं निद्रां परित्यजन् । उतिष्ठन्नितियावत्, उवाच प्रत्यहमन्नार्थं खिद्यन्तीं स्वजायां प्रति वतेत्यास्वादने यत् । यस्माद्वयमन्नंस्वान्नं लभेमहि । अन्नस्यमात्रां भारमि-तिवा । धनमात्रां धनभारञ्च लभेमहि । तेनास्माकं जीवनं भविष्यति । अतस्तव खेदो माभूदित्यर्थः । अन्नादिलाभे कारणमाह । राजेति । असौ दूरे स्थितो राजा यक्ष्यते तत्राहं गमिष्यामि । स राजा मां सर्वैरार्त्विज्यैः ऋत्विक्कर्मभिः वृणीते । अतस्तत्र गमनाय पाथेयं किमप्यस्तीत्युवाचेति सम्बन्धः ॥ ६ ॥ एवमुक्तवन्तं प्रति जायोवाच । हन्तेति । हन्तेतिखेदे । हे पते ! ये भवद्भिः पूर्वेद्युरानीताः तेः इमा एव कुल्माषा वर्त्तन्त इति त एव नेया इत्युक्त्वा तान् प्रतिगृह्य खादित्वाऽमुं यज्ञं विततं विस्तृतमेयाय गतवान् ॥ ७ ॥ तत्र यज्ञे, आस्तावे आस्तुवन्त्यस्मिन्नित्यास्तावाख्ये कर्म-णि स्तोष्यमाणान् स्तोतॄनुपसमीपे उपविवेशोपविष्टवान् । स चाक्रायणः प्रस्तोतारमुवाच ॥ ८ ॥

प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तो-ष्यसि मूर्धा ते विपतिष्यतीति ॥ ९ ॥

एवमेवोद्गातारमुवाचोद्गातर्यादेवतोद्गीथमन्वायत्ता तांश्चे-दविद्वानुद्गास्यति मूर्धा ते विपतिष्यतीति ॥१०॥

एवमेव प्रतिहर्त्तारमुवाच प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता ताञ्चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति ते ह समारतास्तूष्णीमासांचक्रिरे ॥ ११ ॥

इति प्रथमाध्यायस्य दशमः खण्डः ॥ १० ॥

हे प्रस्तोतरित्यभिमुखीकृत्य या देवता प्रस्तावभक्तिमन्वायत्ता सम्बद्धा तत्प्रतिपाद्या तत्स्थाच तां देवताञ्चेद्यदित्वमविद्वान् प्रस्तोष्यसि तर्हि ते तव मूर्धा विपतिष्यतीति ॥ ६ ॥ एवमुद्गातारं प्रत्युवाच । उद्गातरिति । पूर्ववत् एवमेव प्रतिहर्त्तारमित्यादिकमपि पूर्ववत्। व्याख्येयम्। एवं चाक्रायणेनोक्तास्ते प्रस्तोत्रादयः प्रस्तावादि ज्ञानाभावात्समारताः स्वस्व व्यापारनिवृत्तास्तूष्णीमासांचक्रिरे ॥ ११ ॥

इति प्रथमाध्यायस्य दशमः खण्डः ।

---

अथ प्रथमाध्यायस्यैकादशः खण्डः ।

अथ हैनं यजमान उवाच भगवन्तं वा अहं विविदिषाणीत्युषस्तिरस्मि चाक्रायण इति होवाच ॥ १ ॥

स होवाच भगवन्तं वा अहमेभिः सर्वैरार्त्विज्यैः पर्यैषिषं भगवतो वाअहमवित्याऽन्यानवृषि ॥ २ ॥

अथ तेषां तूष्णींभावान्तरमेनं चाक्रायणं प्रति यजमानो राजोवाच। अहं भगवन्तं पूजार्हं वै शब्देनैवं ज्ञानिनस्तवपूजार्हत्वं प्रसिद्धमित्याह। विविदिषाणि त्वं किं नामकः कस्य पुत्र इति। वेत्तुमिच्छामीति एवमुक्तो मुनिरहं नाम्नोषस्तिरस्मि चाक्रायणः चक्रायणस्य पुत्रोऽस्मीति होवाच ॥ १ ॥ एवमुक्तः स राजोवाच । भगवन्तमेवाहमेभिः सर्वैरार्विज्यैः ऋत्विकर्मभिः पर्येषणं कृतवानस्मि । भगवन्तमेव सर्वैः ऋत्विक्कर्मभिर्वृणीतुं विचारितवानस्मीति यावत्। तर्हि किमर्थमेते- प्रस्तोतृत्वादिना वृता इत्यत आह। भगवतइति। पूर्वमहं भगवतो गतेरवित्या, अज्ञानेनैवान्यान् प्रस्तोत्रादीनवृषि । यद्वा भगवतोऽवित्या

अलाभेनेत्यर्थः । इदानीं भगवाँल्लब्धः । अतो भगवानेव तु विशेषेण मे मया सर्वैरार्त्विज्यैर्वृत इति ॥ २ ॥

**भगवांस्त्वमेव मे सर्वैरार्त्विज्यैरिति तथेत्यथतर्ह्येत एव समतिसृष्टाः स्तुवतां यावत्त्वेभ्यो धनं दद्यास्तावन्मम दद्या इति तथेति ह यजमान उवाच ॥ ३ ॥**

**अथ हैनं प्रस्तोतोपससाद प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वान् प्रस्तोष्यसि मूर्धा ते विपतिष्यतीति मा भगवानवोचत्कतमा सा देवतेति ॥ ४ ॥**

**प्राण इति होवाच सर्वाणि हवा इमानि भूतानि प्राणमेवाभिसंविशन्ति । प्राणमभ्युज्जिहते । सैषा देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वान् प्रास्तोष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति ॥ ५ ॥**

**अथ हैनमुद्गातोपससादोद्गातर्या देवतोद्गीथमन्वायत्ता ताञ्चेदविद्वानुद्गास्यसि मूर्धा ते विपतिष्यतीति भगवानवोचत्कतमा सा देवतेति ॥ ६ ॥**

एवमुक्तो मुनिर्यद्यहमेवैतत्कर्म कुर्यां तर्हि ब्राह्मणद्रोहो यद्यत्रानङ्गीकारस्तर्हि धनाप्राप्तिरिति विचार्य तथास्त्वित्युवाच । अथ तर्हि एवं तर्हि । ये पूर्वं त्वया वृत्ता एत एव समतिसृष्टा मदाज्ञप्ताः स्तुवतां स्तुवन्तु तथात्वे त्वत्कार्यम् । यावत्तेभ्यः प्रस्तोत्रादिभ्यः सर्वेभ्यो धनं दद्याः तावन्मम दद्या इति एवमुक्तो यजमानस्तथेति होवाच । हेति यजमानस्य हर्षद्योतकम् । उभयविधब्राह्मणापराधाभावो मम सम्पन्नः॥३॥ अथैवं चाक्रायणराजसम्वादानन्तरम् । एनं चाक्रायणं प्रति प्रस्तोतोपससाद गुरुभावेनोपजगाम । तेन च प्रस्तोतर्यादेवतेत्यादिना मा मां भगवानवोचत् पूर्वं कतमा सा देवता या प्रस्तावभक्तिमन्वायत्तेति पृष्टः प्राण इति होवाच । अत्र प्राणयितृत्वगुणयोगात् प्राणशब्दार्थो भग-

वान्वासुदेव इति निश्चीयते। प्राणशब्दस्य प्रवृत्तिनिमित्तं मुख्यं प्राणत्वं वक्तव्यम्। तस्य भूतजातस्थितिप्रवृत्तिहेतुत्वसम्भवात्। कथमत्र परमात्मत्वेन प्राणशब्दस्यनिर्णीतत्वमित्याशङ्कापनोदायाह–सर्वाणीति। नहि परमात्मव्यतिरिक्ते सकलचैतनोत्पत्तिलयहेतुत्वमुपपद्यते। तस्मात्प्राणशब्दस्य प्रवृत्तिनिमित्तं परमात्मत्वं वाच्यम्। सर्वाणि स्थावरजङ्गमानि भूतानि प्राणमभिलक्ष्य विशन्ति लीयन्ते प्राणमभ्युज्जिहते। प्राणादेवोद्गच्छन्तीत्यर्थः॥ सैषा देवता प्रस्तावमन्वायत्ता ताञ्चेदविद्वान् प्रस्तोष्यस्तर्हि मया तथोक्तस्य तां चेदविद्वान् प्रस्तोष्यसीत्याद्युक्तस्य ते मूर्धा शिरो व्यपतिष्यत्। मद्वचनस्यामोघत्वात् त्वन्तु तथा न कृतवान्। अतो महान् प्रमादः परिहृत इति भावः॥ ५॥ अथ प्रस्तावनिर्णयानन्तरम्। अन्यत पूर्ववत्॥ ६॥

**आदित्य इति होवाच सर्वाणि हवा इमानि भूतान्यादित्यमुच्चैः सन्तं गायन्ति सैषा देवतोद्गीथमन्वायत्ता तञ्चेदविद्वानुद्गास्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति॥ ७॥ अथ हैनं प्रतिहर्तोपससाद प्रतिहर्तर्या देवता प्रतिहारमन्वायत्ता ताञ्चेदविद्वान् प्रतिहरिष्यसि मूर्धा ते विपतिष्यतीति माभगवन्वोचत् कतमा सादेवतेति॥ ८॥ अन्नमिति होवाच सर्वाणि हवा इमानि भूतान्यन्नमेव प्रतिहरमाणानि जीवन्ति सैषा देवता प्रतिहारमन्वायत्ता ताञ्चेदविद्वान् प्रतिहरिष्यो मूर्धा ते व्यपतिष्यत्तथोक्तस्य मयेति तथोक्तस्य मयेति॥ ९॥**

**इति प्रथमाध्यायस्यैकादशः खण्डः॥**

---

उद्गात्रा पृष्टश्चाक्रायण आदित्य इति होवाच सर्वाणि हवा, हवेति बहुप्रमाणसिद्धिमाह। अधः स्थितानि भूतानि चेतनानि उच्चैःसन्तं उच्चैः स्थितं गायन्ति स्तुवन्ति। यथा प्राणप्रस्तावयोः प्रशब्दत्वेन तुल्यता तथात्रापि उद्गीथोच्चैः स्थितादित्ययोरुच्छब्दवत्वेन साजात्यमित्याशयः। शेषं पूर्ववत्॥ ७॥ अथ हैनमिति प्रागुपदर्शितरीत्या व्याख्येयम्॥८॥

पृष्टः-चाक्रायणः—अन्नमिति हो वाच। कथमन्नस्य प्रतिहारत्वं तदाह। सर्वाणीति। सर्वाणि भूतानि। अन्नमेव प्रतिहरमाणानि ह। भोजनं कुर्वाणानि जीवन्ति। सैषा देवता प्रतिहारमन्वायत्ता। प्रतिहारे अन्नाभिमानिदेवताध्यस्ता। प्रतिशब्दवत्त्वेनान्नप्रतिहारयोस्तुल्यत्वात्। शेषं पूर्ववत्। द्विरुक्तिर्विद्यासमाप्त्यर्था। इदमत्राकूतम्। अत्र प्राणादित्यान्नानि देवतात्वेन निर्दिष्टानि। तेषां मध्ये प्राणस्यैव परमात्मत्वं नेतरयोरिति कथन्ता—न निवर्तते ? तन्निवृत्तिस्त्वेवम्, प्राणशब्दस्य परमात्मन्यपि रूढत्वात् परमात्मपरत्वं युज्यते। "प्राणस्य प्राणं यदिदं किञ्चित्, जगत्सर्वं प्राणमि." तिवाक्यानां जागरूकत्वात्, सर्वाणि हवा इमानि भूतानीतिवाक्यस्वारस्याच्च। आदित्यान्नशब्दयोरतथात्वान्न तयोः परमात्मपरत्वं वक्तुं शक्यते। आदित्यशब्दस्य कथञ्चित् परमात्मपरत्वेऽपि अन्नवाक्ये शेषेप्रतिहरमाणानीतीति पदनिर्दिष्टं भक्ष्यमाणत्वं न परमात्मनि मुख्यम्। अत आदित्यान्नशब्दयोर्न ब्रह्मपरत्वं किन्तु प्राणशब्दस्यैव तथात्वम्। अतएव श्रीव्यासाचार्य्यैः एतत् खण्डान्तर्गतवाक्यविषयकं प्राणाधिकरणमेव समन्वयाध्याये प्रथमे पादे उपनिबद्धम्। तदर्थोऽप्यत्रानुसन्धेय इति ॥ ६ ॥

इति प्रथमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

एतत् खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्ते। समन्वयाध्याये प्रथमेपादे तत्र हि॥ प्रस्तोतर्य्या देवता प्रस्तावमन्वायत्ता। इत्युपक्रम्य। ताञ्चेदविद्वान् प्रस्तोष्यसि मूर्द्धा ते व्यपतिष्यति कत मासा देवता इत्याद्युदाहृतम्। वायुवृत्तिरेवात्रप्राण शब्देनोच्यते तत्रैव प्राणशब्दस्य प्रसिद्धत्वात्। प्राणस्य भूतजातस्थितिप्रवृत्तिहेतुत्वाच्चेति–पूर्वपक्षं कृत्वा सूत्रेकारेण श्रीवादरायणेन "अतएव प्राणः" ब्र० सू० १।१।२४॥ इति सूत्रेण सिद्धान्तितम्। प्राणशब्दवाच्यः पुरुषोत्तम एव न वायुवृत्तिः प्राणः। कुतः ? अतएव तल्लिङ्गादेव सर्वाणि इमानि भूतानि प्राणमेवाभिसम्विशन्ति प्राणमभ्युज्जिहते। इतिवाक्यशेषेण सर्वभूतसम्वेशनार्हब्रह्मलिङ्गस्य श्रुतत्वात्।

अथातः शौव उद्गीथस्तद्ध वको दाल्भ्यो ग्लावो वा मैत्रेयः स्वाध्यायमुद्वव्राज ॥ १ ॥

तस्मै श्वा श्वेतः प्रादुर्बभूव तमन्ये श्वान उपसमेत्योचुरन्नं नो भगवानागायत्वशनायामवा इति ॥ २ ॥

तान्होवाचेहैव मा प्रातरुपसमीयातेति तद्ध वको दाल्भ्यो ग्लावो वामैत्रेयः प्रतिपालयांचकार ॥ ३ ॥

ते ह यथैवेदं बहिष्पवमानेन स्तोष्यमाणाः संरब्धाः सर्पन्तीत्येव मासस्रृपुस्ते ह समुपविश्य हिं चक्रुः ॥४॥

ओ३मदा३मोंपिबा३मों३देवो वरुणः प्रजापतिः सविता ३मिहा२ऽऽहरदन्नपते ३ऽन्नमिहा २हरा२ऽऽहरो३मिति ५

इति प्रथमाध्यायस्य द्वादशःखण्ड ॥

---

प्रकृतमनुसरामः—

उद्गीथोपासकस्य पापासंश्लिष्टत्वादिकं प्रागभिहितं सम्प्रत्यन्नप्राप्तिफलमाख्यायिकयाह । अथेति । अथशब्दः प्रकरणान्तरद्योतकः ॥ अतः प्रयोजनसद्भावात् । शौवः श्वभिर्दृष्ट उद्गानं साम प्रसूयते । तत्तदा कदा कदाचित् । वकोनामतः दाल्भ्यो दल्भ्यपुत्रो ग्लावो वा नामतः मित्रासुतः। उभयथानिर्देशज्ञापको वा शब्दः। स्वाध्यायमुद्दिश्योद्वव्राज ह ग्रामान्निर्गतवान् ॥ १ ॥ तदित्यत उत्तरत्र वा सम्बध्यते । तत्तदा तस्मै वकाय वकस्य प्रसादार्थमितियावत् श्वेतः श्वा प्रादुर्बभूव । तत्स्वाध्यायेन तोषितः कश्चनऋषिः श्वेतशुनकरूपतया प्रादुर्बभूव । तं श्वेतश्वानमन्ये श्वान उपसमेत्य समीपं प्राप्योचुः। किमिति ? नोऽस्माकमन्नमुद्दिश्य भगवानागायतु गानेनान्नं सम्पादयत्वित्यर्थः। अशनायाम इति वै शब्दोऽवधारणे वयं बुभुक्षिताः स्म ॥ २ ॥

श्वेतः श्वा उवाच तान् क्षुल्लकान् शुनः। इहैव अत्रैव मा मां

प्रति प्रातःकाले उपसमीयातेतिमामुपगच्छतेति । तत् दाल्भ्यो वकः मैत्रेयः ग्लावो वा ऋषिः प्रतिपालयांचकार। प्रतीक्षणं कृतवान् ॥ ३॥ ते ह यथैवेदमिति ते श्वानः प्रातःकाले यथेदं निदर्शनम् । यथोद्गातृपुरुषाः अध्वर्युप्रमुखा यजमानपर्य्यन्ता वहिष्पवमानेन स्तोत्रेण स्तोष्यमाणाः संरब्धा अन्योन्यसंश्लिष्टाः गच्छन्ति तथा एवमन्योन्यस्य पुच्छं मुखे गृहीत्वाउपसर्पणं कृतवन्तः ते ह समुपविश्य हिंचक्रुः हिंकारं कृतवन्तः ॥ ४॥ हिंकारस्वरूपमाह । ओमिति । ओमदामः पिबामः । अदामोऽशनं करवामः। वरुणीयत्वाद्वरुणः।

प्रजानां पालनात् प्रजापतिः प्रसवितृत्वात्सविता एवम्भूतः सविता अन्नमस्मभ्यमिहाऽऽहर, आहरतु एवं हिंकृत्वा पुनरप्यूचुः। स त्वं हे अन्नपते अस्मदर्थमन्नमाहरमित्यर्थः । द्विरुक्तिः विद्यार्था-वधारणार्थे। अत्र तद्रूपेणोद्गीथस्य भगवतउपासनं विहितम् ॥ ५॥

इति प्रथमाध्यायस्य द्वादशखण्डः ॥ १२ ॥

---

अथ प्रथमाध्यायस्य त्रयोदशःखण्डः ॥

**अयं वावलोको हा उकारो वायुर्हा इकारश्चन्द्रमा अथ-कारः। आत्मेहकारोऽग्निरीकारः॥ १ ॥**

**आदित्य ऊकारो निहव एकारो विश्वेदेवा औहोयिकारः प्रजापतिर्हिंकारः प्राणः स्वरोऽन्नं याया वाग्विराट् ॥२॥**

सामैकदेशोपास्तेः प्रकृतत्वात्तदेकदेशहावित्यादित्रयोदशस्तोभा-क्षरोपास्तिं दर्शयति। अयमित्यादिना। अयं वाव लोक अयमेव लोकः पृथिवीलोकः हा उकारः "इयं वैरथान्तरमित्यत्र पृथिव्या रथा-न्तरत्वं श्रुतं प्रस्तुतश्चस्तोभो रथान्तरेऽस्तीत्युक्तं तथाच यथोक्तात्सम्बध-रूपात्सादृश्यात् पृथिवीत्वदृष्ट्या हाउकार उपास्य इति भावः। वायु-र्हाइकारः वामदेवसाम्नि हा इकारः प्रसिद्धः ॥ यथोक्ताद्वामदेव्य-साससन्बन्धसामान्याद्वायुदृष्ट्या हा ईकारमुपासीतेत्यर्थः ॥ चन्द्रमा-

अथकारः चन्द्रदृष्ट्याऽथकारमुपासीत आत्मेहकारः । इहेति-स्तोमः प्रत्यक्षो ह्यात्मेति व्यपदिश्यते आत्मदृष्टिरिहेतिस्तोभे कर्त्तव्या अग्निरीकारः। अग्निदृष्टिरीकाराख्ये स्तोभाक्षरे कर्त्तव्या ॥ १ ॥

आदित्य ऊकारः। ऊकारं स्तोभाक्षरम् आदित्यदृष्ट्योपासीत ऊकारादित्ययोः सादृश्यात् । तथाहि उच्चैरूर्ध्वं सन्तमादित्यं गायन्ति त्यूकारश्चस्तोभः। आदित्यदैवत्ये साम्नि स्तोभ उइत्यादित्य उकारः। एकारसामान्यात् न्निहवदृष्टिरेकारे स्तोभे कार्येत्त्याह। निहव इत्या-दिना । निहवइत्याह्वानमेकारः स्तोभः । विश्वेदेवा औहोयिकारः। औहोयिकारस्य विश्वेदेवदृष्ट्योपासीत वैश्वदेव्ये साम्नि स्तोभस्त्व दर्शनात् । प्रजापतिर्हिंकारः प्राणः स्वरः स्वर इतिस्तोभः । प्राणस्य स्वरहेतुत्वं तन्निवर्त्तकत्वेन तदात्मकत्वं द्रष्टव्यम्। अन्नं यायाइति। स्तोभोऽन्नम्। अन्नेन हीदं यातीत्यतस्तत्सामान्यात्। वागिति स्तोभो विराडन्नं देवताविशेषो वा वैराजे साम्नि स्तोभदर्शनात् ॥ २ ॥

**अनिरुक्तस्त्रयोदशः स्तोभः संचरो हुङ्कारः ॥ ३ ॥**

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतामेवं साम्नामुपनिषदं वेदोपनिषदं वेद ॥ ४ ॥**

इति प्रथमाध्यायस्य त्रयोदशः खण्डः॥

हा उकारादिभ्यो द्वादशभ्यः प्रागुपदर्शितेभ्यः त्रयोदशः हुङ्कारः स्तोभो अनिरुक्तः॥ निर्वक्तुमशक्य इत्यत सञ्चरः सचानेकधा कार्यरूपेण सञ्चरतीतिसञ्चरः दोलायितः। ततश्च सञ्चरत्वदृष्टिः कार्या। तस्य फलमाह दुग्ध इति। दुग्धेऽस्मै वाग्दोहमिति पूर्ववत् ॥ ३ ॥

य एतामेव यथोक्तलक्षणां साम्नां सामावयवस्तोभाक्षरविषया-मुपासनां वेद तस्यैतद्यथोक्तफलं भवति द्विरुक्तिरध्यायसमाप्त्यर्था ॥४॥

इति छान्दोग्योपनिषत्प्रकाशिकायां प्रथमोऽध्यायः ॥ १ ॥

———

# अथ द्वितीयाध्यायस्य प्रथमः खण्डः

ओं समस्तस्य खलु साम्न उपासनं साधु यत् खलु साधु तत्सामेत्याचक्षते यदसाधु तदसामेति ॥ १ ॥

तदुताप्याहुः साम्नैनमुपागापेदिति साधुनैनमुपागादित्येव तदाहुरसाम्नैनमुपागादित्यसाधुनैतमुपागादित्येव तदाहुः ॥ २ ॥

अथो ताप्याहुः साम नो वतेति यत्साधु भवति साधुवतेत्येव तदाहुरसाम नो वतेति यदसाधुभवत्यसाधुवतेत्येवतदाहुः ॥३॥

सामैकदेशोद्गीथविषयकमुपासनं विविधफलमभिहितं ततः स्तोभाक्षरविषयिकामुपास्तिं निरूप्य सम्प्रति सकलस्य साम्न उपासनमुपदिश्यते । समस्तस्य पाञ्चविध्ययुक्तस्य साप्तविध्ययुक्तस्य वा साम्नः साधुत्वधर्मपुरस्कारेणोपासनं विधीयते साधुसाम इत्युपसंहारात् नतु साम्नि साधुत्वाभिधानेऽन्यत्र साधुत्वं निषिध्यते येन पूर्वोपदर्शितोपासनायास्तथात्वं प्रसज्येत तच्चोपासनं साधु शोभनं तत्कस्मान्निर्णीतमित्यत आह । यत् खल्विति लोके साधुशोभनमनवद्यं यत् कर्म तत् सामेति व्यवहरन्ति विवेकिनः, यदसाधुविपरीतं कर्म तदसामेति ॥ १ ॥

किं पुनरेवं विवेचने वीजमित्यत आह । तदुतेति तत् तस्मिन् साध्वसाधुविवेके अन्यदपि कारणम् । आहुः किं तदित्यत्राह । साम्नैनमिति साम्ना सामोपायेनागतमेनं प्रत्यर्थिनमुपागात् । उपगतवान् साधुनैनमुपागादित्येव शोभनाभिप्रायेणागतमाहुः व्यवहरन्ति लौकिकाः । असाम्नैनमुपागात् । असाम्ना असामोपायेन । एनम् उपागात् उपगतवान् तदाऽसाधुना एनमुपागात् अशोभनाभिप्रायेणगतमिति आहुः व्यवहरन्ति ॥ २ ॥

कार्यप्राप्यं साधुत्वमभिधाय स्वानुभवगम्यं तदुपन्यस्यति-अथेति । कार्यत्वप्रयुक्तसाधुत्वविवेकानन्तर्यमथशब्दार्थः । अथोताप्याहुः ।

स्वसम्वेद्यं साम नोऽस्माकं वर्तत्यनुकम्पयन्तं संवृत्तमित्याहुः । एतच्चै-रुक्तं भवति यत् साधु भवति साधुवर्तत्येव तदाहुः । विपर्यये जाते-ऽसामनोवेतियदसाधुभवत्यसाधुवर्तत्येव तदाहुः । अत्रापि सामा-सामशब्दयोस्साधुत्वासाधुत्वार्थकत्वेन व्याख्यानात् । साधुसामशब्द-योरेकार्थत्वमिति भावः ॥ ३ ॥

**स य एतदेवं विद्वान् साधु सामेत्युपास्तेऽभ्याशोह यदेनं साधवो धर्मा आ च गच्छेयुरुप च नमेयुः॥ ४ ॥**

इति द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

साधुत्वेन सामोपासकस्य फलमाह—स य इति । स प्रसिद्धोऽधि कारी एतत् समस्तं साम एवं साधुत्वेन विद्वान् साधुसामेत्युपास्ते अभ्यासोद्रुतं ह एनमुपासकं प्रति आगन्तारः साधवो धर्मा आगच्छेयुश्च उपचनमेयुरचञ्चलास्तिष्ठन्ति ॥

इति द्वितीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

**लोकेषु पञ्चविधं सामोपासीत पृथिवी हिंकारः अग्निः प्रस्तावोऽन्तरीक्षमुद्गीथ आदित्यः प्रतिहारो द्यौर्निधनमित्यूर्ध्वेषु ॥ १ ॥**

**अथावृत्तेषु द्यौर्हिंकार आदित्यः प्रस्तावोऽन्तरीक्षमुद्गीथोऽग्निः प्रतिहारः पृथिवी निधनम् ॥ २ ॥**

लोकेषु पृथिव्यादिषु पञ्चविधं हिंकारादिभेदेन पञ्चप्रकारं कृत्वङ्गभूतं सामोपासीत । आदित्यादिमतयश्चाङ्गउपपत्तेरि ब्र०सू०४।१।६। त्यधिकरणे अनङ्गसमभिव्याहारयुक्तोपासनेष्वङ्गेषु, अनङ्गदृष्टिरूपत्वस्य समर्थितत्वात् । अङ्गभूते साम्नि अनङ्गलोकदृष्टिः कार्येत्यर्थः ॥ तत्प्रकारं विवृणोति । पृथिवीहिंकार इति । पृथिव्यग्न्यन्तरीक्षादित्यद्युषु । ऊर्ध्व-

गतेषु । हिंकारप्रस्तावोद्गीथप्रतिहारनिधनदृष्टिं कृत्वोपासीत ॥ १ ॥

आवृत्तेषु अवाङ्मुखेषु पञ्चविधां सामोपास्तिं दर्शयति । अथावृत्तेष्विति । पृथिवीमुख्येषु द्युपर्यन्तेषु पञ्चविधसामोपास्तिनिरूपणानन्तर्यमथशब्दार्थः ।

द्युमुख्येषु पृथिवीपर्य्यन्तेषु, आवृत्तेषु प्रागुपदर्शितरीत्या हिंकारादिदृष्टिर्विधेयेत्यर्थः । एवं विधोपासकस्य फलं दर्शयति कल्पन्त इति ॥

**कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च य एतदेवं विद्वाँल्लोकेषु पंचविधं सामोपास्ते ॥ ३ ॥**

इति द्वितीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

———

योऽधिकारी विद्वान् । एतदेवं लोकेषु पञ्चविधं समस्तं साधु-सामेत्युपास्ते अस्मै उपासकाय लोका ऊर्ध्वाऽऽवृत्ताश्च कल्पन्ते समर्था भवन्ति । अभीष्टप्रदा इतियावत् ॥

इति द्वितीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

———

**वृष्टौ पंचविधं सामोपासीत पुरो वातो हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहारः ॥ १ ॥**

**उद्गृह्णाति तन्निधनं वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पंचविधं सामोपास्ते ॥ २ ॥**

इति द्वितीयाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

———

एवं लोकेषु पञ्चविधं सामोपास्तिमुक्त्वा लोकस्थितेर्वृष्टिनिमित्तकत्वात् पञ्चविधे साम्नि वृष्टिदृष्ट्योपास्तिः कर्तव्येत्याह । वृष्टाविति । पूर्ववदेव पञ्चविधं सामवृष्टिदृष्ट्योपासीत । हिंकारे साम्नि वातदृष्टिः कार्येत्याह । पुरोवातोहिंकार इति पुरोवा ताद्युद्ग्रहणान्तत्वात् । हिंकारस्य वातदृष्ट्योपास्तिर्वि-

धेया, इत्यर्थः। जलस्योद्ग्रहणं वर्षोपसंहरणम्। वातस्य प्राथम्याच्च। मेघो जायत इति प्रस्तावे साम्नि मेघदृष्ट्योपास्तिः कार्या। मेघजनने वृष्टेःप्रस्तावस्य लोकसिद्धत्वात्। वर्षासमये वर्षति स उद्गीथः। वर्षणदृष्टया उद्गीथोपास्तिः कर्त्तव्या तस्याः सर्वेभ्यःश्रेष्ठत्वात्। विद्योतनइति। स्तनयित्नुदृष्टया प्रतिहारोपासना कार्या विद्युतां स्तनयित्नूनां प्रतिहर्तृत्वादित्याह। विद्योतते स्तनयति स प्रतिहारः॥ १॥

उद्ग्रहणदृष्टया निधनोपासनाकार्येत्याह। उद्गृह्णाति तन्निधनम्। समाप्तिसामान्यात् एतदुपासनायाः फलं दर्शयति वर्षतीति। अद्यापि य एवं प्रागुपदर्शितप्रकारेणोपास्ते तदीयेच्छात असत्यामपिवृष्टौ वर्षति। शेषं पूर्ववत्॥ २॥

इति द्वितीयाध्यायस्य तृतीयः खण्डः॥ ३॥

---

**सर्वास्वप्सु पंचविधं सामोपासीत मेघो यत्संप्लवते स हिंकारो यद्वर्षति स प्रस्तावो याः प्राच्यः स्पन्दन्ते स उद्गीथो याः प्रतीच्यः स प्रतिहारः समुद्रोनिधनम्॥ १॥**

**नहाप्सु प्रैत्यप्सुमान् भवति य एतदेवं विद्वान्सर्वास्वप्सु-पंचविधं सामोपास्ते॥ २॥**

एवं वृष्टौ पञ्चविधं सामोपासनं विधाय वृष्टिपूर्वकत्वात् सर्वासामपां तत्तत् दृष्टया सामोपास्तिमुपदिशति। सर्वेति। मेघोयत्संप्लवते—मेघो यत् यदा संप्लवतेसञ्चरति नानादेशस्थ एकदेशस्थो भवति तदापामारम्भः हिंकारः मेघसंप्लवदृष्टया हिंकारमुपासीत इत्यर्थः। यद्वर्षति स प्रस्तावः वर्षणदृष्टया प्रस्तावस्योपास्यत्वम् अपां सर्वतः व्याप्तं प्रस्तुतत्वात्। याः प्राच्यः नद्यो गङ्गाद्याः स्पन्दन्ते स उद्गीथः श्रेष्ठत्वात् याः प्रतीच्यो नर्मदाद्याः स प्रतिहारः प्रतिशब्दवत्त्वेन

सजातीयत्वात् समुद्रो निधनम् तन्निधनत्वादपाम् ॥ १ ॥

तत्फलं दर्शयति नाहाप्सुप्रैति । अप्सु न प्रैति न म्रियते नेच्छति चेत् अप्सुमान् भवति । प्रभूतोदकवान् सम्पन्नो भवति । आपोयोनियन्मतुष्वित्यलुक् शेषंपूर्ववत् ॥ २ ॥

इति द्वितीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

———

**ऋतुषु पंचविधं सामोपासीत वसन्तो हिंकारः ग्रीष्मः प्रस्तावः वर्षा उद्गीथः शरत्प्रतिहारो हेमन्तो निधनम् ॥ १ ॥**

**कल्पन्ते हास्मा ऋतवः ऋतुमान् भवति य एतदेवं विद्वानृतुषु पंचविधं सामोपास्ते ॥ २ ॥**

सर्वासामपामुपास्त्यादिकं ऋत्वधीनमतः सलिलदृष्ट्यनन्तरमृतुदृष्टिः साम्नि कार्येत्याह । ऋतुष्विति । ननु ऋतूनां षट्त्वात्साम्नां हिंकारादीनां च पञ्चत्वात् कथमृतुषु पञ्चविधत्वमित्युक्तिःसङ्गता स्यादिति चेन्न । हेमन्तशिशिरयोरैक्येन पञ्चविधत्वस्योक्तत्वात् । वसन्तो हिंकारः हिंकारे वसन्तदृष्टिः कर्तव्या प्राथम्यत्वेन तयोः साम्यात् । यथा ऋतुषु मध्ये वसन्तोः प्रथमः तथा पञ्चविधसामसु हिंकारः प्रथम इत्यर्थः । ग्रीष्मः प्रस्तावः प्रस्तावे ग्रीष्मदृष्टिर्विधेया प्रावृडर्थम् । यवादीनां सङ्ग्रहस्य प्रस्तूयमानत्वात् । शरत् प्रतिहारः रोगिणां मृतानाञ्च प्रतिहरणात् । हेमन्तो निधनम् । हेमन्तेन वाते निधनात् प्राणिनाम् ॥ १ ॥ कल्पन्ते उपासकस्याभीष्टंफलंदातुं समर्थाः ऋतवः । ऋतुमान् भवति तत्तदृतुफलभोगभाग्भवति सर्वदा स्वेच्छावशात्सम्पन्न इति यावत् ॥ २ ॥

इति द्वितीयाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

———

पशुषु पञ्चविधं सामोपासीताजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वाः प्रतिहारः पुरुषो निधनम् ॥ १ ॥

भवन्ति हास्य पशवः पशुमान् भवति य एतदेवं विद्वान् पशुषु पंचविधं सामोपास्ते ॥ २ ॥

इति द्वितीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

ऋतुषु सम्यग्वृत्तेषु पशवोऽपि सम्यगवस्थिता अत ऋतुदृष्ट्यनन्तरमजाप्रभृतिषु हिंकारोपाध्विं दर्शयति पशुष्विति। अजा हिंकारः। अजादृष्ट्या हिंकारोपासना कार्या यतः, अजायायज्ञसम्बन्धात् प्राधान्यम्। प्राथम्याद्वा 'अजापशूनां प्रथम" इतिश्रुतेः। अवयः प्रस्तावः। "तस्माज्जाता अजावय" इति श्रुतौ अजानामवीनां च साहचर्य्यं श्रूयते तस्मादवीनां प्रस्तावत्वम्। गाव उद्गीथः श्रेष्ठत्वेन तयोः सजातीयत्वात्। अश्वाः प्रतिहारास्तयोः साजात्यं प्रतिहरणत्वेन। पुरुषोनिधनम्। पशूनां पुरुषाश्रयत्वात्। नच पशुष्वित्युपक्रम्य पुरुषोनिधनं कथमुच्यते पुरुषस्यापशुत्वादिति वाच्यम्। यज्ञविशेषे तस्यापि पशुत्वमभिप्रेत्य तथोक्तत्वात् ॥ १-२ ॥

इति द्वितीयाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

प्राणेषु पंचविधं परोवरीयः सामोपासीत प्राणो हिंकारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारो मनो निधनम् परोवरीयांसि वैतानि ॥ १ ॥

परोवरीयोहास्य भवति परोवरीयसोहलोकाञ्जयति य एतदेवं विद्वान् प्राणेषु पंचविधं परोवरीयः सामोपास्ते इति तु पंचविधस्य ॥ २ ॥

इति द्वितीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

पशुषु सामोपास्तिमुक्त्वा, इन्द्रियाणां पशुपुरुषाश्रितत्वादिन्द्रियेषु पञ्चविधसामोपास्तिकर्त्तव्यतां वोधयति प्राणेष्विति । वरीयस्त्वं श्रेष्ठत्वं परत्वेसति वरीयस्त्वं परोवरीयस्त्वं गुणविशिष्टप्राणदृष्ट्या पञ्चविधं सामोपासनं कार्यमित्यर्थः । प्राणोघ्राणं हिंकारः मुख्यप्राणादुत्तरेषांवरीयस्त्वासम्भवात् तस्य सर्वश्रेष्ठतया निर्धारितत्वात् परं वरीयसां वागादीनां मध्ये प्रथमभावित्वेनोक्तत्वात् प्राणपदेन घ्राणमेवात्रग्राह्यम् । वाक् प्रस्तावः वागिन्द्रियेण सर्वस्यापि प्रस्तूयमानत्वात् । प्राणात् वाचोवरीयस्त्वम् । चक्षुरुद्गीथः । वागपेक्षया चक्षुषोवरीयस्त्वं वहुतरविषयप्रकाशकत्वात् । चक्षुषः उद्गीथत्वं श्रेष्ठत्वेन साम्यात् । श्रोत्रं प्रतिहारः प्रतिहर्तृत्वेन तयोः साजात्यम् । श्रोत्रंवरीयश्चक्षुषः सर्वतः श्रवणात् । मनोनिधनम् । निधीयन्ते हि मनसि पुरुषस्य भोग्यत्वेन सर्वेन्द्रियापहृता विषयाः । श्रोत्रमपेक्ष्य मनसोवरीयस्त्वं सर्वेन्द्रियविषयसम्वद्धत्वात् । ये विषया इन्द्रियाणामगोचराः ते सर्वेऽपि मनसोगोचरा एवेति भावः । प्रागुपदर्शितहेतुभ्यः परोवरीयांसि प्राणादीनि वा एतानि ॥ १ ॥

यो विद्वान् एतत् प्रागुपदर्शितविशिष्टं परोवरीयः सामोपास्ते, परोवरीयः अस्योपासकस्य जीवनं भवतीत्युक्तार्थमितितु पञ्चविधस्य साम्नउपासनमुक्तमिति सप्तविधे वक्ष्यमाणविषये बुद्धिसमाधानार्थम् ॥२॥

इति द्वितीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

**अथसप्तविधस्य वाचि सप्तविधं सामोपासीत यत्किंच वाचोहुमिति स हिंकारो यत्प्रेति सप्रस्तावो यदेति स आदिः ॥ १ ॥**

**यदुदिति स उद्गीथो यत्प्रतीति स प्रतिहारो यदुपेति स उपद्रवोयन्नीति तन्निधनम् ॥ २ ॥**

**दुग्धेऽस्मै वाग्दोहं यो वाचो दोहोऽन्नवानन्नादो भवति य एतदेवं विद्वान् वाचि सप्तविधं सामोपास्ते ॥ ३ ॥**

इति द्वितीयाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

पञ्चविधस्य साम्न उपास्त्यनन्तरं सप्तविधस्य साम्न उपास्तिरुपदिश्यते । अथेति । हिंकारप्रस्तावोङ्कारोद्गीथप्रतिहारोपद्रवनिधनाख्यसप्तविधत्वयुक्तसाम्नि वक्ष्यमाणरीत्या वागादिदृष्टिर्विधेयेत्यर्थः । यत्किंच वाचः शब्दस्यावयवभूतोहुमितियः शब्दः स हिंकारः तयोश्शब्दयोर्हिंशब्दवत्त्वेन साम्यात् । तस्मात् हिंकारे लोके हिंशब्दा यावन्तस्तद्बुद्धिः कार्येत्यर्थः । एवमुत्तरत्रापि द्रष्टव्यम् । यत्प्रेतिशब्दस्वरूपं सः प्रस्तावः, प्रशब्दवत्त्वेन तयोः साजात्यात् । यत् । आइति स आदिः । ओंकारः सर्वादित्वात् ॥ १ ॥ यदुदेति स उद्गीथः । उत्पूर्वत्वादुद्गीथस्य यत्प्रतीतिः स प्रतिहारः प्रतिशब्दवत्त्वेनतयोस्साम्यात् । यदुपेति सउपद्रवः । उपोपक्रमत्वादुपद्रवस्य । यन्नीति तन्निधनम् । तयोर्निशब्दवत्त्वेन साजात्यात् ॥ २ ॥

"दुग्धेऽस्मा" इत्यस्य प्रागुपदर्शितरीत्याऽर्थोऽवसेयः ॥ ३ ॥

इति द्वितीयाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

**अथखल्वमुमादित्यं सप्तविधं सामोपासीत सर्वदा समस्तेन साम मां प्रति मांप्रतीति सर्वेण समस्तेन साम ॥  ॥**

**तस्मिन्निमानि सर्वाणि भूतान्यन्वायत्तानीति विद्यात्तस्य यत्पुरोदयात् स हिंकारस्तदस्य पशवोऽन्वायत्तास्तस्मात्ते हिं कुर्वन्ति हिंकारभाजिनो ह्येतस्य साम्नः ॥ २ ॥**

**अथ यत्प्रथमोदिते स प्रस्तावस्तदस्य मनुष्या अन्वायत्तास्यस्मात्ते प्रस्तुतिकामाः प्रशंसाकामाः प्रस्तावभाजिनो ह्येतस्य साम्नः ॥ ३ ॥**

अत्र प्रसिद्धस्यादित्यस्य सप्तविधत्वेनोपास्तिः प्रस्तूयते । अथेति वाग्दृष्टेरानन्तर्य्यमथशब्दार्थः । यद्यपि वाग्दृष्टेरनन्तरमादित्यदृष्टेर्विधानं नोपपन्नं भवितुमर्हति पूर्वाध्याये आदित्यदृष्टिविशिष्टोपासनस्योक्तत्वात्तथापि प्रथमाध्याये अवयवमात्रे साम्नि, आदित्यदृष्टिः पञ्चविधेषूक्ता नतु समस्ते साम्नि । अतस्तद्विधानमुपपद्यते । अथ खल्वमुमादित्यमिति सप्तविधे साम्नि, आदित्यबुद्धिर्विधेयेत्यर्थः । कस्मान्निश्चीयते आदित्यस्य सामत्वमित्यत आह । सर्वदेति । सर्वदा समस्तेन साम । सामादित्ययोः समपरिमाणत्वेन तुल्यत्वात् तस्य सामत्वम् । मां मां प्रतीति आदित्यो मां प्रतिसमः अभिमुख इति प्रतीयते । तदभिन्नं पुमासंप्रत्याभिमुख्यस्य भावात् सर्वं प्रति समत्वात् । आदित्यस्य सामत्वम् । सर्वेण समोऽतः साम समत्वादित्यर्थः ॥ १ ॥

तदुपास्तिप्रकारमाह । तस्मिन्निति तस्मिन् सवितरि सप्तरूपे इमानि सर्वाणि भूतानि पशुमनुष्यादीन्यन्वायत्तानि । आश्रितानि विद्यात् सर्वभूतोपजीवत्वप्रकारकादित्यविशेष्यकं वेदनमुपासनात्मकं तदाश्रयीभूत उपासक इति बोधः । यथा भूतानामुपजीवनमादित्यस्तथा दर्शयति—तस्येति तस्यादित्यस्योदयात् पुरा पूर्वकाले यत् यद्रूपं स हिंकारः अस्यादित्यस्य तत् हिंकारं पशवोऽन्वायत्ता अनुगता उपजीवन्ति यस्मादेवं तस्मात्ते हि मिति शब्दं कुर्वन्ति पशवः तेषां हि करणं साधयति । तस्मादित्यादिना । तस्मात् । हिंकारभाजिनः ह्येतस्यादित्यस्य साम्नः तद्भक्तिभजनशीलत्वात् हि यस्मात् आदित्यात् प्रागेव तस्मात्त एवं कुर्वते ॥ २ ॥

आदित्ये प्रथमोदिते सति यत्तत्स्वरूपं तद्दृष्ट्या प्रस्तावस्योपास्तिं दर्शयति । अथेति प्रथमोदित आदित्ये यत् यद्रूपं अस्यादित्यस्य साम्नस्तत्, रूपं स प्रस्तावः । तदस्य मनुष्या अन्वायत्ताः उदयात् प्राचीनं रूपं पशुभिरुपजीव्यत इत्यर्थः । उदयात् पराचीनादित्यरूपं मनुष्या उपजीवन्तीत्यत्र लिङ्गमाह । तस्मादिति । मनुष्याः प्रस्तुतिकामा भवन्ति प्रस्तुतिकामा इत्यस्यार्थं स्वयं विवृणोति । प्रशंसाकामा इति । यस्मात् प्रस्तावभाजिनोह्येतस्य साम्नः ॥ ३ ॥

अथ यत्सङ्गववेलायां स आदिस्तदस्य वयांस्यन्वायत्तानि तस्मात्तान्यन्तरिक्षेऽनारम्भणान्यादायाऽऽत्मानं परिपतन्त्यादिभाजीनि ह्येतस्य साम्नः ॥ ४ ॥

अथ यत् सम्प्रति मध्यं दिने स उद्गीथस्तदस्य देवा अन्वायत्तास्तस्मात्ते सत्तमाः प्राजापत्यानामुद्गीथभाजिनो ह्येतस्य साम्नः ॥ ५ ॥

यत्सङ्गववेलायां यस्यां वेलायां गवां रश्मीनां जगन्मण्डलेन सङ्गमनं सम्बन्धगमनं गवां धेनूनां वत्सैः सङ्गमनं सा सङ्गववेला तस्मिन् समये यत्, आदित्यस्य रूपं स आदिः ओंकारः। आदिप्रणवयोः अकारशब्दवत्त्वेन साम्यात्। सङ्गवकालीनादित्यदृष्ट्याऽऽदिभक्तेरोंकारस्योपास्यत्वमित्यर्थः। अस्य = आदित्यस्य । तत् = रूपं, वयांसि पक्षिणोऽन्वायत्तानि अनुगतानि । तत्र ज्ञापकमाह । तस्मादिति । यतः पक्षिणामादित्यरूपोपजीवत्वादेव तस्मात्तानि वयांसि अन्तरिक्षे, अनारम्भणानि आलम्बनान्तरशून्यानि स्वात्मानमेवालम्बनत्वेनादाय परिपतन्ति गच्छन्ति । हि, यतः । एतस्य = आदित्याख्यस्य साम्नः । आदिशब्दादित्यशब्दयोराकारवत्त्वेन साम्यात् । आदिभक्तिभाजीनि ॥ ४ ॥ ऋजुमध्यं दिने यदादित्यसम्बन्धिरूपं तद्दृष्ट्योद्गीथस्योपास्तिः कार्येत्याह । अथेति । यत्सम्प्रति मध्यंदिने यत् सावित्रं रूपं सा उद्गीथभक्तिः अस्य सवितुस्तद्रूपं देवा अन्वायत्ताः तत्कालीनादित्यरूपादेव देवानां द्योतनातिशयो भवति तथापि तत्कालीनादित्यरूपस्य देवैरुपजीव्यत्वं कथमितिचेत्तत्राह । तस्मादिति । ते देवाः प्रसत्तमाः प्राजापत्यानां मध्ये उत्तमाः । हि यतः एतस्य साम्न उद्गीथभाजिनः ॥ ५ ॥

अथ यदूर्ध्वं मध्यंदिनात्प्रागपराह्णात् स प्रतिहारस्तदस्य गर्भा अन्वायत्तास्तस्मात्ते प्रतिहृता नावपद्यन्ते प्रतिहारभाजिनो ह्येतस्य साम्नः ॥ ६ ॥

**अथ यदूर्ध्वमपराह्णात् प्रागस्तमयात् स उपद्रवस्तदस्याऽऽरण्या अन्वायत्तास्तस्मात्ते पुरुषं दृष्ट्वा कक्षं श्वभ्रमित्युपद्रवन्त्युपद्रवभाजिनो ह्येतस्य साम्नः ॥ ७ ॥**

**अथ यत्प्रथमास्तमिते तन्निधनं तदस्य पितरोऽन्वायत्तास्तस्मात्तान्निदधति । निधनभाजिनो ह्येतस्य साम्न एवं खल्वमुमादित्यं सप्तविधं सामोपास्ते ॥८॥**

इति द्वितीयाध्यायस्य नवमः खण्डः ॥ ९ ॥



अथ यदूर्ध्वंमध्यंदिनात्=यत्मध्यंदिनादूर्ध्वम् । अपराह्णात् प्राक् तत्कालस्थितमादित्यरूपं स प्रतिहारः तद्दृष्ट्या प्रतिहारोपासना कार्या । तस्मिन् काले, आदित्यस्यास्तंगिरिं प्रतिहरणात् । तदादित्यस्य रूपं गर्भाः गर्भस्थाः प्राणिनोऽन्वायत्ताः । तत्र ज्ञापकमाह तस्मादिति । हि=यस्मात् एते गर्भा एतस्य साम्नः प्रतिहाराख्यंरूपं तत् भाजिनस्तदाश्रितास्तस्मात् आदित्यस्य प्रतिहाराख्यरूपाश्रितत्वादेव ते गर्भाः प्रतिहृताः पितुः शरीरादन्यमातृशरीरे प्रतिहृता अपि नावपद्यन्ते न विनश्यन्ति, नकेवलमेतावत् वर्धन्ते च तत्रैवान्यथा तन्नस्यादित्यर्थः ॥ ६ ॥ अथयदूर्ध्वमिति । यत् अपराह्णादूर्ध्वमस्तमयात् प्राग् तत्कालस्थितमादित्यरूपं स उपद्रवः तदाश्रितान्याह । तदस्येति । तत् अस्यादित्यस्य रूपम् । आरण्याः । अरण्ये स्थिता मृगा अन्वायत्ताः । तत्र ज्ञापकमाह । तस्मादिति । हि यस्मात् ते आरण्या एतस्य साम्न उपद्रवाख्यं यद्रूपं तद्भाजिनस्तदाश्रितास्तस्मात् आदित्यस्योपद्रवाख्यरूपाश्रितत्वादेव ते आरण्याः पुरुषं दृष्ट्वा भीताः सन्तः कक्षमारण्यश्वभ्रं विवरं स्वरक्षकमितिभावेनोपद्रवन्ति उपगच्छन्ति ॥ ७ ॥ अथेति । प्रथमास्तमिते अदर्शनं जिगमिषति सवितरि यत् सवितृरूपं तन्निधनं तद्दृष्ट्यानिधनमुपासीत इत्यर्थः । आदित्यस्य तद्रूपं पितरो अन्वायत्ताः यथोक्तमादित्यरूपं पितृभिरुपजीव्यमित्यत्र ज्ञापकमाह । तस्मादित्यादिना हि य

स्मात् पितर एतस्य साम्नो यन्निधनरूपं तद्भाजिनस्तदाश्रितास्तस्मादेव तान् पितॄन् निदधति शुद्धिं कर्तारो दर्भेषु पितन् क्षिपन्ति तदर्थान् पिण्डान् वा ॥ एवमवयवशः सप्तधा विभक्तं सामोपास्ते स संसारागारान्मुक्तः सन् परं स्थानं प्राप्नोति । इति वाक्यशेषः ॥ ८ ॥

इति द्वितीयाध्यायस्य नवमः खण्डः ॥ ६ ॥

---

**अथ खल्वात्मसम्मितमतिमृत्युसप्तविधं सामोपासीत हिंकार इतित्र्यक्षरं प्रस्ताव इति त्र्यक्षरं तत्समम् ॥ १ ॥**

**आदिरितिद्व्यक्षरं प्रतिहार इति चतुरक्षरं तत इहैकं तत्समम् ॥ २ ॥**

**उद्गीथ इति त्र्यक्षरमुपद्रव इति चतुरक्षरं त्रिभिस्त्रिभिः समं भवत्यक्षरमतिशिष्यते त्र्यक्षरं तत्समम् ॥ ३ ॥**

अथ समस्ते साम्नि सवितारमध्यस्योक्ता सप्तविधोपासना तदानन्तर्य्यमथशब्दार्थः । आत्मसम्मितम् स्वात्मना सामावयवेन मितं ज्ञातं संमितम् । साम्नोऽवयवभूतानि हिंकारप्रभृत्यक्षराणि तेषां त्रित्वेन त्रित्वेन तुल्यतया मितं सामेत्यर्थः । अतिमृत्यु मृत्युपदवाच्य आदित्यः ॥ अहोरात्रकालावर्त्तनेन जगद्विनाशकारणत्वात्तस्य मृत्युत्वमुपपद्यते । मृत्युमतिक्रान्तमतिमृत्यु द्वाविंशत्यक्षरात्मनः साम्नोमृत्युगोचराक्षरसंख्यैकविंशतित्वलक्षणातिरेकित्वादतिमृत्यु । अतिमृत्युसप्तविधसामोपासीत, साम्नः सप्तविधभक्तिनामाक्षराणामादित्यदृष्ट्योपासना कर्तव्येत्यर्थः । साम्नः प्रथमभक्तिनामाक्षराणि प्रदर्शयन्नाह । हिंकार इतीति, हिंकार इति त्र्यक्षरं भक्तिनाम प्रस्ताव इति च भक्तेस्त्र्यक्षरं नाम । अतस्तन्नामद्वयं समम् । उभयोरपि त्र्यक्षरत्वात् ॥ १ ॥

आदिरिति, ओमित्यक्षरमादित्यपदेनोक्तं भवति तच्च द्व्यक्षरं प्रतिहार इति चतुरक्षरम् । ततः प्रतिहारनामत एकं प्रत्येकमक्षरमिहादि

नाम्नि योज्यं स्यात् । किं तत इत्यत आह । तत्सममिति । तत्तस्मान्नामद्वयमपि समं त्र्यक्षरमेव स्यादित्यर्थः ॥ २ ॥

उद्गीथइति त्र्यक्षरम् । उदित्यस्यैकत्वेन प्रसङ्ख्यानात् । उपद्रवइत्यस्य चतुरक्षरत्वेऽपि न त्र्यक्षरत्वहानिरित्याशयेनाह । त्रिभिरिति तन्नामद्वयं त्रिभि स्त्रिभिरक्षरैः समं भवति । उपद्रवे वकाररूपमक्षरमतिशिष्यतेऽतिरिच्यते कथं तस्य त्र्यक्षरत्वं सम्भवति । तस्यैकाक्षरत्वादित्यत आह त्र्यक्षरमिति वइत्येतदपि व्यञ्जनस्वरविसर्गै स्त्र्यक्षरम् । अतस्तत् सममितरनामसदृशं भवत्येवेत्यर्थः ॥ ३ ॥

**निधनमिति त्र्यक्षरं तत्सममेव भवति तानि ह वा एतानि द्वाविंशतिरक्षराणि ॥ ४ ॥**

**एकविंशत्याऽऽदित्यमाप्नोत्येकविंशो वा इतोऽसावादित्यो द्वाविंशेन परमादित्याज्जयति तन्नाकं तद्विशोकम् ॥५॥**

**आप्नोतीहाऽऽदित्यस्य जयं परोहास्याऽऽदित्यजयाज्जयो भवति य एतदेवं विद्वानात्मसम्मितमतिमृत्यु सप्तविधं सामोपास्ते सामोपास्ते ॥ ६ ॥**

निधनमिति त्र्यक्षरं तत्सममेव भवति । त्र्यक्षरसमतया सामत्वं निधनस्य । सप्तनामाक्षराणां सङ्ख्यां दर्शयति तानीति ॥ तान्येतानि हिंकारादीनि निधनान्तान्यक्षराणि द्वाविंशतिः कथम् ? तानि सप्तरूपाणि त्रिधा त्रिधा विभिद्यन्ते । इत्येकविंशतिः।४।तत्रैकविंशत्यक्षरसङ्ख्ययाऽऽदित्यमाप्नोति आदित्यसालोक्यं प्राप्नोति द्वादशमासाः पञ्चर्तवस्त्रय इमे लोकाश्च असावादित्य एकविंश इति श्रुतेः। अवशिष्टेन द्वाविंशाक्षरेण आदित्यात्परं तन्नाकम् , कमितिसुखं तस्य प्रतिषेधोऽकं तन्न भवतीति नाकं कमेवेत्यर्थः । विशोकं विगतशोकम् ॥ ५ ॥ उक्तार्थं विशदयति । आप्नोतीति । एकविंशति सङ्ख्ययाऽऽदित्यस्य जयमाप्नोति परोहास्यैवंविद् आदित्यजयात्

मृत्युगोचरात् परोजयो भवति द्वाविंशत्यक्षरसङ्ख्ययेत्यर्थः । य एतदेवेति-पूर्ववत् । द्विरुक्तिः साप्तविध्यसमाप्त्यर्थः ॥ ६ ॥

इति द्वितीयस्य दशमः खण्डः ॥ १० ॥

---

मनो हिंकारो वाक् प्रस्तावश्चक्षुरुद्गीथः श्रोत्रं प्रतिहारः प्राणो निधनमेतद्गायत्रं प्राणेषु प्रोतम् ॥१॥

स य एवमेतद्गायत्रं प्राणेषु प्रोतं वेद प्राणीभवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान् कीर्त्या महामनाः स्यात्तद्व्रतम् ॥ २ ॥

---

हिंकारादिसामभक्तिप्रतिपाद्यस्य हिंकारादिनाम्न उपास्तिं प्रदर्श्य सम्प्रति प्रागायत्ररथान्तरसामोपासनं प्रस्तूयते । यादृशं क्रममाश्रित्य तेषां कर्मणि प्रयोगः क्रमिणामिष्टस्तेनैव क्रमेण तदुपासना कार्या नान्यथा मनो हिंकारः मनसः सर्वेन्द्रियवृत्तीनां प्राथम्यात् ततो वाक्प्रस्तावः चक्षुरुद्गीथः श्रेष्ठत्वात् । श्रोत्रं प्रतिहारः प्रतिहृतत्वात् । प्राणो निधनम् , उदाहृतानां सुषुप्तौ प्राणे निधनात् । एतद्गायत्रं साम प्राणेषु प्रोतं प्रतिष्ठितम् " प्राणो ह वै गायत्री " ति श्रुत्या गायत्र्याः प्राणस्य संस्तुतत्वात् ॥ १ ॥

प्राणीभवति अविकलकरणोभवति । ज्योग्ज्वलं भवति, व्याध्यादिभिरनुपहत इति यावत् । महामनास्त्वक्षुद्रचित्तः ॥ २ ॥

इति द्वितीयाध्यायस्य एकादशः खण्डः ॥ ११ ॥

---

अभिमन्थति स हिंकारः धूमो जायते स प्रस्तावो ज्वलति स उद्गीथोऽङ्गारा भवन्ति स प्रतिहार उपशाम्यति तन्निधनं संशाम्यति तन्निधनमेतद्रथन्तरमग्नौ प्रोतम् ॥ १ ॥

**स य एवमेतद्रथन्तरमग्नौ प्रोतं वेद ब्रह्मवर्चस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम् ॥२॥**

इति द्वितीयाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

अभिमन्थति स हिंकारः प्राथम्यात् ततोऽग्नेर्धूमो जायते स प्रस्तावः ज्वलति स उद्गीथः हविःसंसर्गेण श्रेष्ठत्वात् ज्वलनस्य अङ्गारा भवन्ति स प्रतिहारस्तेषां प्रतिहृतत्वात् । उपशाम्यति तन्निधनम् । उपशमसंशमशब्दयोः सावशेषनिरवशेषत्वाभ्यां भिन्नप्रवृत्तिनिमित्तकत्वात् पार्थक्य नातः पुनरुक्तिः शङ्क्या । रथन्तरं साम अग्नौ प्रोतम् प्रतिष्ठितम् । मन्थनेन हि अग्नेर्निष्पत्तिर्भवति रथन्तरसाम्नो गीयमानत्वात् । अग्नौ तस्याग्नौ प्रतिष्ठितत्वं सिद्धयतीत्यर्थः ॥ १ ॥

वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसम् । इतरानधीनतेजसः त्विड्रूपत्वम् । अतो ब्रह्मवर्चस्तेजसोर्विशेषस्तेन बृहद्रथान्तरोपासने वक्ष्यमाणे अत्रोदाहृतोपासने च फलवैषम्यं सिद्धम् । अन्नादो दीप्ताग्निः न प्रत्यङ्ङग्नेरभिमुखो नाचामेन्न भक्षयेत् किञ्चिन्न ष्ठीवेत् श्लेष्मनिरसनञ्च न कुर्यात्तद्व्रतम् ॥ २ ॥

इति द्वितीयाध्यायस्य द्वादशः :खण्ड ॥ १२ ॥

---

**उपमन्त्रयते स हिंकारो ज्ञपयते स प्रस्तावः स्त्रिया सह स उद्गीथः प्रति स्त्री सह शेते स प्रतिहारः कालं गच्छति तन्निधनंपारं गच्छति तन्निधनमेतद्वामदेव्यं मिथुनेप्रोतम् १**

**स य एवमेतद्वामदेव्यं मिथुने प्रोतं वेद मिथुनीभवति मिथुनात् मिथुनात्प्रजायते सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान्न कीर्त्या न काञ्चन परिहरेत्तद्व्रतम् ॥२॥**

इति द्वितीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

उपमन्त्रणं संकेतकरणं ज्ञपनं तोषणम् मारणतोषणनिशामनेषु मित्त्वाद्ध्रस्वः। एकपर्य्यंकोपवेशनं सहशयनम्। प्रतिस्त्रीशयनम्=स्त्रिया आभिमुख्येन शयनम्। पारं गच्छति=समाप्तिं गच्छति तन्निधनम्। मैथुननिवृत्तिरित्यर्थः। वायोरपाञ्च मिथुनतया संसर्गाद्वामदेवस्योत्पत्तेरुक्तत्वात्तस्य मिथुने प्रतिष्ठितत्वं युक्तमिति भावः ॥१॥

मिथुनीभवति सर्वदा स्त्रिया अवियुक्तोभवति। मिथुनात् प्रजायत इत्युक्तिरमोघरेतस्त्वाभिप्रायेण ॥ २ ॥

इति द्वितीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

**उद्यन् हिंकार उदितः प्रस्तावो मध्यंदिन उद्गीथोऽपराह्णः प्रतिहारोऽस्तंयन्निधनमेतद्बृहदादित्ये प्रोतम्॥ १ ॥**

**स य एवमेतद्बृहदादित्ये प्रोतं वेद तेजस्यन्नादो भवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या तपन्तं न निन्देत्तद्व्रतम् ॥ २ ॥**

इति द्वितीयाध्यायस्य चतुर्दशःखण्डः ॥१५॥

---

उद्यन्निति। उदयकालावच्छिन्नसविता हिंकारपदवाच्यः एवमग्रेपि ॥ १ ॥ सइत्यादि पूर्ववद्व्याख्येयम् ॥ २ ॥

इति द्वितीयाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

**अभ्राणि संप्लवन्ते स हिंकारो मेघो जायते स प्रस्तावो वर्षति स उद्गीथो विद्योतते स्तनयति स प्रतिहार उद्गृह्णाति तन्निधनमेतद्वैरूपं पर्जन्ये प्रोतम् ॥ १ ॥**

**स य एवमेतद्वैरूपं पर्जन्ये प्रोतं वेद विरूपांश्चसुरूपांश्च पशूनवरुन्धे सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या वर्षन्तं न निन्देत्तद्व्रतम् ॥ २ ॥**

इति द्वितीयाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

संप्लवः सञ्चारः । अम्भरणात् अभ्राणित्युच्यते उदकसम्पन्न-त्वान्मेघः । अभ्रादिभिः पर्जन्यस्य वैरूप्यमनेकरूपत्वाद्द्रष्टव्यम् ॥ १ ॥ विरूपान् विरुद्धनामरूपान् सुरूपान् शोभनरूपान् । अवरुन्धे प्राप्नोति ॥ २ ॥

इति द्वितीयाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥



वसन्तो हिंकारः ग्रीष्मः प्रस्तावो वर्षा उद्गीथः शरत्प्र-तिहारो हेमन्तो निधनमेतद्वैराजमृतुषु प्रोतम् ॥ १ ॥

स य एवमेतद्वैराजमृतुषु प्रोतं वेद विराजति प्रजया पशुभिर्ब्रह्मवर्चसेन सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्यर्तुंनिनिन्देत्तद्व्रतम् ॥ २ ॥

इतिद्वितीयाध्यायस्य षोडशः खण्डः ॥ १६ ॥



वैराजाख्यं साम ॥ १ ॥ एतदिति यद्दतूनामन्नोत्पत्तिनिमित्तत्वात् विराडात्मनश्चान्नत्वात् तस्य तेषु प्रतिष्ठितत्वात्तद्द्वारा वैराजमपि साम तेषु प्रोतमिति भावः ॥ २ ॥



पृथिवी हिंकारोऽन्तरिक्षं प्रस्तावो द्यौरुद्गीथो दिशः प्रति-हारः समुद्रो निधनमेताः शक्वर्यो लोकेषु प्रोताः ॥१॥

स य एवमेताः शक्वर्यो लोकेषु प्रोता वेद लोकीभवति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या लोकान्ननिन्देत्तद्व्रतम् ॥ २ ॥

इति द्वितीयाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

———

शक्वर्य्य इत्यस्य नित्यंवहुवचनत्वं रेवत्य इव महानाम्नीषु ऋचु शक्कर्यो गीयन्ते ॥ १ ॥ लोकीभवति लोकफलेन युक्तो भवति ॥२॥

इति द्वितीयोध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

अजा हिंकारोऽवयः प्रस्तावो गाव उद्गीथोऽश्वा प्रतिहारः पुरुषो निधनमेता रेवत्यः पशुषु प्रोताः ॥१॥

स य एवमेता रेवत्यः पशुषु प्रोता वेद पशुमान् भवति सर्वमायुरेति ज्योग्जीवति महान्प्रजया पशुभिर्भवति महान् कीर्त्या पशून्न निन्देत्तद्व्रतम् ॥ २ ॥

इति द्वितीयाध्यायस्याष्टादशः खण्डः ॥१८॥

---

रेवत्यइति सामनायधेयं वहुवचनान्तम् "पशवो वै रेवती" ति श्रुत्या पशुषु रेवतीनां प्रतिष्ठितत्वं द्रष्टव्यम् ॥

इति द्वितीयाध्यायाष्टादशः खण्डः ॥ १८ ॥

---

लोम हिंकारस्त्वक् प्रस्तावो मांसमुद्गीथोऽस्थिप्रतिहारो मज्जानिधनमेतद्यज्ञायज्ञीयमङ्गेषु प्रोतम् ॥ १ ॥

स य एव मेतद्यज्ञायज्ञीयमङ्गेषु प्रोतं वेदाङ्गीभवति नांगेन विहूर्च्छति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या सम्वत्सरं मज्ज्ञो नाश्नीयात्तदव्रतं मज्ज्ञो नाश्नीयादिति वा ॥ २ ॥

इति द्वितीयाध्यायस्य एकोनविंशः खण्डः ॥ १६ ॥

---

"रसो वै यज्ञायज्ञीयमिति" श्रुतेरन्नरसविकारेण लोमादीनां सम्वन्धाद्यज्ञायज्ञीयं सामाङ्गेषु प्रतिष्ठितमित्याह । एतदिति । मज्जा मांसविशेषः विहूर्च्छति । अङ्गेन हस्तपादादिना न कुटलीभवति ।

"हूर्च्छाकौटल्य" इति धातुः । मज्ज्ञो मांसानि सर्वान्नाश्नीयात् न भक्षेयत् ॥ २ ॥

इति द्वितीयाध्यायस्यैकोनविंशः खण्डः ॥ १६ ॥

---

**अग्निर्हिंकारो वायुः प्रस्ताव आदित्य उद्गीथो नक्षत्राणि प्रतिहारश्चन्द्रमा निधनमेतद्राजनं देवतासु प्रोतम् ॥१॥**

**स य एवमेतद्राजनं दैवतासु प्रोतं वेदेतासामेव देवतानां सलोकतां सार्ष्टितां सायुज्यं गच्छति सर्वमायुरेति ज्योग्जीवति महान् प्रजया पशुभिर्भवति महान् कीर्त्या ब्राह्मणान्ननिन्देत्तद्व्रतम् ॥ २ ॥**

इति द्वितीयाध्यायस्य विंशः खण्डः ॥ २० ॥

---

एतद्राजनमिति राजनस्य साम्नः देवातासु प्रतिष्ठितत्वं यतो देवतानां दीप्तिमत्वादित्यर्थः ॥ १ ॥ सार्ष्टिता समानमत्वं सायुज्यं समान भोग्यत्वम् । ब्राह्मणानिति । "एते वै देवाः प्रत्यक्षं यद्ब्राह्मणा" इतिश्रुतेः ब्राह्मणादीनि दैवतानि न निन्देदिति भावः ॥ २ ॥

इति द्वितीयाध्यायस्य विंशः खण्डः ॥ २० ॥

---

**त्रयी विद्या हिंकारस्त्रयइमेलोकाः सः प्रस्तावोऽग्निर्वायुरादित्यः स उद्गीथो नक्षत्राणि वयांसि मरीचयः स प्रतिहारः सर्पा गन्धर्वाः पितरस्तन्निधनमेतत्साम सर्वस्मिन् प्रोतम् ॥ १ ॥**

**स य एवमेतत्साम सर्वस्मिन् प्रोतं वेद सर्वंऽह भवति।२।**

**यानि पञ्चधा त्रीणि त्रीणि तेभ्यो न ज्यायः परमन्यदस्ति ॥ ३ ॥**

**यस्तद्वेद स वेद सर्वं सर्वादिशो वलिमस्मै हरन्ति सर्व-मस्मी सुपासीत तद्व्रतम ॥ ४ ॥**

इति द्वितीयाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

---

त्रयीति। "ऋग्वेदोऽग्नेर्यजुर्वेदो वायोरादित्यात्सामवेद" इति-श्रुत्या त्रयीविद्याया अग्न्यादिकार्यत्वावगमात् अग्न्यादिदृष्ट्यनन्तरं त्रयी-विद्यादृष्ट्या सामभक्तय उपास्या इत्याशयेनाह। त्रयीविद्या हिंकारइति। हिंकारत्रयीविद्ययोः प्रथमत्वेन साम्यात् त्रयीविद्यादिदृष्ट्या हिंकारोपास्तिः कर्त्तव्या ततः त्रयीविद्यासाध्यकर्मफलत्वात् लोकानां तद्दृष्ट्या प्रस्तावोपासना अग्निवाय्वादित्यानां श्रेष्ठत्वादुद्गीथत्वम्। नक्ष-त्रवयोमरीचीणां प्रतिहृतत्वात् प्रतिहारत्वम्। अत्र सामनामविशेषा-नुक्तेरुक्तावशिष्टं सर्वं साम इति गम्यते ॥ ३ ॥

तं वेद सर्वं ह भवतीति काम्यमानं सर्वमाप्नोति। यानि पञ्चधा त्रीणि त्रीणि यानि त्रयीविद्या हिंकारस्त्रय इमे लोका इत्युक्तानि त्रीणि पञ्चधा पञ्चप्रकारेण हिंकारादिविभागैः प्रोक्तानि तेभ्यः पञ्चत्रिकेभ्यः ज्यायो महत्तरं परमुत्कृष्टं श्रेयः किमपि नास्ति सर्वं वेद इति। एतदु-पासकः सर्वज्ञो भवति। सर्वदिग्वर्त्तिनोऽपि पुंमास अस्मै उपासकाय वलिम, उपहारान् समर्पयन्ति सर्वमस्मोत्युपासीत इति सामत्वाव-च्छिन्ने प्रागुपदर्शितरीत्या सर्वाश्रयत्वे स्वाभिन्नत्वेनोपास्तिः विधेया। द्विरुक्तिः सामोपासना समाप्त्यर्था॥ ४ ॥

इति द्वितीयाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

---

**विनर्दिसाम्नो वृणे पशव्यमित्यग्नेरुद्गीथोऽनिरुक्तः प्र-जापतेर्निरुक्तः सोमस्य मृदुश्लक्ष्णं वायोः श्लक्ष्णंवलवदि-न्द्रियस्य क्रौंचं वृहस्पतेरपध्वातं वरुणस्य तान्सर्वानेवोपसेवेत वारुणं त्वेव वर्जयेत्॥ १ ॥**

**अमृतत्वं देवेभ्य आगायानीत्यागायेत्स्वधां पितृभ्य आशां मनुष्येभ्यस्तृणोदकं पशुभ्यः स्वर्गलोकं यजमानायान्न मात्मन आगायानीत्येतानि मनसाध्यायन्नप्रमत्तस्तुवीत ॥२॥**

एवं साम्नो व्यस्तसमस्तोपास्तिरभिहिता, तत्र साम्न उद्गान-प्रकारं सप्रभेदं प्रस्तूयते । विनर्दीत्यादिना । विशिष्टो नर्दःविनर्दः स्वरविशेषः सोऽस्यास्तीतिविनर्दि गानमितिवाक्यशेषः । वृषभस्वरवन्मेघनर्द्दनवद्वा । तच्च गानं साम्नः सामसम्बन्धि पशव्यं पशु-हितम् " उगवादिभ्योयदि " ति । तत् वृणे प्रार्थये । पुरुषव्यत्यय-च्छान्दसः । सर्वोत्तमत्वात् । अग्नेरुद्गीथोऽनिरुक्तः अग्निदैवत्यं चो-द्गीथउद्गानमनिरुक्तमस्पष्टं भवति । प्रजापतेः निरुक्तः प्रजापति-दैवतो गानविशेषः निरुक्तः स्पष्टः । सोमदैवतः स उद्गीथः गानं मृदुश्लक्ष्णंच वायोर्वायुदैवत्यम् । इन्द्रस्यैन्द्रं गानं श्लक्ष्णं वलवच्च प्रय-त्नाधिक्योपेतम् । वार्हस्पत्यं गानं क्रौञ्चपक्षिनिनादतुल्यम् । वारुणं गान मपध्वान्तं भिन्नकांस्यरवसमम् । तान् सर्वानेवोपसेवत प्रयुञ्जीत । वारुणमपध्वान्तं वर्जयेत् ॥ १ ॥

अमृतत्वमिति । देवेभ्योऽमृतत्वप्राप्तिमागायानि गानेन साध-यानीतिगानं कुर्यात् । यथा प्रार्थतते तथाफलं भवति । स्वधां पितृभ्यः आगायानि मनुष्येभ्य आशां प्रार्थनामागायानि साधयानि एवमुत्तरत्रा-प्यागायानीति योज्यम् । एतानि मनसाध्यायन्नप्रमत्तः इति एतानि दैवा-मृतत्वादीनि फलानि मनसा ध्यायन् स्वरोष्मव्यञ्जनस्थानप्रयत्नादि-ष्वप्रमत्तः स्तोत्रं कुर्यादित्यर्थः ॥ २ ॥

**सर्वे स्वराइन्द्रस्यात्मानः सर्वे ऊष्माणः प्रजापतेरात्मनः सर्वे स्पर्शा मृत्योरात्मानस्तं यदि स्वरेषूपालभेतेन्द्रं शरणं प्रपन्नो-ऽभूवं स त्वा प्रतिवक्ष्यतीत्येनं ब्रूयात् ॥ ३ ॥**

**अथ यद्येनमूष्मसूपालभेत प्रजापतिं शरणं प्रपन्नोऽवंभू**

स त्वा प्रतिपेत्स्यतीत्येनं ब्रूयादथ यद्येनं स्पर्शेषूपालभेत मृत्युं शरणं प्रपन्नोऽभूवं स त्वा प्रतिधक्ष्यतीत्येनं ब्रूयात् ॥ ४ ॥

सर्वे स्वरा घोषवन्तो बलवन्तो वक्तव्या इन्द्रे बलं ददानीति सर्व ऊष्माणोऽग्रस्ता अनिरस्ता विवृता वक्तव्याः प्रजापतेरात्मानं परिददानीति सर्वे स्पर्शा लेशेनानभिनिहिता वक्तव्या मृत्योरात्मानं परिहराणीति ॥ ५ ॥

इति द्वितीयाध्यायस्य द्वाविंशः खण्डः ॥ २२ ॥

---

सर्वे स्वराः अकारादयः । इन्द्रस्यात्मानः देहावयवतुल्याः । सर्वे ऊष्माणः षशसहाः । प्रजापतेर्विराजः कश्यपस्य वात्मानः । सर्वे स्पर्शाः कादयो मावसाना वर्णा मृत्योः आत्मानः किं तत इत्यत आह । तमिति । तमुद्‌गातारं यदि स्वरेषु सम्यगुच्चारितेष्वप्युपालभेत, स्वरः त्वया दुष्टः प्रयुक्तः इत्युपालम्भं कुर्यादसुरस्तदाहमिन्द्रं स्वराधिपतिं शरणं प्रपन्नोऽभूवम्, स्वराधिपतीन्द्रप्रसादात् सम्यगेवोच्चारणं कृतवानस्मीति यावत् स इन्द्रस्त्वा त्वां प्रतिवक्ष्यति शिक्षावचनमितिशेषः । इत्येनमुपालम्भकर्त्तारं प्रतिब्रूयात् ॥ ३ ॥

अथ यद्येनमुद्‌गातारमूष्मसु सम्यक् प्रयुक्तेष्वपि उपालभेतोक्तरीत्योपालम्भं कुर्यादसुरस्तदाहं प्रजापतिमूष्माधिपतिं शरणं प्रपन्नोऽभूवम् स त्वां प्रतिपेत्स्यति संचूर्णयिष्यतीत्येनं ब्रूयात् । अथ यद्येनं स्पर्शेषूपालभेत तदा मृत्युं स्पर्शाधिपं शरणं प्रपन्नोऽभूवं स त्वां प्रतिधक्ष्यति भस्मीकरिष्यतीत्येनं ब्रूयात् ॥४॥

ननु कथं स्वरोष्मस्पर्शोच्चारणं कर्तव्यं यत्रान्यैरुपालम्भे कृते एवं वक्तव्यमित्यतः स्वराद्युच्चारणप्रकारं दर्शयति । सर्व इति । स्वराधिपे इन्द्रे बलं ददानीति सङ्कल्प्येन्द्रबलदानार्थं सर्वे स्वराः घोषवन्तः । ध्वनिविशेषवन्तो बलवन्तोऽतिप्रयत्नवन्तो वक्तव्याः । घोषपूर्वकमतिप्रयत्नेन स्वराणामुच्चारणं कर्तव्यमित्यर्थः । ऊष्माधिपतिप्रजापतेः स्वात्मानं परिददानि समर्पय इति सङ्कल्प्य सर्वे ऊष्माणः अग्रस्ता अन्तरेवाप्रवेशिताः । अनिरस्ता बहिरेव नाक्षिप्ताः विवृताः विवृतप्रयत्नयुक्ता वक्तव्याः । मृत्योः स्पर्शाधिपतेः सकाशादात्मानं मोक्षयोग्यं परिहराणि

मोक्षयोग्यान् मृत्युवर्जितान् करिष्यामीति सङ्कल्प्य सर्वे स्पर्शलेशेनानभिद्दता लेशतो संस्पृष्टाः वक्तव्याः ॥ ५ ॥

इति द्वितीयाध्यायस्य द्वाविंशः खण्डः ॥ २२ ॥

---

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनंदानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्य्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ॥ १ ॥

प्रजापतिर्लोकानभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयी विद्या संप्रास्रवत्तामभ्यतपत्तस्या अभितप्ताया एतान्यक्षराणि सम्प्रास्रवन्त भूर्भुवःस्वरिति ॥ २ ॥

प्रणवत्वेन ब्रह्मोपासनं विधातुमारभते । त्रय इति । धर्मस्कन्धा धर्माख्यस्य वृक्षस्य शाखाभूता विभागा इति यावत् । त्रयः के त इत्यत आह—यज्ञ इत्यादिना । यज्ञोऽध्ययनं दानमित्येतैरुपलक्षितो गृही प्रथम एकस्कन्धः । तप एकः तपःशब्देन कायक्लेशात्मकमालोचनात्मकं तपो गृह्यते तेन तद्वानुपलक्षणीयः । तापसो वनस्थो यतिश्च द्वितीयः । आचार्य्यकुलवासी ब्रह्मचारी । आत्मानं स्वात्मानम्, आचार्य्यकुलमत्यन्तवमसादयन् । अत्यन्तं यावज्जीवं नियमादिभिराचार्य्यकुलेऽवसादयन् देहं क्षयन् तृतीयस्कन्धः । अत्यन्तेतिविशेषणान्नैष्ठिक इति लभ्यते । त एते गृहस्थोवनस्थोयतिर्ब्रह्मचारी चेत्येते सर्वे पुण्यलोकाः पुण्यसाध्यो लोको येषां ते तथोक्ता भवन्ति । तत्रोत्तमश्लोकावलोकितो भगवदीयकृपाभाजनो भगवद्भावापत्तिरूपनिःश्रेयोऽभिलाषी वासुदेवानुग्रहलब्धानवरतस्मृतिसन्तानः कश्चिदधिकारिविशेषस्तद्भावं प्राप्नोतीत्येतद्बोधयितुमाह । ब्रह्मसंस्थोऽमृतत्वमेतीति । परब्रह्मणि वासुदेवे संस्थितो निरुक्तविशेषणविशिष्टः कश्चिदधिकारिविशेषोऽमृतत्वं भगव-

द्भावापत्तिरूपं 'मुक्तिमेति प्राप्नोति। "मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये। यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः॥ आब्रह्मभुवनाल्लोकाः पुनरावर्त्तिनोऽर्जुन। मामुपेत्य तु कौन्तेय पुनर्जन्म न विद्यते।" इति श्रीमुखवचनात्। निगदितञ्चैतत् आचार्य्येण वादरायणेन। अनुष्ठेयं वादरायणः साम्यश्रुतेः। ३। ४। १६॥ इत्यत्र वाख्यतञ्चैतत् आचार्य्यचरणैर्भाष्यकारैः श्रीश्रीनिवासाचार्य्यैस्तृतीये। चतुर्थपादे तथाहि तत्र कश्चिद्भगवत्तत्वविन्मुमुक्षुर्भगवत्कृपापात्रस्तन्निष्ठस्तद्भावं प्राप्नोतीत्येतद्बोधनायाह। ब्रह्मसंस्थोऽमृतत्वमेतीति॥ १॥

प्रायो मुमुक्षुणा जप्यो मन्त्रश्चोंकारः सर्ववेदार्थतया सर्वसारत्वात् तत्प्रतिपाद्यं ब्रह्मएवेतिनिरूपयितुमाख्यायिकां प्रस्तौति। प्रजापतिरित्यादिना। प्रजापतिः चतुर्मुखः लोक्यते। परमपरं वस्त्वेभिरिति लोकाः शब्दराशयस्तानभ्यतपत् किमत्र सारभूतमिति पर्य्यालोचयत् तेभ्योऽभितप्तेभ्यः पर्य्यालोचितेभ्यः तेभ्यः त्रयी विद्या ऋगादिवेदविद्या संप्रास्रवत्। सारत्वेन व्यज्ञायत तां त्रयीविद्यामभ्यतपत् किमत्र सारभूतमिति पर्य्यालोचयत्। तस्यास्त्रयीविद्याया अभितप्ताया एतानि वक्ष्यमाणान्यक्षराणि संप्रास्रवन्त व्यक्तान्यभवन्। त्रयीविद्यासारत्वेन प्रजापतिना ज्ञातानीति यावत्। तानि कान्यक्षराणीत्यत आह। भूर्भुवःस्वरिति व्याहृतयः॥ २॥

**तान्यभ्यतपत्तेभ्योऽभितप्तेभ्य ओंकारः सम्प्रास्रवत्तद्यथा-शंकुना सर्वाणि पर्णानि संतृण्णान्येवमोंकारेण सर्वा वाक् संतृण्णोंकार एवेदं सर्वमोंकारएवेदं सर्वम्॥ ३॥**

इति द्वितीयाध्यायस्य त्रयोविंशः खण्डः॥ २३॥

---

तानि त्रीण्यक्षराण्यभ्यपत्। तेभ्योऽभितप्तेभ्यः ओंकारः संप्रास्रवत् व्यक्तोऽभवत्। तत्प्रतिपाद्यं परब्रह्मतस्य सर्वसारत्वमुपपादयति। तद्यथेति। तन्निदर्शनं यथा शङ्कुना पर्णनालेन सर्वाणि पर्णानि

संतृण्णानि व्याप्तानि एवमोंकारेण सर्वा वाक् व्याप्ता । ओंकार एव सर्वं वाङ्मयम् । अत ओंकारप्रतिपाद्यस्य परब्रह्मणः वासुदेवस्योपासनं कर्त्तव्यमित्यर्थः । द्विरुक्तिरादरार्था ॥ ३ ॥

इति द्वितीयाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥

---

**ब्रह्मवादिनो वदन्ति यद्वसूनां प्रातःसवनं रुद्राणां माध्यंदिनं सवनमादित्यानां विश्वेषाञ्च देवानां तृतीयसवनम् ॥१॥**

**क्व तर्हि यजमानस्य लोक इति स यस्तं न विद्यात् कथं कुर्यादथ विद्वान् कुर्यात् ॥ २ ॥**

**पुरा प्रातरनुवाकस्योपाकरणाज्जघनेन गार्हपत्यस्योदङ् मुख उपविश्य स वासवं सामाभिगायति ॥ ३ ॥**

ब्रह्माङ्गात् यज्ञस्याङ्गानि कानिचित्कर्माण्युपदिशन्नाह ।

ब्रह्मवादिन इति । ब्रह्मवादिनः शिष्या वदन्ति गुरून् प्रतीतिशेषः । किं यत् प्रातःसवनं स्वरः वसूनां वसुस्वामिकमतो भूर्लोकोऽपि वसूनामेव प्रातःसवनाधिपतीनामेव भूलोकाधिपतित्वात् । माध्यंदिनं सवनं रुद्राणामतोऽन्तरीक्षलोकोऽपि रुद्राणां मध्यंदिनसवनाधिपतीनामन्तरीक्षलोकाधिपतित्वात् । तृतीयं सवनमादित्यानां विश्वेषां देवानाञ्चातः स्वर्गलोकोऽपि तेषामेव तेषां तृतीयसवनाधिपतित्वात् ॥१॥ तर्हि कः यजमानस्य लोको यदर्थमयं यजते भूलोकादीनामन्याक्रान्तत्वात् इति वदन्तीत्यन्वयः ॥ तत्र गुरुभिरुक्तं समाधानप्रकारमाह स य इति । यः पुरुषः तद्वक्ष्यमाणलोकप्राप्तिप्रकारं न विद्यात् कथं कुर्यात् यज्ञादिकमिति शेषः । यतो वक्ष्यमाणलोकप्राप्तिप्रकाराज्ञाने यज्ञादिकर्तृत्वमेवानुपपन्नमथ कस्माद्विद्वान् कुर्यात् ॥ २ ॥ किं कर्तव्यमित्यत आह । पुरेति । स यजमानः प्रातरनुवाकस्य । अप्रगीतमृग्जातं शस्त्रं यत् प्रातःकाले शस्यते प्रातरनुवाकं तस्योपाकरणात् उपक्रमणात् प्रारम्भादिति यावत् । गार्हपत्यस्य जघनेन

पश्चिमदेशे उदङ्मुख उपविश्य वासवं वसुदेवताकं सामाभिगायति ॥ ३ ॥

**लो३कद्वारमपावा ३र्णू ३३पश्येम त्वा वयं रा३३३३३हुम्३ आ३३जा ३यो ३आ ३२१११ इति ॥ ४ ॥**

गानमन्त्रमाह । लोकेति । त्वं लोकद्वारं भूलोकप्राप्तिद्वारम् अपावार्णू ३ अपावृणु अपगतावरणं कुरु । तेन द्वारेण वयं त्वां पश्येम किमर्थं राज्यायेति सम्बधः ॥ हुमित्यादिर्मन्त्रबीजाक्षरम् । राज्याय त्वद्दर्शनेन त्वदनुज्ञया पृथिवीप्रयुक्तभोगायेत्यर्थः ॥ ४ ॥

**अथ जुहोति नमोऽग्नये पृथिवीक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि ॥ ५ ॥**

**अत्र यजमानः परस्तादायुषः स्वाहाऽपजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै वसवः प्रातःसवनं सम्प्रयच्छन्ति ॥ ६ ॥**

**पुरा माध्यंदिनस्य सवनस्योपाकरणाज्जघनेनाऽऽग्नीध्रीयस्योदङ्मुख उपविश्य स रौद्रं सामाभिगायति ॥ ७ ॥**

**लो३कद्वारमपावा३र्णू ३३पश्येम त्वा वयं वैरा३३३३३हुं३ आ३३ज्या ३यो ३आ३२१११इति ॥ ८ ॥**

**अथ जुहोति नमो वायवेऽन्तरिक्षक्षिते लोकक्षिते लोकं मे यजमानाय विन्दैष वै यजमानस्य लोक एतास्मि ॥९॥**

**अत्र यजमानः परस्तादायुषः स्वाहापजहि परिघमित्युक्त्वोत्तिष्ठति तस्मै रुद्रा माध्यंदिनं सवनं संप्रयच्छन्ति ॥१०॥**

अथोक्तसामगानानन्तरं जुहोति जुहुयात् । होममन्त्रमाह—नम इति । लोकक्षिते लोकनिवासाय । क्षि निवासगत्योरिति धातुः । तदेवनिर्देशेनाह पृथिवीक्षिते अग्नये नमोऽस्तु मे मह्यं यजमानाय लोकं यजमानप्राप्तिभोग्यं लोकं विन्द प्रापय । कोऽसौ यजमानप्राप्तियोग्यलोक इत्यत आह । एष वै भूलोकरूपो यजमानस्य लोकः ।

कुतः । अत्र भूलोकं प्रति यजमानोऽहमायुषः परस्तात् मरणानन्तरम् एतास्मि अतस्तं लोकं विन्देत्यर्थः ॥ ५ ॥ यजमानोऽहमायुषः परस्तादूर्ध्वं मृतः सन् । स्वाहेति जुहोति अग्नौ तदनन्तरं हे वसो प्रार्थनादिना प्रपन्नस्त्वं परिघं लोकद्वारार्गलम् । अपजहि । अपनय इत्येव मन्त्रमुक्त्वोत्तिष्ठति । एवं कृते किं स्यादित्यत आह । तस्मा इति । यजमानाय वसवः प्रातःसवनं तत्कालकर्त्तव्यं सम्प्रयच्छन्ति । निर्विघ्नतया सम्पादयन्ति । ततश्च भूलोकं तद्गतभोगविशेषञ्च संप्रच्छन्तीत्यर्थः । एवमुत्तरत्रापि योजना द्रष्टव्या ॥६॥

अग्नीध्रीयस्य । दक्षिणाग्नेः । ७ । ८ । ९ । १० ॥

पुरा तृतीयसवनस्योपाकरणाज्जघनेनाहवनीयस्योदङ्मुख उपविश्य स आदित्यं सवैश्वदेवं सामाभिगायति ॥ ११ ॥

लो३करद्वामपा३वार्णू३३पश्ये मत्वा वयं स्वरा३३३३हुं३ आ३३ज्या३यो३आ३२१११ इति ॥ १२ ॥

आदित्यमथवैश्वदेवं लो३कद्वारमपावा३र्णू३३पश्येम त्वा वयं सम्ना ३३३३हुं३ आ३३ज्या३यो३आ३२१११ । इति॥१३॥

अथ जुहोति नम आदित्येभ्यश्च विश्वेभ्यश्च देवेभ्यो दिविक्षिद्भ्यो लोकक्षिद्भ्यो लोकं मे यजमानाय विन्दत ॥१४॥

एष वै यजमानस्य लोक एतास्म्यत्र यजमानःपरस्तादायुषः स्वाहापहतपरिघमित्युक्त्वोतिष्ठति ॥ १५ ॥

तस्मै आदित्याश्च विश्वे च देवास्तृतीयं सवनं संप्रयच्छन्त्येष वै यज्ञस्य मात्रां वेद य एवं वेद य एवं वेद ॥ १६ ॥

इति द्वितीयाध्यायस्य चतुर्विंशः खण्डः ॥ २४ ॥

---

इति छान्दोग्योपनिशद्ब्राह्मणे द्वितीयोऽध्यायः ॥

विन्दत इति वहुवचनम् । यज्ञस्य मात्रां याथात्म्यम् । द्विरुक्तिरध्यायसमाप्त्यर्था ॥

अशेषरसिकचक्रचूडामणिश्रीस्वामिहरिदासपदाश्रिताश्रितानुगेना-मोलकरामविदुषा संगृहीतायां छान्दोग्योपनिषत्प्रकाशिकाटीकायां द्वितीयोऽध्यायः ॥ २ ॥

---

## अथ तृतीयाध्यायस्य प्रथमः खंडः ।

**ओ३म् । असौ वा आदित्यो देवमधु तस्य द्यौरेव तिरश्चीनवंशोऽन्तरिक्षमपूपो मरीचयः पुत्राः ॥१॥**

**तस्य ये प्राञ्चो रश्मयस्ता एवास्य प्राच्यो मधुनाड्यः । ऋच एव मधुकृत ऋग्वेद एव पुष्पं ता अमृता आपस्ता वा एता ऋचः ॥ २ ॥**

पूर्वाध्यायान्ते यज्ञस्य मात्रा वेदेति यज्ञकर्माङ्गानि कर्माणि सामहोम-मन्त्रोत्थानानि निरूप्य सर्वप्राणिकर्मफलप्रदस्यादित्यस्योपासनं प्रस्तूयते । असाविति । असौ वादित्यो देवमधु देवानां वसुप्रभृतीनां मधु मधुतुल्यः प्रसिद्धमधुनोपमीयते देवानां मध्विव मध्विति तर्पकत्वेन साम्यात् । अतोऽस्य विवक्षितं तिरोवंशादिकमाह । तस्येति । तस्य मधुनो द्युलोक एवाधारभूतस्तिर्यकप्रसारितवंशः । अन्तरिक्षनिवासिभिरुपरिविसारि-तनयनैस्तिर्यग्गतमेव द्यौर्लक्ष्यते अतो दिवि तिरश्चीनवंशदृष्टिरुपपन्ना भवति । अन्तरिक्षं मध्वपूपः मध्वाश्रयोऽपूपा हि तिरश्चीनवंशलग्नः सन् लम्वते एवमन्तरिक्षमपि द्युलोकसंलग्नं लम्वमानमिवाभातीत्यतो मध्व पूपत्वम् तस्य । मरीचयः पुत्राः । भूमेराकृष्टा रश्मिस्था आपो मरीचिपदेन लक्ष्यन्ते तासां पुत्रत्वं प्रकटयति पुत्रा इति । सवितृमरीचिस्था आपः पुत्रा इव पुत्राः मध्यपूपनाडीसंस्थिता हि प्रसिद्धभ्रमरपुत्राः । आदित्य-रश्मिस्था आप आदित्यलक्षणक्षौद्रपटलमध्वपूपान्तर्गतरश्मिनाडीस्था इति साम्यात् ॥१॥ तस्येति ।।तस्य सवितुः ये प्राञ्चः प्राच्यां दिशि गताः रश्मयस्ता एवास्य मधुनो नाड्यो मधुनाड्यः मध्वाधारच्छिद्रस्थानीयाः

ऋच एव मधुकृतः भ्रमरस्थानीया मधुव्यक्तिकृतत्वेन ऋग्भ्रमरयोः साम्यात्। ऋग्वेद एव पुष्पं ऋग्वेदविहितकर्म पुष्पस्थानीयम् प्रसिद्धपुष्पमपि मधुकृत्पोषकत्वेन साम्यात्। ऋग्वेदोऽपि कर्मपोषकः। इदानीं मधुव्यक्तिप्रकारमाह—ता अमृता इति। ताः सोमाज्यपयोरुपा आपः कर्मणि प्रयुक्ता अग्नौ प्रक्षिप्ता भवन्ति। अग्निपाकाभिनिर्वर्त्यत्वेन तासामपूर्वरसात्मत्वं भवतीतिभावः। तद्रसानादाय तावा एता ऋचः पुष्पेभ्य रसमाददाना इव भ्रमरा ऋचः ॥२॥

**एतमृग्वेदमभ्यतपंस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यं रसोऽजायत ॥३॥**

**तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य रोहितं रूपम् ॥ ४ ॥**

इतितृतीयाध्यायस्य प्रथमःखण्डः ॥१॥

---

एतत् ऋग्वेदविहितं कर्म अभ्यतपत् पर्य्यालोचयत्। तस्य ऋग्वेदस्याभितप्तस्य यशआदिकं रसोऽजायत। यथा मधुकरैः चूष्यमाणेभ्यः पुष्पेभ्य रसो निष्पद्यते तद्वत् स्तोत्रशस्त्राद्यङ्गभावापन्नैः ऋग्मन्त्रैः क्रियमाणात् कर्मणः सकाशात् मधुनिर्वर्तकः सोमाज्यादिरसो निष्पद्यते इति भावः ॥ ३ ॥

तत् ऋग्वेदाद्यभिहितकर्मनिष्पन्नं यशआदिलक्षणं फलं व्यक्षरत् विशेषेणागमत् गत्वा च तत्। आदित्यमभितोऽश्रयत्। आदित्यमभितः पार्श्वतः पूर्वभागम्। अश्रयत् स्थितमभवत्। कि तत् कर्म फलं यदादित्यमाश्रित्य तिष्ठतीत्याशङ्क्याह। तद्वेति। यदेतत् प्रत्यक्षतो दृश्यमानमादित्यस्य रोहितं रूपं तत् तत्र स्वयमपि लोहिताकारं तत् ऋग्वेदाभिहितं कर्मफलम्। एतत। यशआदिरूपम्। सवितू रोहितरूपे तद्बुद्धिकार्येति यावत् ॥ ४ ॥

इति तृतीयाध्यायस्य प्रथमः खण्डः ॥१॥

---

अथ येऽस्य दक्षिणा रश्मयस्ता एवास्य दक्षिणा मधुनाड्यो यजूंष्येव मधुकृतो यजुर्वेद एव पुष्पं ता अमृता आपः ॥ १ ॥

मध्वन्तरं दर्शयति–अथेति। येऽस्य सवितुः दक्षिणा दिशि गता रश्मयः। ता एवास्य दक्षिणा मधुनाड्य इव मध्वाधारच्छिद्राणि। मधु कुर्वन्तीति मधुकृतो भ्रमरा इव यजूंषि यजुर्वेदऋचः। यजुर्वेदविहितं कर्म पुष्पस्थानीयं पुष्पम् ता एव सोमाद्या अमृता आपः ॥१॥

तानि वा एतानि यजूꣳष्येतं यजुर्वेदमभ्यतपꣳस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यं रसोऽजायत ॥२॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य शुक्लं रूपम् ॥ ३ ॥

इति तृतीयाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

तानीत्यादे पूर्वोक्तदर्शितरीत्याऽर्थोऽवसेयः ॥ २ । ३ ॥

अथ येऽस्य प्रत्यञ्चो रश्मयस्ता एवास्य प्रतीच्यो मधुनाड्यः। सामान्येव मधुकृतः सामवेद एव पुष्पं ता अमृता आपः ॥ १ ॥

तानि वा एतानि सामान्येतं सामवेदमभ्यतपँस्तस्याभितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यं रसोऽजायत ॥२॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्यस्य कृष्णं रूपम् ॥ ३ ॥

इति तृतीयाध्यास्य तृतीयः खण्डः ॥ ३ ॥

---

तृतीयं मधु कथयति अथेति। येऽस्यादिकं सर्वं समानम् ।१-२-३ ।

अथ येऽस्योदञ्चो रश्मयस्ता एवास्योदीच्यो मधुना-डचोऽथर्वाङ्गिरस एव मधुकृत इतिहासपुराणं पुष्पम् । ता अमृता आपः ॥ १ ॥

ते वा एतेऽथर्वाङ्गिरस एतदितिहासपुराणमभ्यतपंस्तस्या-भितप्तस्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यं रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तदादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादित्य-स्य परं कृष्णं रूपम् ॥ ३ ॥

इति तृतीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

चतुर्थं मधु निदर्शयति । अथेति । येऽस्य सवितुः । उदञ्चो रश्मय इति प्रागुपदर्शितप्रकारेण व्याख्येयम् । अथर्वाङ्गिरसः । अथर्वणा अङ्गिरसा च दृष्टा मन्त्रा अथर्वाङ्गिरसः ॥ अथर्वणामङ्गिरसानाञ्च मन्त्राणां तद्विहिते कर्मणि प्रयुक्तानां मधुकरत्वम् । इतिहासपुराणविहितकर्मसु अथर्वाङ्गिरसां विनियोगादृग्वेदादिवत्पुष्पोक्तिः यदेतत्इति चोक्तिः द्रष्टव्या । आदित्यस्य परं कृष्णरूपोकृष्णरूपं तत् मधु १ । ७ । ॥ ३ ॥

इति तृतीयाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥



अथ येऽस्योर्ध्वा रश्मयस्ता एवास्योर्ध्वा मधुनाडचो गुह्या एवाऽऽदेशा मधुकृतो ब्रह्मैव पुष्पं ता अमृता आपः ॥ १ ॥

ते वा एते गुह्या आदेशा एतद्ब्रह्माभ्यतपँस्तस्याभितप्त-स्य यशस्तेज इन्द्रियं वीर्य्यमन्नाद्यं रसोऽजायत ॥ २ ॥

तद्व्यक्षरत्तादादित्यमभितोऽश्रयत्तद्वा एतद्यदेतदादि-स्य मध्ये क्षोभत इव ॥ ३ ॥

ते वा एते रसानां रसा वेदा हि रसास्तेषामेते रसास्तानि

वा एतान्यमृतानाममृतानि वेदा ह्यमृतास्तेषामेतान्यमृतानि ॥ ४ ॥

इति तृतीयाध्यायस्य पञ्चमःखण्डः ॥ ५ ॥

---

पञ्चमं मधु दर्शयति अथेति। गुह्या ब्रह्मविषयकौपनिषद्रहस्या एवादेशा गुह्योपदेष्टृत्वेनोपदेशपदवाच्याः। ब्रह्मैव वेदराशिरेव पुष्पस्थानीयम्। यदेतदादित्यस्य मध्ये समाहितदृष्टिभिर्दृश्यमानं मधु क्षोभत इव सञ्चलतीव स्फुरतीत्यर्थः। पञ्च मधूनि निरूप्य तेषां सर्वेषां ध्येयत्वसिद्ध्यर्थं स्तौति ते वा एत इति। ते वा एते रोहितादिरूपाः पञ्च रसानां रसाः। आद्यरसेन विवक्षितार्थमाह। वेदा हीति। वेदा रसाः श्रेष्ठाः। हि प्रसिद्धाः लोकसारभूतऋग्वेदविहितकर्मफलनिष्पाद्यत्वात्प्रदर्शितानां रोहितशुक्लकृष्णरूपाणाम् अत्यन्तसारत्वम्। वेदानामिष्टसाधनताबोधकानां नित्यत्वादमृतत्वं तदपेक्ष्य रोहितादिरूपाणां वेदविहितकर्मजन्मफलतया भोग्यभूतानामतिश्रेष्ठादप्यतिश्रेष्ठतमत्वमित्यर्थः ॥४॥

इति तृतीयाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

एवं पञ्चरूपिणमादित्यं मधुतया प्रपंचेन निरूप्य सम्प्रति के वास्यामृतस्य सेविनः किञ्च तेषां फलमिति जिज्ञासायां तत्सर्वं पञ्चभिः खण्डैर्निरूप्यते तद्यदित्यादिना ॥

**तद्यत् प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥**

**त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥**

**स य एतदेवममृतं वेद वसूनामेवैको भूत्वाऽग्निनैव मुखेनैतदेवामृतं तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥**

तत्तत्र यत् प्रथमं सवितू रोहितरूपं तद्वसवः। अग्निना मुखेन-प्रधानेन सहाग्निप्रधानासन्तः। उपजीवन्ति। नात्रोपजीवनं भोक्तृत्वरूपं प्रतिपत्तुमर्हं यत एतदेवामृतं दृष्ट्वेत्यस्यासङ्गत्वमापद्येत किन्तु द्रष्टृत्वरूपमेवोपजीवनमत्र वक्तव्यं तथाचोपजीवन्तीत्यस्य पश्यन्तीत्यर्थो व्याख्येयः। न वै देवा अश्नन्ति न पिबन्तीति वाक्यस्यान्नाद्यमिति शेष। "रसोऽजायत" इति वचनात् कवलग्रासमश्नन्तीति प्राप्तं तत्प्रतिषिध्यते अनेन वाक्येनेत्याशयेनाह न वै देवा इति। कथं तर्हि गीर्वाणानामुपजीवनमित्यत्राह। एतदेवामृतमिति अमृतं एतदेव, यशस्तेज-आदिलक्षणं रोहितं रूपं दृष्ट्वा चक्षुः श्रोत्रादिभिः करणैरुपलभ्य तृप्यन्ति॥ १॥

ते देवा एतदेव रूपं लोहितादिलक्षणमनुभूय विशन्ति भोगानन्तरमुदासीना भवन्ति सम्प्रति नास्माकं भोगावसर इति बुद्ध्या। लब्धभोगावसरास्सन्तः गीर्वाणा एतस्माद्रूपात् उद्यन्ति उत्साहवन्तो भवन्ति॥ २॥

स यः कश्चिदेतदेवं प्रागुपदर्शितश्रुत्युक्तक्रमेणामृतं वेद वसूनामेवैको भूत्वा तत्क्रतुन्यायेन तदुपासीनोऽपि वसुत्वं प्राप्य अग्निना मुखेनोपजीवनं दर्शनमात्रेण तृप्तिं स्वभोगावसरे उद्यमनं तत्कालापाये च संवेशनं वेद वसुवत्सर्वं तथैवानुभवति ॥३॥

**स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता वसूनामेव तावदाधिपत्यं स्वाराज्यं पर्येता॥ ४॥**

इति तृतीयाध्यायस्य षष्ठः खण्डः॥ ६॥

---

कियन्तं कालमित्यत्राह। स यावदादित्य इति यावता कालेनादित्यस्योदयास्तौ प्राच्यां प्रतीच्यां भवतो तावानेव वसूनां भोगकालस्तावन्तं कालं वसूनामाधिपत्यं स्वाराज्यं पर्य्येता परितो गन्ता भवति॥ ४॥

इति तृतीयाध्यायस्य षष्ठः खण्डः॥ ६॥

---

अथ यद्द्वितीयममृतं तद्रुद्रा उपजीवन्तीन्द्रेण मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

स य एतदेवामृतं वेद रुद्राणामेवैको भूत्वेन्द्रेणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसम्विशत्येतस्माद्रूपादुदेति॥ २ ॥

स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावद्दक्षिणत उदेतोत्तरतोऽस्तमेता रुद्राणामेतावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥

इति तृतीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

अथ द्वितीयम् अमृतं शुक्ललक्षणं रुद्रा उपजीवन्ति मुखेन प्रधानेनेन्द्रेण सह देवाः । उपजीवनञ्चात्र केवलग्रहणरूपमशनमिति शङ्कां व्युदस्यति न वै देवा इति । चन्द्रमिवेतिशेषः । कथं पुनः तेषामुपजीवनमित्यत्राह । एतदेवामृतमिति ॥ १ ॥

एतदेव रूपमभिलक्ष्याभिसम्विशन्ति उदासीना भवन्ति एतद्रूपात् इति ल्यब्लोपे पञ्चमी । एतद्रूपानुभवं लक्ष्यीकृत्य उत्साहवन्तो भवन्ति ॥ २ ॥

स य एतदमृतम् , ऋग्मन्त्रा भ्रमरस्थानीयाः पुष्पस्थानीयं ऋग्वेदविहितं कर्म । अनुष्ठितकर्मफलमादित्यश्रुत्या रोहितरूपं भवति तदेव रूपं विश्वादिदेवानां भोग्यमिति श्रुत्युक्तक्रमेण वेद । रुद्राणामेवैको भूत्वा रुद्रत्वं प्राप्य । इन्द्रेण मुखेनोपजीवनं दर्शनमात्रेण तृप्तिं स्वभोगावसरे उद्यमनं तत्कालापाये संवेशनं वेद सोऽपि रुद्रवत्सर्वमनुभवति॥३॥

विद्याफलं दर्शयति । स यावदिति। स यावदादित्यः पुरस्तादुदेता पश्चादस्तमेता द्विस्तावत्ततो द्विगुणं कालम् । यावद्वसूनां भोगकालस्ततो द्विगुणो रुद्राणां भोगकाल इति यावत् । दक्षिणत उदेतोत्तरतोऽस्त-

सेतावद्भोगकालः रुद्राणाम् ॥४॥

इति तृतीयाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

अथ यत्तृतीयममृतं तदादित्या उपजीवन्ति वरुणेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥१॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवामृतं वेदादित्यानामेवैको भूत्वा वरुणेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यो दक्षिणत उदेतोत्तरतोऽस्तमेता द्विस्तावत्पश्चादुदेता पुरस्तादस्तमेताऽऽदित्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥

इति तृतीयाध्यायस्य अष्टमः खण्डः ॥ ८ ॥

---

यत्तृतीयममृतमित्यादि पूर्ववत् । अमृतध्यायिनां फलमाह स यावदादित्य इति । यथा पुरस्तादुदेता पश्चाचास्तमेता ततो दक्षिणतो द्विगुणेन कालेन पश्चादुदेता पुरस्ताचास्तमेता तावदादित्यानां भोगकालः इति भावः ॥ १-२-३-४ ॥

इति द्वितीयाध्यायस्य नवमः खण्डः ॥ ६ ॥

---

अथ यच्चतुर्थममृतं तन्मरुत उपजीवन्ति सोमेन मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥ १ ॥

स य एतदेवममृतं वेद मरुतामेवैको भूत्वा सोमेनैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति ॥ १ ॥ स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्यः पश्चादुदेता पुरस्तादस्तमेता द्विस्तावदुत्तरत उदेता दक्षिणतोऽस्तमेता मरुतामेव तावदाधिपत्यं स्वाराज्यं पर्येति ॥ ४ ॥

इति तृतीयाध्यायस्य नवमः खण्डः ॥ ६ ॥



ततो द्विगुणेन कालेन यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता तावत् मरुतां भोगकालः चतुर्थामृतध्यायिनामपि तावानेव भोगकाल इत्यर्थः ॥ १-१-३-४ ॥

इति तृतीयाध्यायस्य नवमः खण्डः ॥ ६ ॥

अथ यत्पञ्चमममृतं तत्साध्या उपजीवन्ति ब्रह्मणा मुखेन न वै देवा अश्नन्ति न पिबन्त्येतदेवामृतं दृष्ट्वा तृप्यन्ति ॥१॥

त एतदेव रूपमभिसंविशन्त्येतस्माद्रूपादुद्यन्ति ॥ २ ॥

स य एतदेवामृतं वेद साध्यानामेवैको भूत्वा ब्रह्मणैव मुखेनैतदेवामृतं दृष्ट्वा तृप्यति स एतदेव रूपमभिसंविशत्येतस्माद्रूपादुदेति ॥ ३ ॥

स यावदादित्य उत्तरत उदेता दक्षिणतोऽस्तमेता द्विस्तावदूर्ध्वमुदेताऽर्वागस्तमेता साध्यानामेव तावदाधिपत्यं स्वाराज्यं पर्येता ॥ ४ ॥

इति तृतीयाध्यायस्य दशमः खण्डः ॥ १० ॥



ततो द्विगुणेन कालेनोर्ध्वमुदेताऽधस्तादस्तमेता तावान्साध्यानां भोगकालः। पञ्चामृतचिन्तकानामेवेत्यर्थः ॥१-२-३-४ ॥

इति तृतीयाध्यायस्य दशमः खण्डः ॥ १० ॥



**अथ तत ऊर्ध्व उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता तदेष श्लोकः ॥ १ ॥**

**न वै तत्र न निम्लोच नोदियाय कदाचन । देवास्तेनाहं सत्येन मा विराधिषि ब्रह्मणेति ॥ २ ॥**

**न ह वा अस्मा उदेति न निम्लोचति सकृद्दिवा हैवास्मै भवति य एतामेवं ब्रह्मोपनिषदं वेद ॥३॥**

एवं प्रतिदिनं पूर्वाद्युदयं कुर्वन्नादित्यो मधुतयोपास्य इत्युक्तम् । सम्प्रति प्रलयेऽपि किमेवमुदयादिकं करोतीति जिज्ञासायामाह । अथ तत इति । अथोदयास्तप्रचारानन्तरं प्राणिनां तत्तत्कर्मफलभोगोपरमे प्रलये मुक्तावस्थादित्यान्तर्यामी भगवान् तत आदित्यमण्डलात् उर्ध्वं वैकुण्ठलोकमुदेत्य प्राप्य नैवोदेता नास्तमेता तत्रैतादृशोदयादिकं न करोति । किन्तु एकलः एकप्रकार एव मध्ये सृष्टिस्थितिकालमध्ये प्रलये स्थाता ॥ १ ॥

एवं वैकुण्ठधाम्नि आदित्यान्तर्याभिभगवत उदयास्तमयाभावे प्रमाणं निर्दिशति श्रुतिः । तत् तत्रोक्तार्थे । एष वक्ष्यमाणः श्लोक इति । तत्र वैकुण्ठधाम्नि । न निम्लोच अस्तमगमत् । नोदियाय नोद्गतः उदयास्तमयादिवर्जितः वैकुण्ठलोकः । हे देवाः ! तेन सत्येन । "उदयास्तदोषरहितो भगवा" न्नित्यादिना सत्यवचनेन शपथरूपेणाहं ब्रह्मणा परब्रह्मणा तत्प्रसादादिति यावत् । मा विराधिषि अवृद्धिं न प्राप्नुयामिति देवान् प्रति ब्रह्मणो वचनम् । सत्येन ब्रह्मणेति वा सम्बन्धः ॥ २ ॥ एतद्विद्यावेत्तुर्मुक्तिरूपं फलमाह । न हवेति । योऽधिकारी एतां ब्रह्मोपनिषदमुक्तप्रकारेण वेद । अस्मै ब्रह्मविदे सविता नोदेति नास्तमेति किन्तु सकृत्सदा दिवैवाहरेव भवति अनवरतं सर्वसाक्षात्कारो भवतीत्यर्थः ॥ ३ ॥

तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्यस्तद्धैतदुद्दालकायाऽऽरुणये ज्येष्ठाय पुत्राय पिता ब्रह्म प्रोवाच ॥ ४ ॥ इदं वाव तज्ज्येष्ठाय पुत्राय पिता ब्रह्म प्रब्रूयात् प्रणाय्याय वाऽन्तेवासिने ॥ ५ ॥

नान्यस्मै कस्मैचन यद्यप्यस्मा इमामद्भिः परिगृहीतां धनस्य पूर्णां दद्यादेतदेव ततो भूय इत्येतदेव ततो भूय इति ॥६॥

इति तृतीयाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

महदुपदेशपरंपराप्राप्ता चेयं विद्याऽतो महतीत्याशयेनाह तद्धैतदिति तदेतत् मधुविज्ञानं ब्रह्मा भगवान् प्रजापतये विरञ्चाय स च मनवे स्वायम्भुवाय । प्रजाभ्यः इक्ष्वाकुप्रभृतिभ्यः । इयञ्चातिगोप्यत्वान्न यस्मै कस्मैचन वाच्येत्याह । तद्धैतदिति । यस्मादुद्दालकाय आरुणये ज्येष्ठाय पुत्राय पिता तदेतद्ब्रह्म प्रोवाच ॥ ४ ॥ तत्तस्मादिदं ब्रह्म अन्योपि पिता ज्येष्ठायैव पुत्राय प्रब्रूयादिति योजना । प्रणाय्याय प्रणयवतेऽन्तेवासिने वा ब्रह्म ब्रूयादिति सम्बन्धः ॥ ५ ॥

एतद्विद्योपदेष्टुः सदृशगुरुदक्षिणाभावाच्चैषा महतीत्याह । यदि अस्मै, इति । एतद्विद्योपदेष्टुः अद्भिः समुद्रैः परिगृहीतां परिवृतां धनस्य रत्नादिधनेन पूर्णामपीमां पृथ्वीं दद्यात् । गुरुदक्षिणात्वेनेतिशेषः । तद्यपि तादृशपृथिवीदानं नैतद्विद्यादानसमं किन्तु तादृशपृथ्वीदानादपि एतदेव एतद्विद्यादानमेव भूयोऽधिकमित्यर्थः। द्विरुक्तिरुक्तावधारणार्था ॥ ६ ॥

इति तृतीयाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

**गायत्री वा इदं सर्वं भूतं यदिदं किञ्च वाग्वै गायत्री वाग्वा इदं सर्वं भूतं गायति त्रायते च ॥१॥**

आदित्यान्तर्गतस्य ब्रह्मण उपास्यत्वं निरूप्य प्रसक्ति गायत्री-सादृश्यात् गायत्रीशब्दवाच्यत्वं ब्रह्मणस्तद्रूपेण ब्रह्मानुसन्धातव्य-मित्यतस्तद्विद्योपदिश्यते। गायत्रीवेति। उपपद्यते च परब्रह्मणि चतुष्पात्व-षाड्विध्याभ्यां गायत्रीसजातीयत्वम्। ब्रह्मणो गायत्रीशब्दप्रतिपाद्यत्वे गमकलिङ्गानि निर्दिशति। गायत्री वा इदं सर्वभूतम् इति। इदं सन्निकृष्टं सर्वं प्राणिमात्रं यत्किञ्च स्थावरं जङ्गमं वा तत्सर्वं गायत्री ब्रह्मात्मिका वै इत्यन्यथाप्रतीतिनिरासाय। उपपद्यते च परब्रह्मणः सर्वभूतात्मकत्वं नतु गायत्र्याख्यच्छन्दसः तस्य भूतपृथिवी-शरीरहृदयरूपपादचतुष्टयवत्वाभावात् वक्ष्यमाणलिङ्गानां विरहाच्च। गायति त्राय तइति गायते चेति गायत्रीशब्दव्युत्पत्त्या गायत्रीशब्दशक्यता-वच्छेदकं गानत्राणकर्तृत्वं ब्रह्मण्युपपादयन् विधाद्वयमाह। वाग् वै गायत्रीति। गायत्रीशब्दितब्रह्मैव वाग्रूपं शब्दरूपमित्यर्थः। तावता किं निष्पन्नमित्यत्राह। वाग् वा इदं सर्वं भूतं गायति च त्रायते च। इदं सर्वभूतं स्थावरजङ्गमं वाग्रूपं ब्रह्मात्मकमित्यर्थः। यतः वाग्रूपमेव ब्रह्म सर्वभूतं गायति शब्दयति त्रायते च रक्षति च अमून् लोकान् विधिनि-षेधमुखेन। तस्मादुपपद्यते गानत्राणकर्तृत्वेन वाग्रूपस्य ब्रह्मणो गायत्री-शब्दवाच्यत्वं भूतात्मकपादवतो ब्रह्मणो वाक्कर्तृकगानत्राणकर्मत्वाभ्यां द्वैविध्यञ्चोक्तं भवति ॥ १ ॥

**या वै सा गायत्री यं वाव सा येयं पृथिव्यस्यां हीदं सर्वं भूतं प्रतिष्ठितमेतामेव नातिशीयते ॥ २ ॥ या वै सा पृथिवी यं वाव सा यदिदमस्मिन् पुरुषे शरीरमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ३ ॥ यद्वैतत्पुरुषे शरीरमिदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे हृदयमस्मिन् हीमे प्राणाः प्रतिष्ठिता एतदेव नातिशीयन्ते ॥ ४ ॥**

उक्तार्थमनूद्य ब्रह्मणो द्वितीयपादं पृथिव्यात्मकं निर्वक्ति या वै गायत्रीति । या वै गानत्राणकर्तृत्वेन वाग्रूपतया प्राग् निर्दिष्टा ब्रह्मात्मिका गायत्री सा सर्वभूतरूपैकपादयुक्ता सैव प्रसिद्धा इयं पृथिवी । वावेत्यस्यार्थएवेति कस्मान्निश्चीयतेऽस्याः गायत्रीपदप्रतिपाद्यब्रह्मात्मकत्वमित्यत्राह । अस्यां हीदं सर्वभूतं प्रतिष्ठितम् । अस्यां पृथिव्यां हि यतः स्थावरं जङ्गमञ्च भूतं प्रतिष्ठितम् । अस्यां पृथिव्यां हि यतः स्थावरं जङ्गमञ्च भूतं प्रतिष्ठितं नहि ब्रह्मात्मकत्वमन्तरा सर्वस्य पृथिव्यां प्रतिष्ठितत्वं साधयितुं शक्यते कर्मवश्याति सर्वाणि भूतानि नियमेन पृथिव्यां प्रतिष्ठितानि इत्याह । एतामेव नातिशीयन्ते । एतां पृथिवीं नातिशीयते नातिवर्त्तते भूतमात्रमिति कर्तृपदमध्याहार्य्यम् । नहि भोक्तृवर्गाः प्राणिनः पृथिवीमतिक्रम्य स्यातुं शक्नुवन्ति । एतेन गायत्र्याख्यब्रह्मणः पृथिव्यात्मको द्वितीयपादः प्रदर्शितः । सर्वभूत-प्रतिष्ठात्वसर्वभूतानतिवर्त्यत्वलक्षणं विधाद्वयञ्चोक्तं भवति ॥२॥

सम्प्रति तृतीयशरीररूपपादं निरूपयति । या वै सेति ॥ या पृथिवीरूपपात्त्वेन निरूपिता सा गायत्री ब्रह्मात्मिका सा इयम् । इयमित्युक्तमेव विशदयति । यदिदमिति । अस्मिन् प्रत्यक्षसिद्धे पुरुषे शरीरावच्छिन्ने प्रत्यगात्मनि धार्यत्वेन वर्त्तमानं यदिदं शरीरं तत् गायत्र्याख्यब्रह्मणस्तृतीयपादरूपमित्यर्थः । अस्यापि ब्रह्मात्मकत्वं पूर्ववदुपपादयितुमाह । अस्मिन्हीति । अस्मिन् शरीरे प्राणाः प्रतिष्ठिताः। प्राणानां शरीरे प्रतिष्ठितत्वं प्रकटयति । एतदेवेति । यस्माच्छरीरे नातिशीयन्ते नातिवर्त्तन्ते। उपपन्नं भवति च शरीरस्य ब्रह्मात्मकत्वं प्राणप्रतिष्ठात्वतदनिवर्त्यत्वाभ्याम् ॥ ३ ॥

गायत्र्याख्यब्रह्मणो हृदयलक्षणं तुर्य्यपादमावेदयति यद्वैतत्पुरुष-इति । शरीरात्मकपादेन युक्तं यद् गायत्रीशब्दवाच्यं ब्रह्म तदेव हृदय-लक्षणं पादमित्यर्थः । अस्याप्युक्तप्रकारेण ब्रह्मात्मकत्वमुपपादयति अस्मिन्निति । अत्र प्राणपदेन प्राणापानादयः निर्दिष्टास्ते च हृदय-

सम्बन्धिनाडीद्वारा हृदये प्रतिष्ठिताः । एतेन तृतीयतुर्य्यपादवत्वं प्राणप्रतिष्ठात्वतदनति वर्त्यत्वरूपविधाद्वयञ्चोक्तं भवति ॥ ४ ॥

**सैषा चतुष्पदा षड्विधा गायत्री तदेतदृचाभ्यनूक्तम् ॥५॥**

**तावानस्य महिमा ततो ज्यायांश्च पूरुषः । पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवीति ॥ ६ ॥**

एवं गायत्रीशब्दितब्रह्मणो भूतपृथिवीशरीरहृदयलक्षणं प्रागुपदर्शितषड्विधत्वं निरुच्य तदनुवादं वदंश्चतुष्पात्वमाह । सैषेति ॥ ५ ॥

यदि ब्रह्मणश्चतुष्पात्वं स्यात्तदा परिच्छिन्नत्वं स्यादिति यदि शंकेत तदप्याह ॥ तदेतदृचाभ्यनूक्तम् । तदेतद्गायत्र्याख्यब्रह्माभिमुखीकृत्य ऋचाभ्युक्तम् । तामेवर्चं पठति । तावानस्य महिमेति । अस्य गायत्रीपदप्रतिपाद्यस्य ब्रह्मणो तावान् प्रगुपदर्शितः । सर्वो महिमा नियाम्यवर्गः । ततो ज्यायाँश्च पूरुषः परमात्मा ततोऽधिकमाहात्म्योपेतः । तदेव माहात्म्यं विशदयति । अस्य पुरुषस्य पादः सर्वाभूतानि । कार्यजगदन्तर्गताः चित्संसृष्टाः चेतनाः सर्वे पादः अंशमात्रमित्यर्थः । सर्वशब्दात् परस्य शेः "सुपांसुलुगिति" नीत्येतस्यलुक् । त्रिपादस्यामृतं दिवि अत्रद्युशब्देन समष्टिव्याष्टितत्वबहिर्भूतप्राकृतस्थानविशेषा वोध्यते अप्राकृते स्थानविशेषे चास्य परमात्मनो वासुदेवस्यामृतं पादत्रयमित्यर्थः । त्रिपात्वञ्चाप्रकृतेर्भोग्यभोगोपकरणविशेषैर्वाभूषाणास्तादिरूपेण जगदन्तर्गतवस्त्वभिमानिभिर्नित्यैर्भगवदनुभवमात्रपरै र्नित्यसिद्धैश्च मुक्तैश्चात्मभिर्वा सम्भवति ॥ ६ ॥

**यद्वै तद्ब्रह्मेतीदं वाव तद्योयं वहिर्धा पुरुषाद्यकाशो यो वै स वहिर्धा पुरुषादाकाशः ॥ ७ ॥**

**अयं वाव स योऽयमन्तःपुरुष आकाशो यो वै सोऽन्तःपुरुष आकाशः ॥ ८ ॥**

**अयं वाव स योऽयमन्तर्हृदय आकाशस्तदेतत् पूर्णमप्रवर्ति पूर्णामप्रवर्तिनीं श्रियं लभते य एवं वेद ॥९॥**

इति तृतीयाध्यायस्य द्वादशः खण्डः ॥१२॥

---

तुर्य्यपादत्वेन निर्दिष्टस्योपास्यत्वेन वक्ष्यमाणस्य हृदयस्थस्याकाशस्य वाह्याकाशाभेदेन महत्वं वक्तुं स्तौति । यद्वैतदिति । तत् गायत्र्याख्यं ब्रह्म सर्वगं खलु । तथाचेदं शरीरान्तर्वहिर्व्याप्तं यत्तत् ब्रह्म सर्वगं प्रसिद्धं तत् इदं वाव इदं खलु । इदं किं योऽयं वहिर्धा वाह्याकाशादभिन्नः । पुरुषादाकाशः । पुरुषान्तर्वर्त्तमान आकाश इत्यर्थः । यो वै पुरुषादाकाशः पुरुषान्तर्वर्त्तमान आकाशः स वहिर्धा वाह्याकाशाभिन्नः । वाह्याकाशत्वेनान्तराकाशत्वेन च तयोर्भिन्नत्वेऽपि व्याप्यत्वामूर्त्तत्वाचलत्वादिभिर्धर्मैर्वाह्याकाशान्तराकाशयोरभेदस्तथा च भगवत्या श्रुत्यैवोक्तो भिन्नाभिन्नः सिद्धान्त इत्यर्थः ॥ ७ ॥

अयं वावेति । यो वै ब्रह्मतुल्यवाह्याकाशाभिन्नाभिन्नः पुरुषान्तर्गताकाशः स अन्तःपुरुषाकाशः ॥ ८ ॥

अयं वाव स योन्तर्हृदयाकाशस्तदेतत् पूर्णमिति यो वै ब्रह्मतुल्यवाह्याकाशभिन्नः पुरुषान्तर्गताकाशः स अन्तर्हृदयाकाशादभिन्नो एतादृशमहिम्ना अन्तर्हृदये वर्त्तमानोयमाकाशो ज्यायान् हृदयाकाशस्य ज्यायस्त्वाभिधानेन तूर्य्यपादत्वेन निर्दिष्टं हृदयं स्तुतं भवति । एवञ्च चतुःपादत्वेन षड्विधत्वेन निर्दिष्टस्य ब्रह्मणः परिच्छिन्नत्वमस्थिरत्वं प्रसज्येत तस्य प्रपञ्चातःपातित्वादिति शङ्कापनोदायाह । तदेतत् पूर्णमप्रवर्ति । पूर्णत्वं परिच्छिन्नत्वम् । अप्रवर्त्तित्वमचलत्वं स्थिरत्वम् ॥ एतेन न केवलं निर्विशेषचिन्मात्रस्य ब्रह्मण उपासनातः निरुक्तविशेषणविशिष्टं निःश्रेयसरूपं फलं लभेरन् उपासकाः किन्तु पूर्णत्वाप्रवर्तित्वगुणविशिष्टतया ब्रह्मण उपासनातः इत्युक्तं भवति । य एवं प्रागुपदर्शितप्रकारेण वेद

संपूर्णामप्रवर्तिनीश्रियं लभेत । अनन्तस्थिराश्रीमुक्तैश्वर्य्यं तदुपासीनो भगवद्भावापत्तिमुक्तिं लभतइत्यर्थः ॥ ६ ॥

इति तीयाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

**तस्य ह वा एतस्य हृदयस्य पंच देवसुषयः स योऽस्य प्राङ् सुषिः स प्राणस्तच्चक्षुः स आदित्यस्तदेतत्तेजोऽन्नाद्यमित्युपासीत तेजस्व्यन्नादो भवति य एवं वेद ॥ १ ॥**

**अथ योऽस्य दक्षिणः सुषिः । स व्यानस्तच्छ्रोत्रं स चद्रमास्तदेतच्छ्रीश्च यशश्चेत्युपासीत श्रीमान् यशस्वी भवति य एवं वेद ॥ २ ॥**

यदिदमस्मिन् पुरुषे हृदयमिति, योऽयमन्तःपुरुष आकाश इति चतुर्थपादत्वेन निर्दिष्टस्य हृदयस्य उपास्तेरङ्गत्वेन स्वस्वोपासनानुरूपफलप्रदद्वारपालोपासना निरूप्यते । तस्य हवेति । तस्यैतस्य तुर्य्यपादत्वेननिर्दिष्टस्य पञ्च पञ्चसंख्याकाः देवसुषयः देवताधिष्ठानभूतानि पञ्च द्वारच्छिद्राणि । को देवः कस्मिन् द्वारे कथमुपासितः कीदृशं फलं प्रयच्छतीतिजिज्ञासायामाह । सोऽस्येति । अस्य हृदयस्य यः प्राङ्सुषिः । पूर्वाभिमुखस्य प्रागूगतं यच्छिद्रं स प्राणः । हृदस्य तेनद्वारेण यः सञ्चरति वायुविशेषः स प्राणः तेन सम्बद्धमव्यतिरिक्तं तच्चक्षुस्तथैव स आदित्यः इति ॥ "आदित्यो ह वै बाह्यप्राणः" इति श्रुतेश्चक्षूरूप प्रतिष्ठाक्रमेण हृदि स्थितः "स आदित्यः कस्मिन् चक्षुषि इत्यादि हि वाजसनेयके दृश्यते । एतत् प्राणाख्यं तेजस्वितेजोगुणविशिष्टतया तदुपासनामर्हति । सवितुश्चान्नादत्वं वृष्टिद्वारेण आदित्याज्जायते वृष्टिः" इत्यादौ दृष्टम । अतश्चान्नञ्च तदाद्यञ्चेति गुणान्तरविशिष्टत्वेनापि सवितृ रूपं ध्यानार्हमित्यर्थः । विद्वानेवं वेद तस्यैतद्द्रोणं फलं भवति । उपासनेन वशीकृतो द्वारपः स्वर्गलोकप्राप्तिहेतुर्भवतीत्युति मुख्यञ्च फलम् ॥ १ ॥

हृदयस्य पूर्वदिगवस्थितच्छिद्रसम्बन्धित्वेन प्राणमुक्त्वा

व्यानः श्रोत्रं चन्द्रमाश्चेति त्रितयमितरसम्बद्धमुपास्यमित्याह ॥ अथेति । अस्य हृदयस्य दक्षिणः सुषिः तत्स्थो द्वारपः व्यानः नानास्कन्धसन्धिमर्मसु विविधमनति चेष्टत इति व्यानः । तत्, श्रोत्रं स चन्द्रमाः । श्रोत्रस्य व्यानेन सम्बन्धस्तथा चन्द्रमा अपि तेन श्रुत्युक्तत्वादेवोपासनार्थतया ग्राह्य इत्यर्थः । "श्रोत्रेण सृष्टा दिशश्च चन्द्रमाश्चेति ।" श्रुतेः । तदेतत् व्यानाख्यं द्वारपं श्रीश्च यशश्चेत्याभ्यामुपासीत य एवं वेद स श्रीमान् यशस्वी भवतीत्यर्थः ॥ २ ॥

**अथ योऽस्यप्रत्यङ् सुषिः सोऽपानः सा वाक् सोऽग्निस्तदेतद्ब्रह्म वर्चसमन्नाद्यमित्युपासीत ब्रह्मवर्चस्व्यन्नादो भवति य एवं वेद ॥ ३ ॥**

**अथ योऽस्योदङ् सुषिः स समानस्तन्मनः स पर्जन्यस्तदेतत्कीर्तिश्च व्युष्टिश्चेत्युपासीत कीर्तिमान् व्युष्टिमान् भवति य एवं वेद ॥ ४ ॥**

**अथ योऽस्योर्ध्वः सुषिः स उदानः स वायुः स आकाशस्तदेतदोजश्च महश्चेत्युपासीतौजस्वी महस्वान् भवति य एवं वेद ॥ ५ ॥**

हृदयस्य पश्चिमदिगवस्थितसुषिसम्बन्धत्वेनापानो वागग्निश्चेतितृतीयमन्योन्यसम्बद्धमुपास्यमित्याह । अथेति । योऽस्य हृदयस्य प्रत्यङ् सुषिः पश्चिमस्तद्वर्त्तिः सोऽपानः अन्नादेरधोनयनादपानः । सा वाक, स अग्निः वागाऽधिष्ठातृत्वेन सम्बन्धादग्निस्तद्वारेणाऽपोनो भवति । तदेतदपानाख्यं ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजो ब्रह्मवर्चसम् । अन्नाभ्यां गुणाभ्यां विशिष्टमुपासीत । य एवं वेद स ब्रह्मवर्चस्व्यन्नादो भवति ॥ ३ ॥

हृदयस्योत्तरसुषिसम्बन्धत्वेन समानो मनः पर्जन्यश्चेति तृतयं परस्परसम्बद्धमुपास्यमित्याह । अथ योऽस्येति । अशितपीते समं

नयतीति समानः स च मनोऽन्तःकरणं स पर्जन्यो वृष्ट्यात्मको देवः पर्जन्यनिमित्ताश्चाप इति । "मनसा सृष्टा आपश्च वरुणश्च ।" इति श्रुतेः । तदेतत्समानाख्यं कीर्तिश्च व्युष्टिश्च कीर्तिर्यशः । स्वकरणसंवेद्यं विश्रुतत्वं व्युष्टिः । एतद्गुणविशिष्टमुपासनं कार्यमित्यर्थः । य एवं वेद स कीर्तिमान् भवति ॥ ४ ॥

हृदयस्योर्ध्वच्छिद्रवैशिष्ट्येनोदानो वायुराकाशश्चेति त्रितयमन्योन्यसम्बद्धमुपास्यमित्याह । अथ योऽस्येति । अथ योस्योर्ध्वः सुषिः स उदानः । पादतलादारभ्योर्ध्वमुत्क्रमणादुत्कर्षार्थं च कर्म कुर्वन्नितीत्युदानः । अन्यत् पूर्ववत् ॥ ५ ॥

**ते वा एते पंच ब्रह्मपुरुषाः स्वर्गस्य लोकस्यद्वारपाः स य एतानेवं पंच ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान्वेदास्य कुले वीरो जायते प्रतिपद्यते स्वर्गं लोकं य एतानेवं पंच ब्रह्मपुरुषान् स्वर्गस्य लोकस्य द्वारपान् वेद ॥६॥**

ते वा एते यथोक्ताः पञ्चसुषिसम्बन्धात्पञ्च ब्रह्महृदयस्थाकाशस्य पुरुषा द्वारस्थाः । स्वर्गस्य लोकस्य भगवल्लोक हृदयाकाशस्य द्वारपालकाः वीरः पुत्रो जायते विद्यावीर्यसम्पन्नो जायते । आनुषङ्गिक फलं प्रदर्श्य प्रधानं फलमाह । प्रतिपद्यते स्वर्गं भगवल्लोकद्वारपालकोपासनया अनिवारितः सन् भगवल्लोकं प्रतिपद्यते इत्यर्थः ॥ ६ ॥

**अथ यदतः परो दिवो ज्योतिर्दीप्यते विश्वतः पृष्ठेषु सर्वतः पृष्ठेष्वनुत्तमेषूत्तमे लोकेष्विदं वाव तद्यदिदमस्मिन्नन्तः पुरुषे ज्योतिस्तस्यैषा दृष्टिर्यत्रैतदस्मिच्छरीरे संस्पर्शेनोष्णिमानं विजानाति तस्यैषा श्रुतिर्यत्रैतत्कर्णावपि गृह्य निनदमिव नदथुरिव वाग्नेरिव ज्वलत उपशृणोति तदेतद्दृष्टंच श्रुतञ्चेत्युपासीत चक्षुष्यः श्रुतो भवति य एवं वेद य एवं वेद ॥ ७ ॥**

इति तृतीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

गायत्र्याख्यस्य परब्रह्मणस्तादर्थ्येन द्वारपानाञ्चोपास्तिर्विधेया ततश्चाङ्गेषु श्रुतानि फलानि समुच्चित्य निखिलफलप्रदातुः परब्रह्मणः फलविशेषप्राप्तये कौक्षेयज्योतीरूपत्वेनोपास्तिं विधत्ते । अथ यदतः पर इति । अत्र यच्छब्दस्य सर्वनामतया प्रक्रान्तवाचित्वात् त्रिपादस्यामृतं दिवीत्यनेन द्युसम्बन्धित्वेन प्रक्रान्तं त्रिपाद् ब्रह्म तदेव यच्छब्देन प्रत्यभिज्ञायते । विष्वतः पृष्ठेष्वित्यत्र विश्वशब्देन जगदन्तःपातिव्यष्टिसमूहोऽवगम्यते । तथाद्वरात्सम्भवतीह विश्वमित्यत्र विश्वशब्देन निरुक्तार्थस्य प्रतिपत्तेः सर्वशब्दः सङ्कुचितवृत्तिकः समष्टितत्वं निर्वक्ति ततश्चायमर्थः–अतः द्युलोकात् परः विश्वतः पृष्ठेषु सर्वतः पृष्ठेषु समष्टिव्यष्टित उपरिष्टात् अनुत्तमेषु न विद्यते उत्तमलोको येभ्यस्तेषु स्वावधिकोत्तमरहितोत्तमस्थानविशेषु ज्योतिः शब्दितः परमात्मा यद्दीप्यते प्रकाशते इदं वाव तद्यदिदमस्मिन्नन्तःपुरुषे तत् दिवः परस्ताद्दीप्यमानं त्रिपाद् ब्रह्म इदं वाव इदं खलु । इदं किं यदिदमस्मिन्नन्तःपुरुषे कौक्षेयज्योतिरस्ति तत् ब्रह्म । अहं वैश्वानरो भूत्वा पचाम्यन्नंचतुर्विधम् " इतिश्रीमुखवचनात् ।

पुरुषान्तस्तत्सद्भावे प्रमाणं निर्दिशति तस्येति । तस्य हृद्गतस्य परब्रह्मणः एषा दृष्टिः, अयं साक्षात्कारः । एषा का यत्र यत् अस्मिन्शरीरे संस्पर्शेन शरीरसम्बद्धेन त्वगिन्द्रियेणोष्णिमानं विजानाति एतत् एषा त्वगिन्द्रियेण तावच्छरीरगतवह्नावोष्ण्यं दृश्यते तच्च जाठराग्निसम्बद्धमिति भावः ।

तस्यैषा श्रुतिः । तस्य ज्योतिषः । एषा श्रुतिः ।श्रवणम् । यत्र यदा कर्णावङ्गुलिभ्यां पिधाय निनदमिव रथघोषमिव नदथुरिव ऋषभकूजितमिव मेघघोषमिव ज्वलतोऽग्नेर्घोषमिव च उपशृणोति । यत् तदेव जाठराग्निश्रवणम् अन्तरस्थशब्दस्य जाठराग्निसम्बन्धित्वात् शब्दश्रवणमेव तच्छ्रवणमित्यर्थः । तदेतद्दृष्टं श्रुतं चोपासीत तदेतत् ब्रह्मात्मककौक्षेयज्योतिः । उक्तप्रकारेण दृष्टत्वेन श्रुतत्वेनरूपेणोपासीत । तदुपासकस्य फलं व्युत्पादयति । चक्षुष्यः चक्षु-

षत्वाभिरूप्यम् । चक्षुषे हित इत्यर्थे"शरीरावयवाच्चे"ति यत् । अथवा चक्षषि ब्रह्मणि यातीति चक्षुष्यः दिव्यचक्षुः श्रुतत्वं कीर्तिमत्वं भवति । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥

एतत्खण्डान्तर्गतविषयवाक्यविषयकं ज्योतिश्चरणाधिकरणं श्रीव्यासाचार्यैरुपनिबद्धं ब्रह्मसूत्रे प्रथमाध्याये प्रथमपादे तत्र द्रष्टव्यम् ।

तत्रहि—

ज्योतिश्चरणाभिधानात् ब्र० सू० । १ । १ । २५ ॥

दिवो ज्योतिरिति, ज्योतिर्ब्रह्मैव । पादोऽस्या सर्वा भूतानीति चरणाभिधानादिति सूत्रार्थः । ननु पूर्ववाक्ये गायत्र्याख्यच्छन्दोभिधानात् तत्परा चरणश्रुतिरस्तु न ब्रह्मपरेति पूर्वपक्षं सूत्रखण्डेन कृत्वोत्तारखण्डेन समाहितम् ।

छन्दोभिधान्नेति चेन्न तथाचेतोऽर्पणनिगमात्तथाहि दर्शनम् ।

ब्र० सू० । १ । १ । २६ ॥

इति चेन्न । तथाचेतोर्पणनिगमात । वर्णसन्निवेशमात्रायास्तस्याः सर्वात्मकत्वासम्भवात्तद्द्वारेण ब्रह्मणि चेतोऽर्पणं चित्तसमाधानं निगम्यते । तत्र दृष्टान्तः । तथाहि दर्शनं यथा गायत्रीषडक्षरैः पादैश्चतुष्पदा तथा ब्रह्माऽपि चतुष्पादिति चतुष्पादत्वयोगात्सा इत्यर्थः ।

भूतादिपादव्यपदेशोपपत्तेश्चैवम् । ब्र०सू० । १ । १ । २७ ॥

न केवलं तया चेतोऽर्पणनिगमाद्गायत्री ब्रह्मेत्युच्यते भूतपृथिवीशरीरहृदयानां ब्रह्मणि भगवत्युपपत्तेश्चैवम् । इति सूत्रार्थः ॥

उपदेशभेदान्नेतिचेन्नोभयस्मिन्नप्यविरोधात् । ब्र० सू० । १।१।२८ ॥

पूर्ववाक्ये त्रिपादस्यामृतं दिवीति दिवोधिकरणत्वेन निर्देशात् ज्योतिर्वाक्येदिवः परइत्यवधित्वेन निर्देशान्न प्रत्यभिज्ञासम्भव इति चेन्न । वृक्षाग्रे वर्तमानस्येति वृक्षाग्राच्छ्श्येनो वृक्षाग्रे श्येन इति पञ्चमीसप्तम्योः

प्रयोगदर्शनवदिहाप्युपपत्तेरिति सूत्रार्थस्य भाव इति स्थितम् । प्रकृतमनुसरामः ॥

इति तृतीयाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

**सर्वं खल्विदं ब्रह्म तज्जलानिति शान्त उपासीत अथ खलुक्रतुमयः पुरुषो यथाक्रतुरस्मिँल्लोके पुरुषो भवति तथेतः प्रेत्य भवति स क्रतुं कुर्वीत ॥ १ ॥**

**मनोमयः प्राणशरीरोभारूपः सत्यसङ्कल्प आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादरः ॥ २ ॥**

शाण्डिल्यविद्यां निर्दिशति । सर्वमिति । सर्वं समस्तमिदं परिदृश्यमानं जगन्नामरूपात्मकं ब्रह्म ब्रह्मात्मकम् । कथं सर्वस्य जगतः ब्रह्मात्मकत्वमुररीक्रियत इत्यत आह । तज्जलानिति । तस्मात् ब्रह्मणो जातं तज्जं तथा तस्मिन्नेव लीयतेऽतस्तल्लं तथा तस्मिन्नेव स्थितिकालेऽनिति प्राणिति चेष्टतेऽतोऽन् । इति हेत्वर्थः । तज्जत्वात् तल्लत्वात् तदनत्वाच्च ब्रह्मात्मकं तेन ब्रह्माभिन्नमिदं सर्वं जगत् स्वरूपेण भिन्नमितरेतरात्यन्तविलक्षणत्वात् । अत्रायमभिसन्धिः । न वयं स्वरूपतो जीवेशयोरैक्यमङ्गीकुर्मः येन प्रत्यगात्मवृत्तयः दोषा ब्रह्मणि प्रसज्येरन् ब्रह्मणश्चेतनाचेतनयोश्च स्वरूपेण भेदमभ्युगच्छामः इतरेतरात्यन्तविलक्षणत्वात् । "अस्थूलममनणु" इत्यादिश्रुतेः चेतनो ह्यणुत्वेन निर्दिश्यते । अचेतनन्तु स्थूलत्वेन ब्रह्म तावत् चेतनाचेतनयोर्वैलक्षण्येनेति सर्वात्मत्वसर्वनियन्तृत्वसर्वव्यापकत्वस्वतन्त्रसत्वसर्वाधारत्वादियोगेन चेतनाचेतनमिदं विश्वं ब्रह्मभिन्नम् ब्रह्मात्मकत्वतन्नियम्यत्वतद्व्याप्यत्वतत्तन्त्रसत्वपराधेयत्वादियोगेनाभिन्नमित्येवं रूपेण शान्तो भगवन्निष्ठधीस्सन् उपासीत । विहितमुपासनं स्तौति । अथ खल्वित्यादिना । खल्विति हेत्वर्थे । पुरुषोऽधिकारी । क्रतुमयः क्रतुप्रधान उपासनाप्रधानः । यथा यादृशः क्रतुर्यस्य स तथाक्रतुस्तथा

तदनुरूपफलवान्। इत अस्माल्लोकाद्देहाद्वा प्रेत्य मृत्वा भवति मुक्तौ स्वयोग्योपासनानुसारिफलवान् भवति तस्मात् स क्रतुं कुर्वीत उपासकः क्रतुं ब्रह्मण उपासनं कुर्वीत। एवं विहितोपासनोपसंह्रियमाण गुणान् दर्शयति। मनोमय इति। परिशुद्धमनोमात्रग्राह्यः। प्राणशरीरः जगति सर्वेषां प्राणानां धारकः प्राणो यस्य शरीरमाधेयं विधेयञ्च स प्राणशरीरः॥ भारूपः भास्वररूपः। "आदित्यवर्णं तमसः परस्तात्, पश्यते रुक्मवर्णमि" त्यादिवाक्यप्रतिपन्नाप्राकृतत्वासाधारणनिरतिशय कल्याणगुणसौन्दर्य्यमाधुर्य्यमार्दवलावण्यनिरतिशयदीप्तियुक्तविग्रहशालीत्यर्थः। सत्यसङ्कल्पः। अप्रतिहतसङ्कल्पः। आकाशात्मा आकाशवत्सूक्ष्मः स्वच्छस्वरूपः। सर्वकर्मा सर्वं जगद्यस्य कर्माऽसौ सर्वकर्मा सर्वा वा क्रिया अस्यासौ सर्वकर्मा। सर्वकामः काम्यन्त इति कामाः भोग्यभोगोपकरणादयस्ते परिशुद्धास्तस्य सन्तीत्यर्थः सर्वगन्धः सर्वरसश्च। "अशब्दमस्पर्शमि" त्यादिना प्राकृतगन्धरसादीनां निषेधात्। अप्राकृतस्वासाधारणाः निरवद्या निरतिशया कल्याणाः स्वभोग्यभूताः सर्वविधगन्धरसास्तस्य सन्तीत्यर्थः। सर्वमिदमभ्यात्तः। उक्तं सर्वमिदं कल्याणगुणजातमभ्यात्तः स्वीकृतवान्। भुक्ता ब्राह्मणा तिवत् कर्त्तरि क्तप्रत्ययः। अर्शआद्यजन्तो वा। अवाकी वाक् उक्तिः साऽस्य नास्तीत्यवाकी। कुत इत्यत आह। अनादर इति। अवाप्तसमस्तकार्यत्वेनादर्त्तव्याभावात् आदररहितः। अतएवावाकी परिपूर्णैश्वर्य्यत्वात् ब्रह्मादिस्तम्वपर्य्यन्तं निखिलं जगत्तृणीकृत्य तूष्णीमासीन इत्यर्थः॥

**एष म आत्माऽन्तर्हृदयेऽणीयान् ब्रीहेर्वा यवाद्वा सर्षपाद्वा श्यामाकाद्वा श्यामाकतण्डुलाद्वैष म आत्माऽन्तर्हृदये ज्यायान् पृथिव्या ज्यायानन्तरिक्षाज्ज्यायान्दिवो ज्यायानेभ्यो लोकेभ्यः॥ ३॥**

एष यथोक्तगुणविशिष्ट आत्मा परमात्मा मे मम हृदयपुण्डरीकस्यान्तर्मध्ये ब्रीहियवाद्यपेक्षयाऽणीयान् अणुतरः अणुत्वे-

नात्मत्वेनोपासनार्थं स्थितः, तथात्वेनानुसन्धातव्य इत्यर्थः । अन्तर्हृदयाऽवस्थितस्योपास्यमानस्य प्राप्याकारमनुसन्धेयं निर्दिशति—एष म आत्मेति । एष मे हृदये परमात्मा पृथिव्यादिभ्यो ज्यायानिति । पूर्ववद्व्याख्येयम् ।

**सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्तोऽवाक्यनादर एष मे आत्माऽन्तर्हृदय एतद्ब्रह्मैतमितः प्रेत्याभिसम्भवितास्मीति यस्य स्यादद्धा न विचिकित्साऽस्तीति ह स्माऽऽह शाण्डिल्यः शाण्डिल्यः ॥ ४ ॥**

इतितृतीयाध्यायस्य चतुर्दशः खण्डः ॥१४॥

---

सर्वकर्मेत्यादिपूर्ववत् व्याख्येयम् । एवंभूतं परब्रह्म परमकारुण्येनास्मद्दुज्जीवयिषयास्मद्धृदये सन्निहितमित्यनुसन्धातव्यमित्याह । एष म इति । यथोपासीनमीदृशं परमात्मानम "स्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यत" इत्युक्तरीत्या देशविशेष विशिष्टं प्राप्तोस्मीति निश्चयरूपमनुसन्धानं कर्त्तव्यमित्याह एतमित इति । अत्रेतीत्यस्य स क्रतुं कुर्वीत इत्यनेनान्वयः ॥ "मनोमयः प्राणशरीरमि" त्यारभ्य "इतमितः प्रेत्याभिसम्भवितास्मी" त्येतपर्य्यन्तोऽनुसन्धानप्रकारः तस्योपासकस्य प्राप्तौ नास्ति कश्चिदपि सन्देहावसर इत्युपसंहरन्नाह । यस्य स्यादद्धेति । अत्रेतिशब्दः पूरणीयः उक्तप्रकारेण यस्योपासकस्याद्धा निश्चयोऽस्ति तस्य भगवत्प्राप्तौ विचिकित्सा संशयो नास्ति । उक्तार्थस्य श्रद्धेयत्वसिद्ध्यै वक्तुः शक्तिं दर्शयति । इति स्माह शाण्डिल्य इति । शाण्डिल्यो नामर्षिर्विद्वानित्येतदाह उक्तवानित्यर्थः द्विरभ्यासो विद्यासमाप्त्यर्थः ॥ ४ ॥

इति तृतीयाध्यायस्य चतुर्दशः खण्डः ॥१३॥

---

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते। इयञ्च विद्या समन्वयाध्याये द्वितीयपादे चिन्तिता तत्र हि "सर्वं खल्विदं ब्रह्मे" त्यस्मिन् वाक्ये मनोमयत्वादिधर्मपुरस्कारेण प्रत्यगात्मा उपास्यः उत परब्रह्मेति विचिकित्सा जायते। मनःप्राणोपकरणकत्वाच्छारीरोऽत्रोपास्यो नतु ब्रह्म तत्र प्राणादीनां सन्बन्धस्याश्रवणात्। "अप्राणो ह्यमनाः शुभ्र" इत्यादिश्रुतेः। इति पूर्वपक्ष उच्यते।

"सर्वत्रप्रसिद्धोपदेशात्" ब्र० सू० ।१।२।१।।

सर्वस्मिन् जगति "सर्वंखल्विदं ब्रह्मेति" तदात्मतयाभिधीयमानं मनोमयत्वादिगुणकं परं ब्रह्मैवोपास्यम्। कुतः? प्रसिद्धोपदेशात्। तज्जत्वतल्लत्वादिना सर्वं खल्विदं ब्रह्मेति प्रसिद्धोपदेशात् यस्माज्जगदुत्पत्तिस्थितिलया वेदान्तेषु प्रसिद्धास्तदेवात्र ब्रह्मेति प्रतीयते। स एषोऽन्तर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमय इत्यादिषु परब्रह्मणि प्रसिद्धानां मनोमयादीनामुपदेशात्। तत्र मनोमयत्वं विशुद्धमनोग्राह्यत्वं प्राणशरीरत्वं प्राणस्याधारत्वं नियन्तृत्वञ्च। अप्राणः प्राणानधीनस्थितिः अमनाः। मनोनधीनज्ञान इति सूत्रार्थः।।

विवक्षितगुणोपपत्तेः। ब्र० सू०। १। २। २।।

विवक्षितानां मनोमयत्वसत्यकामत्वसत्यसङ्कल्पत्वादिगुणानपरब्रह्मण्येवोपपत्तेश्च।

अनुपपत्तेश्च न शारीरः। ब्र० सू०। १। २। ३।।

नोपपद्यन्ते प्रत्यगात्मनि मनोमयत्वसत्यकामत्वादयो गुणाः नातश्शारीर उपास्यत्वेन निर्देष्टुं शक्यते किन्तु परब्रह्म। तत्र निखिलकल्याणगुणानां सत्त्वादित्यर्थः।

कर्मकर्तृव्यपदेशाच्च। ब्र० सू०। १। २। ४।।

अस्माद्धेत्वन्तरादपि मनोमयत्वादिगुणाश्रयः परमात्मैव भवितुमर्हति न शारीरः यतः एतमितः प्रेत्य सम्भवितास्मीत्यादिश्रुतौ कर्तृकर्मभावस्य व्यपदिश्यमानत्वात् प्राप्तिक्रियायाः कर्मकारकं ब्रह्म उपासकः शारीरः कर्ता इत्यर्थः।

शब्दविशेषात् । ब्र० सू० । १ । २ । ५ ॥

इतश्च विवक्षितगुणाश्रयः शारीरादन्यः परमात्मा । "एष म आत्मान्तर्हृदये ।" इतिजीवपरयोः षष्ठीप्रथमान्तरूपविशेषात् ।

स्मृतेश्च । ब्र० सू० । १ । २ । ६ ॥

उपास्योपासकयोर्ब्रह्मप्रत्यगात्मनोर्भेदं निर्वक्ति स्मृतिः । ईश्वरः सर्वभूतानामिति ।

अर्भकौकस्त्वात्तद्व्यपदेशाच्च नेतिचेन्न निचाय्यत्वादेव व्योमवच्च । ब्र० सू० । १ । २ । ७ ॥

अर्भकमल्पमोको नीडमायतनं यस्य तस्य भावस्तत्वं तस्मात् "एष मे आत्माऽन्तर्हृदये" इत्यल्पायतनत्वात् अणीयान् व्रीहेर्यवाद्वेति स्वरूपेणाणीयस्त्वव्यपदेशाच्छारीर एवाणुपरिमाणक एवात्रोपास्यत्वेन निर्दिष्टः न सर्वगतः परमात्मेति चेन्नैतत् निचाय्यत्वादेव ब्रह्मणः परिच्छिन्नायतनत्वाणीयस्त्वरूपेण व्यपदेशः । द्रष्टव्यत्वायोपास्यत्वायेति यावत् नतु तादृकस्वरूपप्रदर्शनाय । 'ज्यायान् पृथिव्या' इत्यादिना स्वाभाविकमहत्वस्य ब्रह्मणि व्यपदिश्यमानत्वात् । इति सूत्रार्थः ।

सम्भोगप्राप्तिरितिचेन्न वैशेष्यात् । ब्र० सू० । १ । २ । ८ ॥

परब्रह्मणः शरीरान्तर्वर्त्तित्वे सुखदुःखभोगप्रसक्तिर्जीववत्स्यादितिचेन्न । वैशेष्यात् । भवति हि प्रत्यगात्मपरमात्मनोः विशेषः एकः पुण्यपापकर्मपरतन्त्रः । अपरश्चापहतपाप्मत्वादिगुणाश्रय इतिविशेषसद्भावान्न जीववद्भोगप्रसक्तिरिति स्थितम् । प्रकृतमनुसरामः ।

**अन्तरीक्षोदरः कोशी भूमिर्बुध्नो न जीर्यति दिशो ह्यस्य स्रक्तयो द्यौरस्योत्तरं बिलं स एष कोशो वसुधान स्तस्मिन् विश्वमिदं श्रितम् ॥ १ ॥**

ननु गायत्र्याख्यस्य ब्रह्मण उपास्तेरङ्गभूतद्वारपालोपासनाफलप्रदर्शनवेलायामस्य 'विदुः कुले वीरः पुत्रो जायत' इत्युक्तं न

तावन्मात्रादेव पितुस्तरणं कर्तुं शक्यते तदुक्तं वृहदारण्यके "तस्मात्पुत्रमनुशिष्टं लोक्यमाहुरिति" । अनुशासनेन विषयीकृतस्य पुत्रस्य लोकप्राप्तिसाधनत्वादनुशासनं वेदाध्ययनं तथाच पुत्रस्य दीर्घायुष्ट्वसियार्थं कोशविज्ञानस्य प्रस्तावः । पुत्रजन्मोमोक्त्यन्तरमेव प्रसङ्गसङ्गत्या किमत्येतत्कोशविज्ञानं नोपदिष्टमितिचेन्न । यतो गायत्र्याख्यस्य परब्रह्मणः कौक्षेयज्योतीरूपत्वेनोपासनमभ्यर्हितं तस्य च मनोमयत्वादिगुणकब्रह्मोपासनान्तरङ्गम् । तथाच तद्वचनेन वैयग्रयादनन्तरकोशविज्ञानं नोक्तं निवृत्ते तु व्यासङ्गे लब्धावसरं यथोक्तफलप्राप्तये कोशविज्ञानं प्रस्तूयते । अन्तरीक्ष इत्यादिना । अन्तरीक्षमुदरं यस्य स तथोक्तः । कोश इव कोशः । कोशशब्देन हिरण्यादिनिक्षेपाधारो मञ्जूषोच्यते । कथं त्रैलोक्यात्मनः कोशत्वमित्याशङ्कामपनेतुं विविधधर्मैं सजातीयत्वं व्युत्पादयति । स च भूमी वुध्न इति । भूमि वुध्नो मूलं यस्य स तथोक्तः । न जीर्यति न विनश्यति चिरकालावस्थायित्वात् । दिशो ह्यस्य स्रक्तयः कोणाः । द्यौरस्य विलम् । अस्य कोशस्योत्तरमूर्ध्वं विलम् । स एष कोशो वसुधानः प्राणिनां कर्माख्यवसु धीयतेऽस्मिन्निति वसुधानः । तस्मिन् विश्वमिदं श्रितम् । कर्मकर्तृफलात्मकं परिदृश्यमानं कृत्स्नमस्मिन् कोशे श्रितम् आश्रितं स्थितमित्यर्थः ॥ १ ॥

तथा च शाण्डिल्यविद्यायाः समनन्तरमस्य ग्रन्थस्य सम्बन्धो नास्ति अतोऽसङ्गतमेतदभिधानम्

**तास्य प्राची दिग्जुहूर्नाम सहमाना नाम दक्षिणा राज्ञी नाम प्रतीची सुभूता नामोदीची तासां वायुर्वत्सः स य एतमेवं वायुं दिशां वत्सं वेद न पुत्ररोदं रोदिति सोऽहमेतमेवं वायुं दिशां वत्सं वेद मा पुत्ररोदं रुदम् ॥ २ ॥ अरिष्टं कोशं प्रपद्येऽमुनाऽमुनाऽमुना प्राणं प्रपद्ये ऽमुनाऽमुनाऽमुना भूः प्रपद्येऽमुनाऽमुनाऽमुना भुवः प्रपद्येऽमुनाऽमुनाऽमुना स्वः**

**प्रपद्ये ऽमुनाऽमुनाऽमुना ॥ ३ ॥ स यदवोचं प्राणं प्रपद्ये इति प्राणो वा इदं सर्वं भूतं यदिदं किञ्च तमेव तत् प्रापत्सि ॥४॥**

तस्यास्य प्राचीदिग्गतो भागो जुहूर्नाम जुह्वत्यस्यां दिशि कर्मिणः प्राङ्मुखाः सन्त इति जुहूर्नाम। सहमाना सहन्तेऽस्यामिति सहमाना सहन्ते हि सर्वे प्राणिनः पापकर्मफलानि यमपुर्य्यामतःसहमाना दक्षिणा दिक्। राज्ञी नाम प्रतीची पश्चिमा दिक्, राज्ञा वरुणेनाधिष्ठित-त्वात्। सुभूता नामोदीची भूतमद्भिः कुवेरादिभिरधिष्ठितत्वात्। तासां दिशां वायुर्वत्सो वायोर्दिक्प्रसूतत्वात्। दिग्जत्वाद्वायोः पुरोवात इत्यादिप्रयोगदर्शनात् यथोक्तविज्ञानस्य फलं दर्शयति। स य इति। स यः कश्चित् पुत्रदीर्घजीवितार्थायैवं प्रागुदाहृतप्रकारेण यथोक्तगुणं वायुं दिशां वत्सममृतं वेद स पुत्ररोदं पुत्रनाशनिमित्तं रोदनं न करोति। पाकं पचतीतिवदयं निर्देशः॥ रोदमिति णमुलन्तो वा एतदुपदेष्टा अहमेवमेतदुपासनमनुष्ठाय पुत्ररोदनाभावं फलं प्राप्त-वानस्मीत्यर्थः॥ २॥

कोशविज्ञानाङ्गभूतान् प्रपदमन्त्रानाह। अरिष्टमिति। अमुना तेन पुत्रेण निमित्तभूतेन दीर्घायुष्ट्वं निमित्तीकृत्यारिष्टमविनाशिनं कोशं प्रपद्ये प्रपन्नोऽस्मि। अमुनाऽमुनाऽमुनेतित्रिर्नाम पुत्रस्य गृह्णाति एवमुत्तरत्रापि॥ ३॥

स्वोक्तमन्त्रान् स्वयमेव व्याचष्टे स यदिति "स यदवोचं प्राणं प्रपद्य" इति व्याख्यानार्थमुपन्यासः। प्राणो वा इदं सर्वं भूतं यदिदं जगत् अतस्तमेव सर्वं तत्तेन प्राणप्रतिपादनेन प्रापत्सि प्रपन्नोऽभूवम्॥ ४॥

**अथ यदवोचं भूः प्रपद्य इति पृथिवीं प्रपद्येऽन्तरिक्षं प्रपद्ये दिवं प्रपद्य इत्येव तदवोचम्॥ ५॥**

**अथ यदवोचं भुवः प्रपद्य इत्यग्निं प्रपद्ये वायुं प्रपद्ये आदित्यं प्रपद्य इत्येव तदवोचम्॥ ६॥**

**अथ यदवोचं स्वः प्रपद्य इत्यृग्वेदं प्रपद्ये यजुर्वेदं प्रपद्ये सामवेदं प्रपद्य इत्येव तदवोचं तदवोचम् ॥ ७ ॥**

इति तृतीयाध्यास्य पञ्चदशः खण्डः ॥ १५ ॥

---

तथा "भूः प्रपद्य" इति त्रील्लोंकान् भूरादीन् प्रपद्य इति तदवोचम् ॥ ५ ॥

अथ यदवोचं "भुवः प्रपद्य" इत्यग्न्यादीन् प्रपद्य इति तदवोचम् ॥ ६ ॥

अथ यदवोचं "स्वः प्रपद्य" इत्यृग्वेदादीन् प्रपद्य इत्येव तदवोचमिति। पूर्वोक्तमजरंकोशं सदिग्वत्सयथाध्यात्वोपरिष्टात् प्रागुदाहृतानां मन्त्राणां जप इति भावः ॥ ७ ॥

इति तृतीयाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

**पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत् प्रातःसवनं चतुर्विंशत्यक्षरा गायत्री गायत्रं प्रातःसवनं तदस्य वसवोऽन्वायत्ताः प्राणा वाव वसव एते हीदं सर्वं वासयन्ति ॥ १ ॥**

दीर्घजीवनफलाप्तये पुरुषविद्या प्रस्तूयते । पुरुष इति । पुरुष एव यज्ञः । वावेति निपात एवार्थकः। यज्ञावयवसादृश्यात्पुरुषे यज्ञदृष्टिः विधेयेत्यर्थः ॥ पुरुषस्य सादृश्याद्यज्ञत्वं सम्पादयति । तस्येति तस्य पुरुषस्य। षोडशाधिकं वर्षशतं पुंस आयुः फलभूतं तत्त्रे प्रविभज्य चतुर्विंशतिवर्षायुषि प्रातःसवनदृष्टिः कर्त्तव्या। केन धर्मेण साजात्यमित्यत आह । "चतुर्विंशत्यक्षरेति। गायत्रं गायत्रीच्छन्दस्कम् विधिनाऽनुष्ठीयमानस्य वाह्ययज्ञस्य प्रातःकालोपलक्षितं कर्म प्रातःसवनम् तत्र स्तोत्रादिगायत्रीच्छन्दस्कं गायत्रं प्रातःसवनमिति श्रुतिरित्यर्थः। प्रातःसवनस्य गायत्रीछन्दसश्चतुर्विंशत्यक्षरात्मकत्वात् चतुर्विंशतिवर्षे प्रातःसवनत्वाध्यासो युज्यत इति भावः । यथोक्ते पुरुषायुषि

प्रातः सवनसम्पत्तिस्तथा वक्ष्यमाणयोरपि पुरुषायुषयोर्मध्यंदिनं सवनं तृतीयसवनमितिसवनद्वयोपपत्तिर्द्रष्टव्या । पुरुषस्य यज्ञत्वे विधियज्ञेन सह साजात्यन्तरमाह--तदस्येति । तत् प्रातःसवनम् । अस्य पुरुषयज्ञस्य विधेयस्यैव वसवो देवाः । अन्वायत्ताः स्वामित्वेनानुगताः । वसूनां सवनस्वामित्वमुभयत्र तुल्यमित्युक्तिः प्रसिद्धान् वसून् पुरुषयज्ञे प्राप्तान् व्यावर्त्तयति । प्राणा वाव वसव इति वागादयो वसवश्च । वावशब्दोऽवधारणे । प्राणेषु वसुशब्दप्रवृत्तिं साधयति । एतेहीदमिति । एते प्राणाः । हि यस्मात् पुरुषादिप्राणिसमूहं वासयन्ति । प्राणाधीना देहस्थितिर्नान्यथा वसनाद्वासनाच्च प्राणानां वसुत्वमुपपादितं भवति ॥१॥

**तंचेदेतस्मिन् वयसि किंचिदुपतपेत् स ब्रूयात्प्राणा वसव इदं मे प्रातःसवनं माध्यंदिनं सवनमनुसन्तनुतेति माऽहं प्राणानां वसूनां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो ह भवति । २ ॥**

**अथ यानि चतुश्चत्वारिंशद्वर्षाणि तन्माध्यन्दिनं सवनं चतुश्चत्वारिंशदक्षरा त्रिष्टुप् त्रैष्टुभं माध्यंदिनं सवनं तदस्य रुद्रा अन्वायत्ताः प्राणा वाव रुद्रा एते हीदं सर्वं रोदयन्ति ३**

**तंचेदेतस्मिन् वयसि किंचिदुपतपेत्स ब्रूयात् प्राणा रुद्रा इदं मे माध्यन्दिनं सवनं तृतीयसवनमनुसन्तनुतेति माहं प्राणानां रुद्राणां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हि भवति ॥ ४ ॥**

प्रातःसवने प्रार्थिता वसवस्तत्र प्रसक्तविघ्नान् परिहृत्य माध्यंदिनसवनपर्य्यन्तं तत्सम्पादयन्तीति प्रसिद्धं तदप्यत्रास्तीत्याह । तं चेदिति । तं यज्ञसम्पादिनमधिकारिणम् । एतस्मिन् प्रातःसवनरूपे । चतुर्विंशतिवर्षात्मके वयसि किञ्चित् ज्वरादिकमुपतपेत् दुःखमुत्पादयेत् तदा स पुरुषः आत्मानं यज्ञं मन्यमानो ब्रूयात् प्रार्थयेत् वसूनितिशेषः ।

किमिति? हे प्राणा इन्द्रियदेवाः वासनाद्वसुसंज्ञा यूयमिदं चतुर्विंशतिवर्षात्मकं मे मम यज्ञरूपस्य प्रातःसवनं वर्तते यत् माध्यंदिनं सवनमनुसंतनुत मध्यंदिनेन सवनेन तद्रूपेणायुषा सहितं कुरुतेत्यर्थः । माहं यज्ञो युष्माकं प्राणानां वसूनां प्रातःसवनेशानां मध्ये भवतां तत्राधिपत्ये सतीति यावत् । एवमुत्तरत्रापि । विलोप्सीय विलुप्येय विच्छिद्येयेत्यर्थः । इतिशब्दः प्रार्थनामन्त्रसमाप्त्यर्थः । प्रार्थनं मोघंकिंनेत्याह । उद्धैवेति । ततः प्रार्थनात् ततो ज्वरादेरुदत्येव ह उद्गच्छत्येव हि । तदेव विवृणोति । अगद इति । व्याधिरहितो भवति ॥ २ ॥

यानीति पूर्ववद्व्याख्येयम् । चतुश्चत्वारिंशदक्षरा त्रिष्टुप् प्रसिद्धा त्रैष्टुभं माध्यंदिनं सवनम् । अष्टचत्वारिंशदक्षरा जगती । जागतञ्च तृतीयसवनम् । अतः संख्यासामान्यादुत्तरयोः पुरुषायुषयोः सवनद्वयसम्पत्तिर्युक्तेत्यर्थः । रुदन्ति रोदयन्तीति रुद्राः प्राणाः क्रूरा हि ते मध्यमे वयस्यतो रुद्राः ॥ ३-४ ॥

**अथ यान्यष्टाचत्वारिंशद्वर्षाणि तृतीयसवनमष्टाचत्वारिंशदक्षरा जगती जागतं तृतीयसवनं तदस्यादित्या अन्वायत्ताः प्राणा वावाऽऽदित्या एते हीदं सर्वमाददते ॥ ५ ॥**

**तं चेदेतस्मिन्वयसि किंचिदुपतपेत्स ब्रूयात् प्राणा आदित्या इदं मे तृतीयसवनमायुरनुसंतनुतेति माऽहं प्राणानामादित्यानां मध्ये यज्ञो विलोप्सीयेत्युद्धैव तत एत्यगदो हैव भवति ॥ ६ ॥**

**एतद्ध स्म वै तद्विद्वानाह महिदास ऐतरेयः स किं म एतदुपतपसि योहमनेन न प्रेष्यामीति स ह षोडशं वर्षशतं मजीवत्प्रह षोडशं वर्षशतं जीवति य एवं वेद ॥ ७ ॥**

इति तृतीयाध्यायस्य षोडशः खण्डः ॥ १६ ॥

---

आददति विषयीकुर्वन्ति ज्ञापयन्तियेते आदित्याः, इत्यर्थः तृतीयं सवनं वर्त्तते तदायुः षोडशोत्तरं वर्षशतमनुसन्तनुत तेन पूर्णेनायुषासहितं कुरुत यज्ञं समापयतेत्यर्थः ॥ ५-६ ॥

एवं स्वात्मानं यज्ञतयोपास्यानिर्विघ्नं पूर्णमायुः प्राप्तवान् कश्चित् किमिति जिज्ञासायामाह । एतद्धस्मेत्यादिना । एतत् पुरुषस्य यज्ञत्वेनोपासनं किल तद्विद्वान् तत् पुरुषयज्ञोपासनं विद्वान् महिदासो नामतः । इतराया अपत्यमैतरेयो महिदासादन्यो मुनिः आहस्म । हे गद स त्वं मे यज्ञरूपस्य ममैतच्छरीरं किं किमर्थमुपतपसि योऽहं यज्ञोऽनेन त्वत्कृतोपतापेन न प्रेष्यामि न मरिष्यामि । अतो वृथा तव श्रम इत्यर्थः । इत्याहस्मेतिसम्बन्धः । स एवंनिश्चयः षोडशवर्षशतमजीवत् । अन्योपि य एवं यथोक्तपुरुषयज्ञं वेदोपास्ते सोप्येवंनिश्चयः षोडशवर्षशतं जीवेतेत्यर्थः ॥ क्वचित् प्राहेति पठ्यते तदेतिशब्दोऽध्याहार्यः ॥ ७ ॥

इति द्वितीयाध्यायस्य षोडशः खण्डः ॥ १६ ॥

---

**स यदशिषति यत्पिपासति यन्न रमते ता अस्य दीक्षाः ॥ १ ॥**

**अथ यदश्नाति यत्पिबति यद्रमते तदुपसदैवेति ॥ २ ॥**

**अथ यद्धसति यज्जक्षति यन्मैथुनं चरति स्तुतशस्त्रैव-तदेति ॥ ३ ॥**

**अथ यत्तपो दानमार्जवमहिंसा सत्यवचनमिति ता अस्य दक्षिणाः ॥ ४ ॥**

**तस्मादाहुः सोष्यत्यसोष्टेति पुनरुत्पादनमेवास्य तन्मरणमेवावभृथः ॥ ५ ॥**

स यदशिशिषतीति । सोऽधिकारी । अशिशिषति अत्तुमिच्छतीति यत्, पिपासति पातुमिच्छतीति यत्, यच्चेष्टाप्राप्तिनिमित्तं न रमते इति ताः क्षुत्पिपासारतयोऽस्य स्वरूपभूतयज्ञस्य दीक्षाः पूर्व-

भावित्वसाम्यात् दुःखसाम्यादित्यप्याहुः ॥ १ ॥ अथेति साम्यान्तर-कथनप्रारम्भार्थम् । एवमग्रेऽपि । स अश्नातीति यत्, इष्टलाभेन रमत इति यत्, तत् भोजनादिकमुपसदैर्यज्ञाङ्गगीयमानव्यापारविशेषैः समानतामेति दीक्षानन्तर्यसाम्यात् ॥ २ ॥ अथ स हसतीति यत्, जक्षति भक्षयतीति यत्, यच्च मैथुनं चरतीति यत्, तत् हासादिकं स्तुतैः सामगानैः शस्त्रैश्शंसनमन्त्रैश्च समानतामेति, शब्दवत्वसाम्यात् ॥३॥ अथ यत्तपः कायक्लेशादिकात्मकं शास्त्रविचाररूपं वा, दानं सत्पात्रेन्यायार्जितवित्तादेः प्रतिपादनम्, आर्जवं धर्ममार्गे मनोवाक्कायकर्मणामेकप्रकारत्वम्, अहिंसा व्यर्थहिंसाभावः सत्यवचनञ्च ता अस्य पुरुषस्य दक्षिणा धर्मपोषकत्वात् ॥ ४ ॥ तस्मात् पुरुषस्य यज्ञरूपत्वादेव। अस्य पुरुषस्य पुनरुत्पादनं पुत्रजन्मरूपं यदा आसन्नं तदा अस्य-भार्या पुत्रं सोष्यति यदाचैतद्भवति तदाऽसोष्टेत्याहुः । प्रसिद्धयज्ञे यदा देवदत्तः सोमं सोष्यति इतिपूर्वमनन्तरञ्च सोममसोष्टेति शब्दः प्रयुज्यते । तथात्रापि सोष्यति असोष्टेतिशब्दसम्बन्धोऽस्तीति भावः। पुरुषस्य पितुः सकाशाज्जन्म प्रथमं जन्म, स्वस्मात्पुत्रोत्पत्तिः द्वितीयं-जन्म। पुत्रदेहस्यापि देहांशत्वादिति द्रष्टव्यम्। तन्मरणं पुरुषमरणम्। अस्य पुरुषयज्ञस्यावभृथो यज्ञस्नानम् समाप्तिसाम्यात् ॥ ५ ॥

**तद्धैतद्घोर आङ्गिरसः कृष्णाय देवकीपुत्रायोक्त्वोवाचापिपास एव स बभूव सोऽन्तवेलायामेतत् त्रयं प्रतिपद्येताक्षितमस्यच्युतमसि प्राणसंशितमसीति तत्रैते द्वे ऋचौ भवतः ॥ ६ ॥**

**आदित्प्रत्नस्य रेतस उद्वयं तमसस्परि ज्योतिः पश्यन्तः उत्तरं स्व पश्यन्त उत्तरं देवं देवत्रा सूर्यमगन्म ज्योतिरुत्तममिति ज्योतिरुत्तममिति ॥ ७ ॥**

इति तृतीयाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

घोरोनामतः। आङ्गिरसः गोत्रतः। तत्, पूर्वखण्डोक्तम्। एतत् एतत्खण्डोक्तं पुरुषयज्ञप्रकारं कृष्णाय देवकीपुत्राय। भगवदावतारादन्यस्मै कस्मैचिद्दषये, उक्त्वा वक्ष्यमाणं भगवदुपासाप्रकारञ्चोवाच। सोऽपिपास एवान्यविद्याभ्यो वभूव। यद्वा श्रीकृष्णप्रीत्यर्थ मित्युक्त्वेत्यनुसन्धाय, उवाचानुष्ठितवानित्यर्थः अस्यामेव विद्यायां निष्ठावान् जात इति यावत्। स एवं यथोक्तयज्ञवित् अन्तवेलायामवभृथरूपमरणकाले। एतत्त्रयं वक्ष्यमाणं भगवद्धर्ममन्त्रत्रयं प्रतिपद्येत ध्यायेत—हे भगवन् त्वं अक्षितमक्षयोऽसि। अच्युतं गुणैरच्युतोऽसि-प्राणसंशितं प्राणाधिक्येन सुखितोऽसि। इति प्रपद्येतेत्यन्वयः। एतादृशयज्ञध्यानेनापरोक्षज्ञानं तेन भगवत्प्राप्तिरूपं फलञ्च प्रतिपद्यत इति वक्तव्यम्। अस्मिन्नर्थद्वये ऋचौ प्रस्ताव्योदाहरति। तत्रेति। तत्रोक्तेऽर्थद्वये। एते वक्ष्यमाणे द्वे ऋचौ भवतः॥ ७॥

प्रत्नस्य पुरातनस्यानादे रेतसः जगद्बीजभूतस्याव्यक्तस्यादिभूतं संसारतमोनिवारकतया ज्योतिश्शब्दितं परं ब्रह्म "सदा पश्यन्ति सूरय" इत्युक्तरीत्या नित्यसूरयः पश्यन्तीत्यर्थः। तमसः प्रकृतेः परस्तादुत्तरं ज्योतिः परिपश्यन्तः। उत्तरं स्वः भगवल्लोकं परिपश्यन्तः। अत्र-पश्यन्त इति हेत्वर्थे शतृप्रत्ययः। भगवल्लोकस्य तद्गतपरमात्मनश्च दर्शनाय। न केवलमेतावात् देवत्रादेवं देवविषयेदेवं देवानां देवं सूरिभिः प्राप्यत्वात् सूर्य्यं उत्तमम्। उत्तमोत्तमेषूत्तमं ज्योतिर्वासुदेवाख्यम् अगन्म प्राप्ताः स्म उत् उदाख्यं ज्योतिरिति सम्बन्धः। तमसो निर्गत्येतिशेषः। तथाचात्र न क्रियावृत्तिर्न वाक्यभेद इति द्रष्टव्यम्। द्विरुक्तिरुक्तावधारणार्था।

इति तृतीयाध्यायस्य सप्तदशः खण्डः॥ १७॥

---

**मनो ब्रह्मेत्युपासीतेत्यध्यात्ममथाधिदैवतमाकाशो ब्रह्मेत्युभयमादिष्टं भवत्यध्यात्मञ्चाधिदैवतञ्च॥ १॥**

**तदेतच्चतुष्पाद्ब्रह्म वाक् पादः प्राणः पादश्चक्षुः पादः श्रोत्रं पाद इत्यध्यात्ममधिदैवतमग्निः पादो वायुः पाद**

**आदित्यः पादो दिशः पाद इत्युभयमेवादिष्टं भवत्यध्यात्मं चैवाधिदैवतञ्च ॥ २ ॥**

अध्यात्ममनसि । अधिदैवताकाशे च ब्रह्मदृष्ट्योपासनमुपदिश्यते। मनो ब्रह्मेति । मनोऽन्तःकरणं ब्रह्मदृष्ट्योपासीतेति एतदात्मविषयं दर्शनमप्याध्यात्मम् । अथाधिदैवतं देवताविषयं अवद्यामः। आकाशो ब्रह्मेत्युपासीत । एवमुभयमध्यात्ममधिदैवतञ्चोभयं ब्रह्मदृष्टिविषयमादिष्टमुपदिष्टं भवति। आकाशमनसोः सूक्ष्मत्वात् मनसोपलभ्यत्वाच्च ब्रह्मणो योग्यं मनो ब्रह्मदृष्टेः। नच ब्रह्मणो मनसोपलभ्यत्वात् तत्र तद्दृष्टिः कर्त्तुं युज्यते। नह्याकाशेन ब्रह्मोपलभ्यते यतः ब्रह्मदृष्टिराकाशविषयिणी स्यादिति । आकाशस्य सर्वगतत्वात्सूक्ष्मत्वाच्च ब्रह्मदृष्टेराकाशं विषयीभवतीत्युक्तेः सम्भवदुक्तिकत्वादित्याशयः ॥ १ ॥

तदेतन्मनआख्यं ब्रह्म चतुष्पाद्ब्रह्म । मनोरूपस्य ब्रह्मणश्चतुष्पात्त्वं कथमिति जिज्ञासायामाह । वाक् पाद इति। वागादीनां चतुर्णां मनोनियम्यत्वात् मनःपादत्वाऽध्यासो युज्यत इति भावः । अग्न्यादयश्चत्वारो ब्रह्मरूपाकाशस्योदरलग्नाः पादा भवन्तीत्यर्थः ॥ २ ॥

**वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च भाति तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ३ ॥**

**प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ४ ॥**

**चक्षुरेव ब्रह्मणश्चतुर्थः पादः स आदित्येन ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ५ ॥**

**श्रोत्रमेव ब्रह्मणश्चतुर्थःपादः स दिग्भिर्ज्योतिषा भाति च तपति च भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद ॥ ६ ॥**

इति तृतीयाध्यायस्याष्टादशः खण्डः ॥ १८ ॥

---

आध्यात्मिकान् पादान् विशदयति । वागेवेति । तत्र वागेव मनसो ब्रह्मणश्चतुर्थः पादः, इतरपादत्रयापेक्षया वाचा हि पादेन वक्तव्यं विषयं प्रतिलभते देवदत्तः यथा गवादिर्गन्तव्यं पादेनैव प्राप्नोति तेन तस्या युक्तं पादत्वमित्यर्थः । सोऽग्निनाधिदैवतेन ज्योतिषा भाति दीप्यते तपति च संतापं चोष्णं करोति । फलं दर्शयति । कीर्त्येति । कीर्तियशसोः प्रत्यक्षत्वपरोक्षत्वाभ्यां भेदः ॥ ३ ॥

प्राण एव ब्रह्मणश्चतुर्थः पादः । प्राणः घ्राण एव ब्रह्मणो मनसश्चतुर्थपादः, तेनापि गन्धविषयं क्रामति । वायुना गन्धाय भाति तपति च चक्षुरादित्येन रूपग्रहणाय । श्रोत्रं दिग्भिः शब्दग्रहणाय । दिशः श्रोत्रं भूत्वा कर्णौ प्रविशन्निति दिग्देवतानां श्रोत्राधिष्ठातृत्वादिति भावः । द्विरुक्तिर्विद्यासमाप्त्यर्था ॥ ४–५–६ ॥

इति तृतीयाध्यायस्याष्टादशःखण्डः ॥ १८ ॥

---

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते—गुणोपसंहारपादे छान्दोग्ये ताण्डिनां पैङ्गिनाञ्च रहस्यब्राह्मणे पुरुषविद्या श्रूयते । "पुरुषो वाव यज्ञस्तस्य यानि चतुर्विंशतिवर्षाणि तत्प्रातः सवनमि"त्यादिना म्नाता । तैत्तिरीयकेऽपि सा श्रूयते । तस्यैवं विदुषो यज्ञस्यात्मा यजमानः श्रद्धा पत्नी"ति । तत्र सन्दिह्यते । किमत्र विद्याभेदः उत नेति । तत्र पुरुषविद्येतिसमाख्याऽविशेषात् पुरुषावयवेषु यज्ञावयवकल्पनासाम्येन रूपाभेदात् । तैत्तिरीयके फलसम्बन्धाम्नानात् । छान्दोग्ये तेन "स ह षोडशं वर्षशतं जीवती"त्यनेनैकफलत्वाच्च

विद्यैक्यमिति प्राप्ते राद्धान्तमाह । "पुरुषविद्यायामपि चेतरेषामनाम्नानात् ।" ब्र० सू० । ३ । ३ । २४ ॥

पुरुषविद्यायामप्युभयत्र रूपभेदाद्विद्याभेदः । कुतः ? इतरेषामनाम्नानात् इतरशाखोदितानामितरशाखास्वनाम्नानात् । यथैवैषां शाखिनां ताण्डिनां पैङ्गिनाञ्च पुरुषविद्यायां यज्ञावयवा आम्नाताः, नैवमितरेषां तैत्तिरीयाणां पुरुषविद्यायाम् । यथा वा तैत्तिरीयपुरुषविद्यायां यजमानपत्न्यादिसवनत्रयं चाम्नातं नैवमितरेषां ताण्डिनां पैङ्गिनां च पुरुषविद्यायाम् । फलसम्बन्धभेदोऽपि । छान्दोग्ये ह्यायुःप्राप्तिफला पुरुषविद्या तैत्तिरीयके तु पूर्वानुवाकगतस्य ब्रह्मणो महिमानमाप्नोतीति ब्रह्मविद्याफलस्यैव सन्निधानादफलस्यानुवाकस्य ब्रह्मविद्याङ्गतया ब्रह्मप्राप्तिरेव फलम् । अतः सवनत्रयकल्पनप्रकारभेदेन यजमानपत्न्यादिकल्पनप्रकारभेदेन च रूपभेदात् फलसम्बन्धभेदाच्च विद्याभेदः । इति नैकत्रोक्तानां धर्माणामितरत्रोपसंहार इति स्थितम् । प्रकृतमनुसरामः ।

**आदित्यो ब्रह्मेत्यादेशस्तस्योपव्याख्यानमसदेवेदमग्र आसीत् । तत्सदासीत् तदभवत्तदण्डं निरवर्तत तत्सम्वत्सरस्य मात्रामशयत तन्निरभिद्यत ते आण्डकपाले रजतं च सुवर्णञ्चाभवताम् ॥ १ ॥**

मन आख्यस्य ब्रह्मणः चतुष्पादत्वमभिहितं पूर्वखण्डे तत्रादित्यस्यापि पादत्वं निर्दिष्टं, तत्र कार्त्स्न्येन ब्रह्मदृष्ट्यर्थमिदं प्रस्तूयते । आदित्यो ब्रह्मेत्यादेशः । आदिश्यत उपदिश्यत इत्यादेश उपदेशः । तस्यादित्यस्योपव्याख्यानं क्रियते स्तुत्यर्थम् । कारणस्य पूर्ववृत्तित्वं दर्शयितुमाह । असदेवेति । इदं सन्निकृष्टं जगत् । अग्रे सृष्टेः प्राक् प्रलये । असत् सद्यते गम्यत इति सत् । न सत् असत् । नामरूपादिनाऽगम्यमव्याकृतमिति यावत् । तत्सदासीत् । तदव्याकृतनामरूपं विश्वं सदासीत् । अणुमात्रं कार्योन्मुखमासीत् । तत्समभवत् । अल्पतरनाम-

रूपव्याकरणेनाङ्कुरितवीजम् । भूतसूक्ष्माकारप्राप्तेरनन्तरं पञ्चीकरणप्रक्रिययाऽन्योन्यावयवानुप्रवेशेन स्थूलभूतावस्थमासीदित्यर्थः ॥ स्थूलेभ्यश्च भूतेभ्योऽण्डनिर्वृत्तिमाह । तदण्डं निरवर्त्तत इति । क्रमेण स्थूलीभवद्भ्योऽण्डं सम्वृत्तम् । तत्सम्वत्सरस्य मात्रामशयत तदण्डं सम्वत्सरस्य कालस्य मात्रां परिमाणत्वमेकरूपमेवासत स्थितं वभूव । तन्निरभिद्यत । सम्वत्सरकालादूर्ध्वं तदण्डं निर्भिन्नमभवत् । तस्य निर्भिन्नाण्डस्य कपाले द्वे रजतं च सुवर्णञ्चाभवतां सम्वृत्ते ॥ १ ॥

**तद्यद्रजतं सेयं पृथिवी यत्सुवर्णं सा द्यौ यज्जरायु ते पर्वता यदुल्वं स मेघो नीहारो याः धमनयस्ता नद्यः यद्वास्तेयमुदकं स समुद्रः ॥ २ ॥**

**अथ यत्तदजायत सोसावादित्यस्तं जायमानं घोषाउलूलवोनूदतिष्ठन् सर्वाणि च भूतानि च सर्वे च कामास्तस्मात्तस्योदयं प्रति प्रत्यायनं प्रति घोषा उलूलवोऽनूत्तिष्ठन्ति सर्वाणि च भूतानि सर्वे चैव कामाः ॥ ३ ॥**

**स य एतमेवं विद्वानादित्यं ब्रह्मेत्युपास्ते अभ्याशो ह यदेनं साधवो घोषा आच गच्छेयुरुपच निम्नेडेरन् निम्नेडेरन् ४**

इति तृतीयाध्यायस्यैकोनविंशः खण्डः ॥१९॥

---

इति छान्दोग्योपनिषद्ब्राह्मणे तृतीयोऽध्यायः ॥ ३ ॥



तत्तयोः कपालयोर्यद्रजतं कपालं सेयं पृथिवी । पृथिव्युपलक्षितमध्याण्डकपालम् । यत्सुवर्णं कपालं सा द्यौः द्युलोकोपलक्षितमूर्ध्वकपालम् । यज्जरायु गर्भपरिवेष्टनं स्थूलमण्डस्य विशकलितभावदशायां यत्स्थूलं शिला ते पर्वता वभूवुः । यदुल्वं यत्सूक्ष्मगर्भपरिवेष्टनं मेघसहितं हिमम् । धमनयः शिराः । यत्तस्य वस्तौ भवं वास्तेयमुदकं स समुद्रः ॥ २ ॥

यत्तादजायत तस्मिन्नण्डे गर्भरूपं यदजायत स आदित्यः आदित्यं जायमानं घोषाः शब्दा उलूलवः उरुरवः विस्तीर्णरवाः उलूलव इत्युत्सवकालीना शब्दविशेषा वङ्गदेशे प्रसिद्धा इति यावत् । उदतिष्ठन्नुत्थितवन्तः, सर्वाणि स्थावरजङ्गमानि भूतानि तेषां कामाः काम्यमानाः स्त्रीवस्त्रान्नादयश्च उदतिष्ठन् उत्थितवन्तः । सर्वस्यादित्योदयानन्तरभावित्वादिति भावः ।। ३ ।।

स यः कश्चिदेतमेव यथोक्तमहिमानमादित्यं ब्रह्मेत्युपास्ते । दृष्टंफलमभ्यासः, क्षिप्रं यत् ये साधवः शोभना घोषास्तेसर्वे उप समीपे आगच्छेयुः निम्नेडेरन् सुखञ्च कुर्युरित्यर्थः । "मृड्सुखेचेति धातुरन्तर्भावितण्यर्थः । द्विरुक्तिरध्यायसमाप्त्यर्था ।। ४ ।।

इति तृतीयाध्यायस्यैकोनविंशः खण्डः ।। १३ ।।

---

पूज्यपाद श्री१०८भगवन्निम्बार्काचार्योपबृंहितसत्सम्प्रदा-
यानुगताशेषरसिकचक्रचूडामणि श्रीस्वामिहरिदास
पदाश्रितानुगेनामोलकरामविदुषा संगृहीतायां
छान्दोग्योपनिषत्प्रकाशिकाटीकायां तृतीयोध्यायः ।। ३ ।।

---

## अथ चतुर्थाध्यायस्य प्रथमः खण्डः

**ओ३म् । जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस स ह सर्वत आवसथान्मापयांचक्रे सर्वत एव मेऽत्स्यन्तीति ।। १ ।।**

**अथ हंसा निशायामतिपेतुस्तद्धैवं हंसो हंसमभ्युवाद हो हो अयि भल्लाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ।। २ ।।**

अथ सम्वर्गविद्या प्रस्तूयते।

**धर्मार्थौ यत्र न स्यातां शुश्रूषा वापि तद्विधा।**
**तत्र विद्या न वक्तव्या शुभं बीजमिवोषरे॥**

इति स्मृत्यनुसारेण श्रद्धादिसम्पन्नेऽधिकारिविशेषे विद्या विनियोक्तव्या न यस्मै कस्मैचिदतो विद्यादानग्रहणविधिप्रदर्शनाय परब्रह्मविषयां संवर्गविद्यां वक्तुञ्च आख्यायिका प्रारभ्यते॥ जनश्रुतस्यापत्यं जानश्रुतिः वेत्यैतिह्ये। पुत्रायणगोत्रापत्यं पौत्रायणः। श्रद्धया देयं यस्यासौ श्रद्धादेयः। वहु प्रभूतं दातुं शीलमस्येति वहुदायी। वहुपाक्यः अहन्यहनि अन्नार्थिभ्यः पक्तव्यवान्॥ प्रतिष्ठानपुरे राजाऽऽस।

**अस्ति गोदावरीतीरे प्रतिष्ठानपुरं महत्।**
**तत्र जानश्रुतिनाम्ना मेदिनीवल्लभोऽभवत्॥**

इति वचनात्। स जानश्रुतिः सर्वतः सर्वासु दिक्षु ग्रामेषु च नगरेषु च आवसन्त्येष्वित्यावसथास्तान् मापयांचक्रे कारयामास जनाः सर्वत एत्य ममान्नं तेष्वावसथेषु वसन्तोऽत्स्यन्तीति भोदयन्तीति बुद्ध्या॥ १॥

तत्र वसति तस्मिन्राज्ञि अत्युच्चसौधभवनमधिरुह्य स्थिते सत्यथ-हंसाः देवहंसाः निशायामन्तरिक्षमार्गेणातिपेतुः विनिर्गताः॥

**ततोन्तरिक्षमार्गेण यूथानां पक्षसंहताः।**
**मृणालचंचवो दिवि देवहंसा विनिर्गताः॥**

इति वचनात्।

**त्वरया गच्छन्तं तेषामन्योन्यं मर्मभाषिणाम्।**
**भल्लाक्षप्रमुखाः द्वित्राः पुरस्तान्निर्ययुर्जवात्॥**

इति वक्तव्यम्। तत्तदा हंसो हंसमभ्युवाद पाश्चात्या हंसाऊचुस्तान् पुरतो गच्छतो जवादित्यथः। हो होऽयीति सम्वोधने। भल्लाक्ष, भल्लाक्ष, मन्दाक्ष, मन्दाक्ष! कुतो मन्दाक्षत्वमित्यत आह। जानश्रुतेरिति। जानश्रुतेः पौत्रायणस्य ज्योतिः प्रकाशमानं तेजः पुञ्जं दीपाध्वररूपं

दिवा सममाततं तदपि त्वं न पश्यसीति भावः। तज्ज्योतिस्त्वामतिक्रम्य गच्छन्तं मा प्रसाङ्क्षीः मा प्रसाङ्क्षीत् सम्बद्धं मा भूत्। मा प्रधाक्षीः। माप्रधाक्षीत् मा दहेत् तज्ज्योतिरतिक्रम्य गमने त्वां सम्बन्ध्यदहेदिति-भावः। इत्यभ्युवादेति सम्बन्धः॥ २॥

**तमु ह परः प्रत्युवाच कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्कमात्थेति यो नु कथं सयुग्वा रैक्व इति॥ ३॥**

**यथा कृतायविजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभि-समेति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति॥ ४॥**

तं हंसं प्रति परोऽग्रगामी हंसः उच्चैः प्रत्युवाच—अरे हंस-तद्वचनं कमेनमुद्दिश्यात्थ सन्तं निर्दिष्टं सयुग्वानं शकटरैक्कमिवेति अननुरूपमस्मिन्नुक्तमेवं वक्तुं रैक एव योग्य इति भावः। एवमुक्त इतर आह। य इति। नु इदानीं यस्त्वयोक्तः सयुग्वा रैक्कः स कथं किं माहात्म्यवानिति॥ ३॥

एवं पृष्टोऽपर आह। कृतायः कृतोनामाश्रयःद्यूतसमये प्रसिद्धश्च-तुरङ्कायः स यदा जयति द्यूते प्रवृत्तानां तस्मै विजिताय तदर्थमितरे त्रिद्व्येय काङ्का अधरेयास्ते संयन्ति संगच्छन्तेऽन्तर्भवन्ति। चतुरङ्के कृताये एकां-कद्वित्र्यङ्कानां शतं सहस्रेषु सम्भवन्तीतिन्यायेन विद्यमानत्वात्तदन्तर्भव-न्तीत्यर्थः॥ यथायंदृष्टान्त एवमेनं रैक्कं कृतायस्थानीयं सर्वं तदभिस-मैत्यन्तर्भवति रैक्के। किं तद्यत् किञ्च लोके सर्वाः प्रजाः साधु शोभनं धर्मजातं कुर्वन्ति। तत्सर्वं रैक्वस्य धर्मेऽन्तर्भवति। तस्य च फले सर्व-प्राणिधर्मफलमन्तर्भवतीत्यर्थः। किं तद्वेद्यं स रैक्वो वेद तद्वेद्यमन्योऽ-पि यो वेद तमपि सर्वप्राणिधर्मजातं तत्फलञ्च रैक्कमिवाभिसमेत्य-नुवर्त्तते। स एवम्भूतो मया विद्वानेतदुक्त एवमुक्तो रैक्कवत्स एव कृतायस्थानीयो भवतीत्याशयः॥ ४॥

**तदु ह जानश्रुतिः पौत्रायण उपशुश्राव स ह संजिहान**

एव क्षत्तारमुवाचाङ्गरे ह सयुग्वानमिव रैक्वमात्थेति यो नु कथं स युग्वा रैक्व इति ॥ ५ ॥

यथा कृतायविजितायाधरेयाः संयन्त्येवमेनं सर्वं तदभिसमैति यत्किंच प्रजाः साधु कुर्वन्ति यस्तद्वेद यत्स वेद स मयैतदुक्त इति ॥ ६ ॥

स ह क्षत्तान्विष्य नाविदमिति प्रत्येयोय तं होवाच यत्रारे ब्राह्मणस्यान्वेषणा तदेनमार्च्छेति ॥ ७ ॥

सोऽधस्ताच्छकटस्य पामानं कषमाणमुपोपविवेश तं हाभ्युवाद त्वं नु भगवः सयुग्वा रैक्व इत्यहं ह्यरा ३ इति ह प्रतिजज्ञे स ह क्षत्ताऽविदमिति प्रत्येयाय ॥ ८ ॥

इति चतुर्थाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

एवं पुरो हंसेनोक्ते सति तदुतत्सर्वं जानश्रुतिः पौत्रायणः । उपशुश्राव ह । ततः स श्रुतहंसकृतानादरः संजिहान एव शयनादुत्तिष्ठन्नेव । क्षत्तारं सारथिमुवाच । यथोक्तं ततः सारथिमाहूय भूपालो विस्मयाश्रयः सन्दिदेश महात्मा स रैक्व आनीयतामिति । अरे अङ्गेष्ट । सयुग्वा युगं वहतीति युग्यो वलिवर्दः अश्वो वाऽस्यामस्तीति युग्वा शकटी तया सह वर्त्तते सयुग्वा रैक्वो ज्ञातव्य इति शेषः । कुतोऽसौ ज्ञातव्यः यतः सयुग्वानमिव रैक्वमात्थेति हंसेनोक्तम् । समग्रहंसवाक्योपलक्षणमेतत् ॥ ५ ॥

यस्त्वयोक्तः सयुग्वा रैक्वः स कथमिति क्षत्रा पृष्टः पौत्रायणो हंसोक्तम् तल्लक्षणमाह । यथेति ॥ ६ ॥

स ह क्षत्तान्विष्य तत्रैवेतस्ततो विचार्य्य नाविदमिति प्रत्येयाय तं होवाच पौत्रायणः । अरे यत्र प्रदेशे ब्राह्मणस्य ब्राह्मणानामन्वेषणा शास्त्रविचारणा प्रवर्त्तते ततस्तत्रैनमार्च्छऽऽवगच्छेति ॥ ७ ॥

एवमुक्तः क्षत्ता पुनस्ततो निर्गत्य वाराणस्यादिसमस्ततीर्थाटनं

कृत्वा कुत्रापि तमनुपलभमानः काश्मीरनगरमासाद्य तत्र राजद्वारे शकटस्याधस्तात् पामानं कषमाणं कण्डूयमानं रैक्कमवलोक्य राज्ञा निरूपितैश्चिन्हैरयमेव रैक्क इति निश्चित्योपसमीपे गत्वा प्रणम्योपविवेश तत्रोपविश्य रैक्कं प्रत्युवाच क्षत्ता । हे भगवस्त्वमेव किं सयुग्वा रैक्क इति । एवमुक्तो रैक्क अहं ह्यरा३ अर इतिहानादरे । इति प्रतिजज्ञे । प्लुतिः पामकषणभावेन किमर्थमत्र विश्रान्तः किञ्च कर्त्तुं चिकीर्षसीत्युक्तो वयं पूर्णमनोरथाः । परं केनापि वटुना परिचर्या-विधायिना भवितव्यमित्युक्तवानिति ग्राह्यम् । स ह क्षत्ता रैक्कमन्विष्याविदमिति राजानं प्रत्येयाय । यथावृत्तञ्च न्यवेदयत् ॥ ८ ॥

इति तृतीयाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

**तदुह जानश्रुतिः पौत्रायणः षट् शतानि गवां निष्कमश्वतरी रथं तदादाय प्रतिचक्रमे तं हाभ्युवाद ॥ १ ॥**

**रैक्वेमानि षट् शतानि गवामयं निष्कोऽयमश्वतरीरथो नु म एतां भगवो देवतां शाधि यां देवतामुपास्स इति ॥२॥**

**तमुह परः प्रत्युवाच हारे त्वा शूद्र तवैव सह गोभिरस्त्विति तदुह पुनरेव जानश्रुतिः पौत्रायणः सहस्रं गवां निष्कमश्वतरीरथं दुहितरं तदादाय प्रतिचक्रमे ॥ ३ ॥**

तत् तस्मात् क्षत्रा रैक्कवार्त्ताया एवमुक्तत्वादेव जानश्रुतिः पौत्रायणो गवां षट् शतानि निष्कं मुक्ताहारम् अश्वतरीभ्यां युक्तं रथं गुरुदक्षिणार्थत्वेनादाय प्रतिचक्रमे रैक्वं प्रति गतवान् । गत्वा च पौत्रायणः तं रैक्वं प्रत्यभ्युवाद ॥ १ ॥

हे रैक्वेमानि गवां षट् शतानि अयं निष्कोऽयमश्वतरीरथः तव दक्षिणात्वेन वर्तते हे भगवो भगवस्त्वं मे ममैतां देवतामनुशाधि त्वं यां देवतामुपास्स इति ॥ २ ॥

तं राजानं प्रति परो लोकविलक्षणो मुनिः प्रत्युवाच, अहेति सम्बोधनः, हे शूद्र हार इत्वा रथश्च गोभिस्सह तवैवास्त्विति ।

हारेत्वेति सेदु राजेत्यादिवत् विसर्गलोपेन भवति। हारे त्वानाविति वा। तथात्वे पृथगन्वयः । हारेण युक्त इत्वा हारत्वेतिवा । कथं जानश्रुतेः सति क्षत्रियत्वे शूद्रसम्बोधनमयोग्यं रैक्वेणोच्यते हे शूद्रेति इतिचेच्छृणु । न जातिशूद्रो जानश्रुतिः किन्तु क्षत्रियेऽस्मिन् गौणः शूद्र-शब्दः । तेनशुगाविष्टत्वेनासौ जानश्रुतिः शुचा हेतुना रैकमाद्रवतीति शूद्रः । श्रुत्वा वा हंसवाक्यं रैकमाद्रवतीति नैमित्तिकं तत्र शूद्रपदं नतु शूद्रत्वजात्यवच्छिन्नपरं तस्य श्रुतिद्वारा विद्याधिकारो नास्तीत्यपशूद्राधिकरणे निर्धारितमिति । तदु ह पुनरेव इति । तत् तस्मात् रैक्वेणैवमुक्तत्वादेव ह जानश्रुतिः पौत्रायणोऽल्पं धनमाहृतमिति मुनेः कोप इत्यभिप्रेत्य तदा पुनरेव गवां सहस्रं निष्कमश्वतरीरथमृषेर्भार्यार्थमात्मनो दुहितरञ्चादाय तत् तत्र प्रतिचक्रमे ॥ ३ ॥

**तं हाभ्युवाद रैक्वेदं सहस्रं गवामयं निष्कोऽयमश्वतरीरथ इयं जायाऽयंग्रामो यस्मिन्नास्सेऽन्वेव मा भगवः शाधीति ॥४॥**

**तस्या ह मुखमुपोद्गृह्णन्नुवाचाऽऽजहारेमाः शूद्रानेनैव मुखेनाऽऽलापयिष्यथा इति ते हैते रैक्वपर्णा नाम महावृषेषु यत्रास्मा उवास तस्मै होवाच ॥ ५ ॥**

इति चतुर्थाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

स गत्वा रैकं प्रत्यभ्युवाद । रैक्वेदं गवां सहस्रमयं निष्कोऽयमश्वतरीरथः । इयं तव जाया यस्मिंस्त्वमास्से अयं ग्रामश्च तव दक्षिणात्वेन वर्त्तते । हे भगवो मा मां तां देवतामन्वेव शाधि सम्यगेव शिक्षय ॥ ४ ॥

एवमुक्तोरैक्वस्तस्याः जायार्थमानीताया राज्ञो दुहितुर्मुखमुपोद्गृह्णन् शनैः पश्यन्नतिक्रुद्धः सन्नुवाच । हे शूद्र त्वमिमा गुरुदक्षिणाः आजहार अपहर । विरक्तस्य मम तेन प्रयोजनाभावात् । मदभिप्रेतश्च परिचर्य्याविधायी वदुरेव । स च नानीतः । त्वन्तु शुश्रूशया विनाऽनेन

गवादिनैव मुखेन मामाऽलापयिष्यथा आलापयिष्यसीति इत्युक्ते शापभीतेन राज्ञा प्रसादितो रैक्वस्तस्मै होवाच ॥ जानश्रुतिराज्ञा दत्तरैक्वासग्रामसंज्ञामाह तइति। ते हैते प्रसिद्धा ग्रामाः महावृषेषु देशेषु काश्मीरापरपर्य्यायेषु रैक्वपर्णा नाम यत्र येषु ग्रामेषु रैक्वः अस्मै राज्ञे उपदेशादानार्थमेवोवास । तस्मै राज्ञे धनं दत्तवते ह किलोवाच विद्यां स रैक्वः ॥ ४ ॥

इति चतुर्थाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

**वायुर्वाव संवर्गो यदा वा अग्निरुद्वायति वायुमेवाप्येति यदा सूर्य्योऽस्तमेति वायुमेवाप्येति यदा चन्द्रोऽस्तमेति वायुमेवाप्येति ॥ १ ॥**

**यदाऽऽप उच्छुष्यन्ति वायुमेवापियन्ति वायुर्ह्येवैतान्सर्वान् संवृङ्क्ते इत्यधिदैवतम् ॥ २ ॥**

**अथाध्यात्मं प्राणो वाव सम्वर्गः स यदा स्वपिति प्राणमेव वागप्येति प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः प्राणो ह्येवैतान् सर्वान् संवृङ्क्त इति ॥ ३ ॥**

कथं विद्यामुक्तवानित्यतस्तं प्रकारं निर्दिशति । वायुरित्यादिना । वायुः वायुशरीरकः परमात्मा एव ग्राह्यो नतु वाह्यो वायुः । यां देवतामुपास्सेतां मे शाधीति देवताप्रश्नोत्तरत्वात् उपक्रमे एनं सर्वं तदभिसमेतीत्यादि ब्रह्मविद्याप्रशंसावगमात् । वक्ष्यमाणलिङ्गानुपपत्तेश्च । तस्मादत्र वायुपदेन वायुशरीरकः परमात्मोच्यते ॥ वावेत्यवधारणार्थः । संवर्गः । संवर्गनं संग्रहणम् । एकीकृत्य ग्रहणम् । सम्वर्गत्वगुणको वायुशरीरकः परमात्मा ध्येय इति यावत् ।

कथं सम्वर्गत्वं वायोरित्यत आह । यदावैति । यदा महाप्रलयेऽग्निरुद्वायति उपशाम्पति तदा वायुमेवाप्येति । यदा सूर्य्योऽस्तमेति तदा वायुमेवाप्येति यदा चन्द्रोऽस्तमेति तदा वायुमेवाप्येति ॥ १ ॥ यदा

आपः उच्छुयन्ति उच्छोषमाप्नुवन्ति वायुमेवापयन्ति। कुतः ? यतो वायुरेवैतान्, संवृङ्क्ते। एकीकृत्य सङ्गृह्णातीत्यर्थः। इत्यधिदैवतम्। एवं देवेषु सम्वर्गोयमित्यर्थः ॥२॥ अथाध्यात्मं सम्वर्गस्वरूपं निरूप्यते। प्राणइति। प्राणः परमात्मा सम्वर्गः। स यदा स्वपिति स प्रत्यगात्मा यस्मिन् काले स्वपिति प्राणमेव वागप्येति। प्राणं चक्षुः प्राणं श्रोत्रं प्राणं मनः प्राणो हि यस्मादेवं तान् वागादीन सर्वान् संवृङ्क्ते। एकीकृत्य संगृह्णातीत्यर्थः ॥ ३ ॥

उक्तमर्थमुपसंहरति। तावेति।

**तौ वा एतौ द्वौ संवर्गौ वायुरेव देवेषु प्राणः प्राणेषु ॥ ४ ॥ अथ ह शौनकं च कापेयमभिप्रतारिणञ्च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्षे तस्मा उ ह न ददतुः ॥५॥**

तौ वा एतौ द्वौ संवर्गौ संवर्जनगुणौ वायुरेव देवेषु प्राणः प्रणेषु इन्द्रियेषु मुख्यप्राण एवेति ॥ ४ ॥ सम्वर्गविद्यास्तुत्यर्थमाख्यायिकेयं प्रस्तूयते। अथेति। हेत्यैतिह्ये। शौनकं शुनकस्यापत्यं,कापेयं कपिगोत्रोद्भवञ्चाऽभिप्रतारिणं नामतः। कक्षसेनस्यापत्यं काक्षसेनिं चेत्येतौ परिविष्यमाणौ कचिदन्नं प्रवेशयन्तौ कश्चिद्ब्रह्मचारी बिभिक्षेऽन्नं याचितवान्। तौ उभौ तस्मै ब्रह्मचारिणेऽन्नं न ददतुरेव हेत्याश्चर्ये ॥५॥

**स होवाच महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपास्तं कापेय नाभिपश्यन्ति मर्त्या अभिप्रतारिन् बहुधा वसन्तं यस्मै वा एतदन्नं तस्मा एतन्न दत्तमिति ॥ ६ ॥ तदु ह शौनकः कापेयः प्रतिमन्वानः प्रत्येयायात्मा देवानां जनिता प्रजानां हिरण्यदंष्ट्रो बभसोऽनसूरिर्महान्तमस्य महिमानमाहुरनद्यमानो यदनन्नमत्तीति वै वयं ब्रह्मचारिन्नेदमुपास्महे दत्ताऽस्मै भिक्षामिति ॥ ७ ॥**

तदा स ब्रह्मचार्युवाच—हे कापेय हे प्रतारिन् यो भुवनस्य

गोप्ता एको देवः । चतुरो महात्मन अग्न्यादित्यचन्द्रजलरूपान् । अध्यात्मं वाक्चक्षुःश्रोत्रमनोरूपान् वा जगार । जग्रास "गॄ निगरणे" । यञ्च तं वहुरूपतया वसन्तं मर्त्येषु मर्त्याः मरणधर्माणः । अज्ञानेन विहितदृष्टयस्सन्तो न जानन्ति स देवः कः किंनामा किंमहिमा तदहं जानामि त्वं जानासि चेद्वद तस्मात् यस्यै देवतायै तदन्नं प्रसिद्धं तस्मा एतदन्नं न दत्तम् ।

एतदुक्तं भवति । जगत्सर्वं यस्य सम्वर्गस्य प्रजापतेरन्नं तस्मै भिक्षमाणाय मह्यमन्नं न दत्तम् । अतः केऽपि न जानन्तीत्युपासनादार्ढ्याय स्वोपास्यैकबुद्धया भिक्षमाणाय स्वस्मै अपादानमेव स्वोपास्यदेवताया अप्रदत्तं मत्वा न दत्तम् ॥ ६ ॥ एवं ब्रह्मचारिणोक्ते तदु तदेव शौनकः कापेयस्तत्पृष्टं दैवतं प्रतिमन्वानो विचारयन् प्रत्येयाय व्यजानात् । उवाच । आत्मेति । हे ब्रह्मचारिन् यस्त्वया पृष्टो देवः देवानामग्न्यादीनामात्मा स्वामी नियन्ता प्रजानां जनयिता उत्पादकः हिरण्यदंष्ट्रा कमनीयदंष्ट्रायुक्तः । हिरण्यविदारकदंष्ट्रायुक्त इति वा वभसो भक्षणशीलः । असुरसंहारकः । सोऽनसूरी असुरिरविपश्चिन्न भवतीति अनसूरी विपश्चिदिति यावत् । तन्माहात्म्यमाह अस्य नृसिंहस्य परमात्मनो महिमानं माहात्म्यमाहुर्विद्वांसः । यत्स्वयमन्यैरनाद्यमानः । अनन्नं वागादिकं नाशयति एवम्भूतः परमात्मैव सम्वर्गः । अनेनैवं प्रकारेण परमात्मानमुपास्महे । अस्मै परमात्मनोऽभिज्ञाय ब्रह्मचारिणे भिक्षां दत्तेत्यन्यान् प्रत्याह कापेयः ॥ ७ ॥

**तस्मा उ ह ददुस्ते वा एते पञ्चान्ये पञ्चान्ये दशसन्तस्तत्कृतं तस्मात्सर्वासु दिक्ष्वन्नमेव दशकृतं सैषा विराडन्नादी तयेदं सर्वं दृष्टं सर्वमस्येदं दृष्टं भवत्यन्नादो भवति य एवं वेद य एवं वेद ॥८॥**

इति चतुर्थोध्यायस्य तृतीयः खण्डः ॥ ३ ॥

एवमुक्ताः केचित् परिवेषिकाः तस्मै तदैव भिक्षां ददुः ॥ सम्वर्गविद्याया प्रकृताया आख्यायिकाद्वारादेवनियन्तृत्वजगज्जनयितृत्वसर्वसंहर्तृत्वादिगुणजातमुपदिश्य सम्प्रति तस्या विद्याया महत्वप्रदर्शनाय तत्सम्बन्धिनो ये पदार्था अधिदैवतत्वेनोक्ता अग्न्यादयः चत्वारआध्यात्मत्वेनोपदिष्टा वागादयश्चत्वारःतत्सम्बन्धिनौ वायुप्राणौ च सङ्कलनेन दशसङ्ख्याकाः सन्ति तेषां कृतायत्वेन विरटात्वेनान्नादित्वेन च स्तुतिं कुर्वन्नाह। ते वा एत इति । ते वा एते अध्यात्माधिदेवभेदेनोक्ताअग्न्यादित्यचन्द्रजलरूपाः वायुना सह पञ्च वाक्चक्षुश्श्रोत्रमनोरूपाः प्राणेन सह पञ्चान्ये दश सन्तः पूर्णाः सन्तो यतः, तत् तस्मात्कृतमुच्यते। दशसङ्ख्यासम्बन्धात् तेषां सङ्ख्येयेतिकृतायोपलक्षितं द्यूतं कृतमित्युच्यते । तत्र दशसङ्ख्यावत्त्वस्य वक्ष्यमाणत्वादिति द्रष्टव्यम्। एकस्तावदयो द्यूते चतुरङ्को दृश्यते। तद्वदग्न्यादयो वागादयश्च ग्रस्यमानाश्चत्वारो भवन्ति, यथा च द्यूते त्रेतानामकोऽयस्त्र्यङ्को गृह्यते, तथाऽग्न्यादयो वागादयश्चैकैकन्यूनास्त्रयः । तथाच तत्र द्वापरनामा द्व्यङ्को जायते, तद्वद्वागादिष्वग्न्यादिषु च द्वौ द्वौ वर्जयित्वा द्वौ द्वौ भवतः। तथाच तत्र कलिसंज्ञायो भवत्येकाङ्को योऽग्न्यादीनां ग्रसिता वायुर्वागादीनां ग्रसिता प्राणश्चैकस्तेभ्यो ग्रसमानेभ्योऽन्य इत्येवं ग्रसितृत्वेन ग्रस्यमानत्वेन दश सन्तस्ते पूर्वोक्तं कृतं भवतीत्यभिसन्धिः। द्यूतस्य सर्वान्नातृत्व प्रसिद्ध्या दशसङ्ख्यावतां कृतत्वसम्पादनेनातृत्वं सम्पादितम्। इदानीं दशसङ्ख्यावत्त्वेनैव विराटत्वसम्पादनेन तेषामन्नत्वं सम्पादयति। तस्मादिति । तस्माद्धेतोः सम्वर्गविद्योपास्यं दशत्वसङ्ख्यायुक्ततया कृताग्ररूपं सत् दशसु दिक्षु विद्यमानमन्नमेव भवति "दशाक्षरा विराडन्नं विराडिति श्रुतेः। सैषाविरडन्नादीति विराट्छन्दसो दशाक्षरत्वं प्रसिद्धं तस्यां विराजि श्रुत्याऽन्नत्वं निर्दिष्टम् । तथाच यथोक्तेष्वग्न्यादिषु वागादिषु च समुदितेषु सङ्ख्यासामान्याद्विराटत्वं सम्पाद्यान्नत्वसम्पादनं सुशकमतोऽन्नमेव दशसङ्ख्येयत्वात्तत एव दशकृतं कृतेऽन्तर्भावाच्चतुरायत्वेनोक्तं भवति । तेन विराट्त्वेनान्नत्व

कृतत्वेनात्तृत्वञ्चेति सम्पत्तिद्वयमग्न्यादौ दर्शितम् । एवञ्च सम्वर्ग-सम्बन्धिपदार्थेषु महत्त्वप्रदर्शनेन सम्वर्गविद्या स्तुता भवति। सम्वर्ग-विद्यायाः फलं वक्तुं तदुपासकस्य स्वरूपं सङ्गिरते। तयेदमिति। तया विराडुपासितया, इदं सर्वं दशदिग्वर्ति पदार्थजातं दशावत्सङ्ख्यासामा-न्याद् दृष्टं भवति, उपासितं भवतीत्यर्थः। एतद्विद्योपासकस्य तदनुरूपं फलं दर्शयति । सर्वमिति । योऽधिकारी उक्तप्रकारेण परमात्मान-मुपास्ते तेनोपासकेनेदं स्वयोग्यं सर्वं दृष्टं भवति । सर्वज्ञब्रह्मणा-न्नानुभवश्च भवतीत्यर्थः । सोऽन्नश्च भवति । द्विर्वचनं विद्यासमा-प्त्यर्थम् ॥ ८ ॥

इति चतुर्थाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

एतत् खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते । समन्व-याध्याये जानश्रुतिं शूद्रेत्यामन्त्र्य रैक्को ब्रह्मविद्यामुपदिदेशेति सम्वर्ग-विद्यायां श्रवणात् शूद्रस्याप्यधिकारः सम्भाव्यते तस्याप्यर्थित्वादिसम्भ-वात् । तस्य ब्रह्मस्वरूपादिविज्ञानञ्चेतिहासादिश्रवणेन भविष्यति । तस्मा "च्छूद्रो यज्ञे नावक्लृप्त" इति निषेधस्तु तस्याग्निसाध्ययज्ञादिक-र्मानधिकारमात्रविषयो नतु विद्यानधिकारे हेतुः। विद्याया मनोवृत्ति-साध्यत्वात् विदुरादिषु सुलभादिषु स्त्रीषु च ब्रह्मविद्यादर्शनाच्चेति पूर्व-पक्षे प्राप्ते उच्यते।

"शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि"। ब्र० सू०।१।३।३४।।

न खलु शूद्रो ब्रह्मविद्यायामधिक्रियते । ब्रह्मस्वरूपतदुपासनो-पायज्ञानाभावेनासमर्थत्वात् । ब्रह्मोपासनस्य मनोमात्रनिर्वर्त्यत्वेऽपि ब्रह्मस्वरूपादिज्ञानस्योपनयनपूर्वकवेदाध्ययनजन्यत्वात् शूद्रस्योपनयनविध्य विषयत्वात्सामर्थ्याभावेऽर्थित्वस्याकिञ्चित्करत्वात् । कर्मविधेरिवोपासन-विधीनामपि त्रैवर्णिकविषयत्वात् । विदुरधर्मव्याधादीनान्तु ब्रह्मनिष्ठा न पुराणादिना, किन्तु जन्मान्तरवासनानुवृत्त्या । शूद्रेत्यामन्त्रणमपि

न शूद्राणां विद्याधिकारे लिङ्गम् । इह शूद्रशब्दस्य रूढ्या जातिवाचित्वाभावात् । शुक् सञ्जातेति सूच्यते अतोऽशूद्रेऽपि शूद्रइति सम्बोधनं स्वस्य सर्वज्ञत्वज्ञापनार्थम् । विद्योपदेशायोग्यत्वख्यापनार्थञ्च शोक एवास्य रैक्वेण सूचितो न जातियोग इति सूत्रार्थः ॥

क्षत्रियत्वावगतिश्चोत्तरत्र चैत्ररथेन लिङ्गात् । ब्र० सू० ।१।३।३५।।

जानश्रुतेः क्षत्रियत्वावगमादपि तद्विषयकशूद्रशब्दो यौगिकः । उपाख्यानोपक्रमे हि 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य' इत्यादिना जानश्रुतेः दानपतित्वं सर्वेभ्यः पक्वान्नदायित्वञ्चोक्तम् । मध्ये 'च स ह सञ्जिहान एव क्षत्तारमुवाचेति' क्षतृप्रेषणम् । 'इयं जाया अयं ग्राम' इत्यादिवाक्येन तस्य कन्यासहितस्य ग्रामस्य दानञ्चोक्तम् । एतैर्लिङ्गैः जानश्रुतेः क्षत्रियत्वमवगतम् । अस्यामेव सम्वर्गविद्यायामुत्तरत्र चैत्ररथस्य क्षत्रियत्वात् जानश्रुतेरपि क्षत्रियत्वमवगम्यते । उत्तरत्र हि ' अथ ह शौनकञ्च कापेयमभिप्रतारिणञ्च काक्षसेनिं परिविष्यमाणौ ब्रह्मचारी बिभिक्ष' इत्यादौ शौनकस्य ब्राह्मणस्य द्वितीयोऽभिप्रतारी क्षत्रिय इति तत्प्रायपाठात् कापेयसहचारिणश्चैत्ररथस्य क्षत्रित्वञ्चावगम्यते । एतेन वै चैत्ररथं कापेया अयाजयन्निति तस्माच्चैत्ररथो नामकः क्षत्रपतिरजायत" इत्यन्यत्र श्रवणात् । एवञ्चास्यां ब्रह्मविद्यायां ब्राह्मणक्षत्रिययोरेवान्वयदर्शनाद्रैकादन्यो जानश्रुतिरपि क्षत्रिय एव न चतुर्थवर्ण इत्यर्थः ॥

"संस्कारपरामर्शात्तदभावाभिलापाश्च" । ब्र० सू० ।१।३।३६।।

विद्याप्रदेषु उपदेशेष्वस्य उपनयनसंस्कारपरामर्शात् शूद्रस्य तदभावाभिलापाच्च न शूद्रस्य विद्यायामधिकार इति सूत्रार्थः ॥

"तदभावनिर्धारणे च प्रवृत्तेः" । ब्र० सू० ।१।३।३७ ॥

नाहमेतद्वेद भो यद्गोत्रोऽहमस्मीत्यादिना जाबालेनोक्ते सति नैतदब्राह्मणो विवेक्तुमर्हतीति जाबाले शूद्रत्वाभावनिर्धारणस्य निर्णये सति तमुपनेतुमनुशासितुञ्च गोतमस्य प्रवृत्तेश्च नाधिकारः शूद्रस्य ॥३५॥

“श्रवणाध्ययनार्थप्रतिषेधात्” ब्र०सू० । १ । ३ । ३८ ॥

‘स्मृतेश्च’ । ब्र० सू० । १ । ३ । ३९ ॥

शूद्रस्य वेदवाक्यश्रवणतदध्ययनतदर्थविचारज्ञानानुष्ठानानि पद्यु वा एतत् श्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यमिति, शूद्रसमीपे अध्ययनप्रतिषेधेन गौतमस्मृतौ, अथ हास्य वेदमुपशृण्वतः त्रपुजतुभ्यां श्रोत्रप्रतिपूरणमुदाहरणे जिह्वोच्छेदो धारणे शरीरभेद इति शूद्रस्य वेदश्रवणादिषु दण्डविधानेन चार्थात् प्रतिषिध्यन्ते । यस्य समीपेऽपि नाध्येतव्यं वेदवाक्यं, यस्य तच्छ्रवणे महान् दण्डः स तत्कथं शृणुयात् । अशृण्वतः कुतोऽध्ययनमनुष्ठानं वा । तस्मान्न शूद्रस्य विद्याधिकार इति सिद्धम्, इति स्थितम् । प्रकृतमनुसरामः ॥

**सत्यकामो ह जाबालो जबालां मातरमामन्त्रयांचक्रे ब्रह्मचर्य्यं भवति विवत्स्यामि किं गोत्रोन्वहमस्मीति ॥ १ ॥**

**सा हैनमुवाच नाहमेतद्वेद तात यद्गोत्रस्त्वमसि बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जबाला तु नामाऽहमस्मि सत्यकामो नाम त्वमसि स सत्यकाम एव जाबालो ब्रुवीथा इति ॥ २ ॥**

**स ह हारिद्रुमतगौतममेत्योवाच ब्रह्मचर्यं भगवति वत्स्याम्युपेयां भगवन्तमिति ॥ ३ ॥**

षोडशकलांब्रह्मविद्यां वक्तुमाख्यायिकामाह । सत्यकाम इति । सत्यकामो नामतो जाबालो जबालपुत्रो जबालाख्यस्वमातरमामन्त्रयांचक्रे उवाच ह । हे भवति । अहं ब्रह्मचर्य्यं वेदाध्ययनमुद्दिश्य विदेशं गत्वा वत्स्याम्याचार्यकुले । किन्ततः ममाधुनापि नोपनयनम् । ते च गोत्रानिर्णयेनोपनयनं कुर्युरतोहं किंगोत्रोऽस्मीति नु वितर्के ॥ १ ॥

एवं पृष्ठा सा हैनं स्वपुत्रमुवाच—हे तात त्वं यद्गोत्रोऽसि एतन्नाहं वेद । कस्मान्न वेत्थेत्यत आह । बह्विति । यतोऽहं बहु यथेष्टं चरन्ती परिचारिणी दासी यौवने त्वामलभे । अतः साहमेतन्न वेद यद्गोत्रः

त्वमसीति। जवाला तु नामाहमस्मि। सत्यकामो नाम त्वमसि। स त्वं सत्यकामो जावालोऽस्मीत्येवाचार्य्याय ब्रुवीथा इति ॥ २ ॥

स सत्यकामो हारिद्रुमतं हरिद्रुमतोऽपत्यं गौतमं गोत्रतः एत्योवाच। भगवति पूजार्हे त्वयि ब्रह्मचर्य्यमुद्दिश्य वत्स्यामीतिभावेन भगवन्तमुपेयामिति ॥ ३ ॥

**तं होवाच किं गोत्रो नु सोम्यासीति स होवाच नाहमेतद्वेद भो यद्गोत्रोऽहमस्म्यपृच्छं मातरं सा मा प्रत्यब्रवीद्बह्वहं चरन्ती परिचारिणी यौवने त्वामलभे साहमेतन्न वेद यद्गोत्रस्त्वमसि जवालातु नामाहमस्मि सत्यकामो नामत्वमसीति सोऽहं सत्यकामो जाबालोऽस्मि भो इति ॥४॥**

तं होवाच गौतमः हे सोम्य त्वं किंगोत्रोऽसि ? नु वितर्के, नाधुनापि तवोपनयनसंस्कारः। तदभावे नाध्यापनम्। गोत्रानिर्णये ब्राह्मण्यानिर्णयान्नोपनयनसंस्कार इति भावः। एवमुक्तः सत्यकाम उवाच। अहं यद्गोत्रोऽस्मि नाहमेतद्वेद पिता तु नास्त्येव। अपृच्छं मातरम्। सा मा मां प्रत्यब्रवीत्। मात्रोक्तमेवाह। नेति। उक्तार्थमेतत् ॥ ४ ॥

**तं होवाच नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याऽऽहरोप त्वा नेष्ये न सत्यादगा इति तमुपनीय कृशानामबलानां चतुःशता गा निराकृत्योवाचेमाः सोम्यानुसंव्रजेति ता अभिप्रस्थापयन्नुवाच नासहस्रेणाऽऽवर्त्तयेति स ह वर्षगणं प्रोवास ता यदा सहस्रं सम्पेदुः ॥ ५ ॥**

इति चतुर्थाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

———

एवं सत्यवचनेन सत्यकामस्यार्जवं ज्ञात्वा गौतमस्तं होवाच एतदार्जवसंयुक्तवचनमब्राह्मणस्त्रैवर्णिकेतरः सर्वथा वक्तुं नार्हति। आर्जवस्य ब्राह्मणलक्षणत्वात्। त्वन्तु सत्याद् ब्राह्मणधर्मभूतात् नगाः नापेतवानसि अतस्त्वं ब्राह्मण एव। अतोऽनुपनीतं त्वामुपनेष्ये।

तदर्थं समिधमाहरेतियोजना । तमुपनीय कृशानामबलानां केषाञ्चिद्-ब्राह्मणानां चतुःशतं गा निराकृत्य गोष्ठान्निष्काष्योवाच षष्ठी, द्वितीयार्थे । कृशा अबलाः चतुश्शतं स्वकीयगा इत्यर्थः । हे सोम्येमा अनुसंव्रजेति गा अरण्यं प्रत्यभिस्थापयन्नुवाच गौतमः । आसहस्रेणासम्पूर्णसहस्रेण गोयूथेन सह नावर्त्तय न प्रत्यागच्छ । किन्तु सम्पूर्णसहस्रेण सह प्रत्यागच्छेति । स एवमुक्तस्ता गा तृणोदकबहुलं द्वन्द्वरहितमरण्यं प्रवेश्य ताश्चतुसंख्याका गा यदा यावता वर्षगणेन सहस्रं सम्पेदुः तावन्तं वर्षगणं तत्रैव प्रोवास ॥५॥

इति चतुर्थाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

**अथ हैनमृषभोऽभ्युवाद सत्यकाम इति भगव इति ह प्रतिशुश्राव प्राप्ताः सोम्य सहस्रं स्म प्रापय न आचार्य्यकुलम् ॥ १॥**

**ब्रह्मणश्च ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राची दिक्कला प्रतीचीदिक्कला दक्षिणा दिक्कलोदीची दिक्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणः प्रकाशवान्नाम ॥२॥**

**स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते प्रकाशवानस्मिँल्लोके भवति प्रकाशवतो हि लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणः प्रकाशवानित्युपास्ते ॥ ३ ॥**

अथ गोसहस्रसम्पत्त्यनन्तरमेनं श्रद्धातपोभ्यां सिद्धं सत्यकामं ऋषभो देवताविशेषस्तस्मै तुष्टः स्वयमेवागत्याभ्युवाद । सत्यकाम ३ इति दूरादाह्वाने चेतिप्लुतिः । भगव इति ह प्रतिशुश्राव । प्रत्युत्तरमदात् हे सोम्य वयं सहस्रं प्राप्ताःस्मः पूर्णा तव प्रतिज्ञा । अतो नोऽस्मान् आचार्य्यकुलं प्रापय ॥ १ ॥

तेऽहं ब्रह्मणः पादं ब्रवाणीत्येवमुक्तेन सत्यकामेन ब्रवीत्वित्युक्तः तस्मै होवाच प्राची दिक्कला ब्रह्मणः पादस्य चतुर्थो भागः तथा

प्रतीची दिक्कला दक्षिणादिक्कलोदीची दिक्कला। हे सोम्य एष ब्रह्मणश्चतुष्कलः चतस्रः कला अवयवा यस्य स तथोक्तः ब्रह्मणः प्रकाशवान्नाम ॥ २ ॥

योऽधिकारी एवं चतुष्कलं ब्रह्मणः पादमेवं प्रकाशवानित्युपास्ते स लोके प्रकाशवान् भवति । न केवलमेतावन्मात्रं किन्तु देवलोकावाप्तिरपीत्याह । प्रकाशवत इति । प्रकाशवतो लोकान् मृतस्सञ्जयति प्राप्नोति ॥ ३ ॥

इति चतुर्थाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

अग्निष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयाञ्चकार ता यत्राभिसायं वभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तमग्निरभ्युवाद सत्यकाम २ इति भगव इति ह प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच पृथिवी कलाऽन्तरिक्षं कला द्यौः कला समुद्रः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ॥ ३ ॥

स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्तेऽनन्तवानस्मिँल्लोके भवत्यनन्तवतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणोऽनन्तवानित्युपास्ते ॥ ४ ॥

इति चतुर्थाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

स ऋषभः स्वयमेकं ब्रह्मणःपादमुपदिश्य ते तवाग्निर्देवतारूपो ब्रह्मण एकं पादं वक्तेत्युक्त्वा जगाम । सत्यकामो ह श्वोभूते परेद्युः नित्य कर्म कृत्वा गा अभिप्रस्थापयाञ्चकाराचार्य्यकुलं प्रति । ताश्शनैश्चरन्त्य आचार्य्यकुलाभिमुखाः प्रस्थिताः । यत्र यस्मिन् देशे सायं वभूवुः

प्राप्तास्तत्र गा उपरुध्य अग्निमुपसमाधाय समधमग्नावाधायाग्नेः पश्चात् स्वयं प्राङ्मुखः सन् अग्निमुपोपविवेश ऋषभवचो ध्यायन् ॥ १ ॥

तमग्निः प्रत्यक्ष सन्नभ्युवाद सत्यकाम ३ इति । तमसौ सत्यकामो भगव इति प्रतिश्रावितवान् ॥ २ ॥

हे सोम्य ते तव ब्रह्मणः पादं चतुष्कलोपेतं ब्रवाणीति । ब्रवीत्वित्युक्तस्तस्मै होवाच पृथिव्यन्तरिक्षद्युसमुद्रकलारूपो ब्रह्मणः पादः । एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम । यथोक्तपादे गुणविशेषं निर्दिशति । एष वै सोम्य चतुष्कलः पादो ब्रह्मणोऽनन्तवान्नाम ३

स य एतमेवमितिपूर्ववद्व्याख्येयम् ॥ ४ ॥

इति चतुर्थाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

**हंसस्ते पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयां चकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङु पोपविवेश ॥ १॥**

**तं हंस उपनिपत्याभ्युवाद सत्यकाम इति भगव इति ह प्रतिशुश्राव ॥ २ ॥**

**ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवन्निति तस्मै होवाचाग्निः कला सूर्यः कला चन्द्रः कला विद्युत्कलैष वै सोम्य चतुष्कलः पादो ब्रह्मणो ज्योतिष्मान्नाम ॥ ३॥**

**स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ज्योतिष्मानस्मिँल्लोके भवति ज्योतिष्मतो ह लोकाञ्जयति य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मणो ज्योतिष्मानित्युपास्ते ॥ ४ ॥**

इति चतुर्थाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

व्याख्या—। १ । २ । ३ । ४ ॥

मद्गुष्टे पादं वक्तेति स ह श्वोभूते गा अभिप्रस्थापयांचकार ता यत्राभिसायं बभूवुस्तत्राग्निमुपसमाधाय गा उपरुध्य समिधमाधाय पश्चादग्नेः प्राङुपोपविवेश ॥ १ ॥

तं मद्गुरुपनिपत्याभ्युवाद सत्यकाम ३ इति स भगव इति प्रतिशुश्राव ॥ २ ॥

ब्रह्मणः सोम्य ते पादं ब्रवाणीति ब्रवीतु मे भगवानिति तस्मै होवाच प्राणः कला चक्षुः कला श्रोत्रं कला मनः कलैष वै सोम्य चतुष्कलः पादो ब्रह्मण आयतनवान्नाम ॥३॥

स य एतमेवं विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्त आयतनवानस्मिँल्लोकेभवत्यायतनवतो ह लोकाञ्जयति य एतमेव विद्वांश्चतुष्कलं पादं ब्रह्मण आयतनवानित्युपास्ते ॥ ४ ॥

इति चतुर्थाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

हंसोऽपि मद्गुः । उदकचरः । जलसम्बन्धाद्वरुणः ॥ स ह श्वोभूत इत्यादिपूर्ववत् ॥ १-२-३-४ ॥

इति चतुर्थाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

प्राप हाऽऽचार्य्यकुलं तमाचार्योऽभ्युवाद सत्यकाम ३ इति भगवः इति ह प्रतिशुश्राव ॥ १ ॥

ब्रह्मविदिव वै सोम्य भासि को नु त्वाऽनुशशासेत्यन्ये मनुष्येभ्य इति ह प्रतिजज्ञे भगवांस्त्वेव मे कामं ब्रूयात् ॥२॥

श्रुतं ह्येव मे भगवद्दृशेभ्य आचार्य्याद्धयैव विद्या विदिता साधिष्ठं प्रापयति तस्मै हैतदेवोवाचात्र ह न किंचन वीयायेति वीयायेति ॥ ३ ॥

इति चतुर्थाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

स एवं विद्वान् सन् प्राप हाचार्यकुलं संप्राप्तः । सत्यकाममाचार्योऽभ्युवाद । सत्यकाम३ इति भगव इति प्रतिश्रावितवान्सत्यकामः ॥ १ ॥

हे सोम्य त्वं ब्रह्मविदिव स्पष्टं भासि । नु वितर्के । को नु त्वानुशशास । देवो वा मनुष्यो वेत्युक्त इतरे मनुष्येभ्योऽन्ये देवा मामनुशशासुरिति ह प्रतिजज्ञे कोन्यो भगवच्छिष्यं मां मनुष्यः सन्ननुशासितुमुत्सहत इत्यभिप्रायः ॥ २ ॥

यद्यपि देवेभ्यःश्रुतं तथापि भवानेव मे मम कामं शुभार्थं ब्रूयात् ब्रवीतु । कुतः ? हि यस्मादाचार्यादेव विदिता विद्या साधिष्ठं साधुतमत्वं प्रापयति प्राप्नोतीति भगवद्दृशेभ्यः भगवत्समेभ्यः श्रुतं मया त्वाचार्यतया भगवानेव स्वीकृतो न ते देवाः किन्तु कृपया स्वयमेवागत्योपदिदिशुः एवमुक्ते तस्मै सत्यकामायैतदेव वक्ष्यमाणमुवाच । अत्र देवेभ्यः श्रवणेन किञ्चन वीयाय नापगतं न काचिद्धानिरभूदित्यर्थः ॥३॥

इति चतुर्थाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

**उपकोसलो ह वै कामलायनः सत्यकामे जाबाले ब्रह्मचर्यमुवास तस्याद्वादश वर्षाण्यग्नीन् परिचचार स ह स्मान्यानन्तेवासिनः समावर्तयंस्तं ह स्मैव न समावर्त्तयति ॥१॥**

**तं जायोवाच तप्तो ब्रह्मचारी कुशलमग्नीन्परिचचारीन्मा त्वाग्नयः परिप्रवोचं प्रब्रूह्यस्मा इति तस्मै हाप्रोच्यैव प्रवासांचक्रे ॥२॥**

**स ह व्याधिनाऽनशितुं दध्रे तमाचार्यजायोवाच ब्रह्मचारिन्नशान किन्नु नाश्नासीति स होवाच बहव इमेऽस्मिन् पुरुषे कामा नानात्यया व्याधिभिः प्रतिपूर्णोऽस्मि नाशिष्यामीति ॥३॥**

अत्र पुनराख्यायिकापुरःसरं पराब्रह्मविद्यामार्गञ्च निरूपयति । उपकोसल इत्यादिना खण्डषट्केन । उपकोसलो नामतः । कमलायनस्यापत्यं कामलायनः। सत्यकामो जाबालो पूर्वोक्तो ब्रह्मचर्य्यमुद्दिश्योवास स तत्र गुरुकुले तस्याचार्य्यस्याग्नीन् द्वादशवर्षाणि परिचचार स ह स्माचार्योऽन्यानन्तेवासिनः छात्रान् स्वाध्यायं ग्राहयित्वा सम्यगावर्तयँस्तमुपकोसलमेकमेव न समावर्त्तयति स्महेत्याश्चर्या महतां चित्तवृत्तिरित्याह ॥१॥

तमाचार्य्यमाचार्यजायोवाच। ब्रह्मचारी तप्तश्चीर्णतपा जातः। कथं कुशलं यथा तथाग्नीन् परिचचारीत्यपर्यचरत् । त्वमिमं नोपदिष्टवानेव त्वा तवाग्नयोऽप्यनेन सेविताः सन्तो मापरिप्रावोचन् । इतः परं वाप्रब्रूह्यस्मा इति एवंजाययोक्तोऽपि सत्यकामस्तस्मा उपकोसलायाप्रोच्यैवानुक्त्वैव प्रवासांचक्रे प्रोषितवान् ॥२॥

स होपकोसलो व्याधिना मानसेन दुःखेनामनशितुनशनं कर्त्तुं दध्रे मनः । तमनशनमनस्कमाचार्य्यजायोवाच । हेब्रह्मचारिन् । अशान भुङ्क्ष्व । किन्तु कस्मात्कारणान्नाश्नासीति । एवमुक्तः स, होपकोसलो होवाच । अस्मिन् पुरुषे नानात्ययाः नानागतयः कामाः वहवोऽतकामिताऽप्राप्तिनिमित्तव्याधिभिः प्रतिपूर्णोऽस्मि । अतो नाशिष्यामीत्युक्त्वा ब्रह्मचारिणि तूष्णींभूते ॥३॥

**अथहाग्नयः समूदिरे तप्तो ब्रह्मचारी कुशलं नः पर्य्यचचारीद्धन्तास्मै प्रब्रवामेति तस्मै होचुः ४। प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥४॥ सहोवाच विजानाम्यहं यत्प्राणोब्रह्म कञ्चतु खञ्च न विजानामी ति ते होचुर्यद्वावकं तदेव खं यदेव खं तदेवकमिति प्राणञ्चाहास्मै तदाकाशं चोचुः ॥५॥**

इति चतुर्थाध्यायस्य दशमः खण्डः ॥

---

अथ हाग्नयः कारुण्याविष्टास्सन्तस्त्रयोऽपि समूदिरे परस्पर—मुचुः। तप्तो ब्रह्मचारी यतः कुशलं यथा भवति तथानोऽस्मान् परिचचारीत् हन्तेदानीमस्मै ब्रह्मचारिणे वयं सर्वे प्रब्रावाम ब्रह्मविद्यामिति। एवं संप्रधार्य तस्मै होचुरुक्तवन्तः प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ॥ ४ ॥

एवमुक्तः उपकोसल उवाच--यदुक्तं भवद्भिः प्राणो ब्रह्मेति तदहं विजानामि। निखिलं जगत् प्राणयितृत्वयोगेन प्राणयितृत्वस्य ब्रह्मण उपपन्नत्वात् प्राणोब्रह्मेतियुक्तं विजानामीत्यर्थः ॥ कखयोर्भिन्नार्थशङ्कया कञ्च खञ्च तु विशेषाकारेण न विजानामीति। तदभिप्रायज्ञा अग्नयः कं खमित्येतयोरन्योन्यविशेष्यविशेषणभावोऽभिप्रेत इति स्वाभिप्रायेण ते होचुः ॥ यद्वाव कं तदेव खमिति। यदेव वयं कमवोचाम तदेव खमाकाशम्। खस्य विशेषणत्वं कस्य च विशेष्यत्वमित्यङ्गीकारेऽपरिच्छिन्नसुखं ब्रह्मेत्यर्थो लभ्यते। तथाच सुखस्य लौकिकसुखाद्व्यावृत्यर्थं यदेव खमिति विशेषणमाकाशस्य च लौकिकाद्भूताकाशाद्व्यावृत्यर्थमाह। यदेव खं तदेव कमिति। ब्रह्मचारिणो मोहापनोदाय कंखंशब्दयोः परस्परविशेषणविशेष्यभावनिर्देशो युक्त एव यद्वावकमित्यादिः ॥ तदेतदग्निभिरुक्तं वाक्यार्थमस्सद्बोधाय श्रुति राह। प्राणं चास्मै ब्रह्मचारिणे तेऽग्नयस्तदा सम्भूयोपदेशकाले जगत्प्राणयितृत्वेन प्राणत्वावच्छिन्नं यद्ब्रह्म तदेवापरिच्छिन्नसुखरूपञ्चैतद्ब्रह्मेत्यग्नय उक्तवन्त इत्यर्थः ॥ १० ॥

इति चतुर्थाध्यायस्य दशमः खण्डः ॥ १० ॥

---

**अथ हैनं गार्हपत्योऽनुशशास पृथिव्यग्निरन्नमादित्य इति य एष आदित्ये पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥**

**स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप**

**वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥**

इति चतुर्थाध्यायस्यैकादशः खण्डः ॥११॥

---

प्रधानविद्यामुपदिश्याङ्गविद्याविधानायोपक्रमते अथेति । अथ एवमग्निभिः सम्भूयोक्तविद्यानन्तर्यमथशब्दार्थः ॥ एनमुपकोसलं गार्हपत्योऽग्निः स्वां विद्यां वक्ष्यमाणामुपदिदेश । किमिति । पृथिव्यग्निरन्नमादित्य इति एताश्चतस्रो मे तनव इत्यर्थः । एवं व्याप्तात्मविद्यामुक्त्वा स्वान्तर्यामिविद्यामाह–य इति । आदित्ये एषः पुरुषः पूर्णषड्गुणो भगवान् दृश्यते दिव्यदृष्टया सोऽहमहेयत्वादहंनामा गार्हपत्योऽस्मि । अग्न्यादित्यरूपयोः पक्तृत्वेन प्रकाशत्वेन च धर्मेण सम्बन्धात्तादात्म्यं पृथिव्यन्नयोस्तु भोज्यत्वेनाग्न्यादित्याभ्यां सम्बन्धः । अमुमर्थं प्रकाशयितुं स एवाहमस्मीति परावृत्त्या पुनर्वचनम् ॥ १ ॥

गार्हपत्यविषयविद्याफलं दर्शयति । स य इति । योऽधिकारी एवमुक्तप्रकारेणोपास्ते स पापकृत्यां पापं कर्म अपहते विनाशयति । लोकीभवति तद्विरोधिनि पापे निवृत्ते ब्रह्मलोकमाप्नोति । ज्योगुज्ज्वलं जीवति । अस्योपासकस्यावरपुरुषाः भृत्याः न क्षीयन्ते । भृत्यवानेव भवति । भृत्याशासनमेवाह । उपेति । य एतमेवं विद्वानुपास्ते तं वयं सर्वे अस्मिंश्चामुस्मिंश्च लोके उपभुञ्जामः । उपजीवाम इति ॥२॥

इति चतुर्थाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

**अथ हैनमन्वाहार्यपचनोऽनुशशासाऽऽपो दिशो नक्षत्राणि चन्द्रमा इति य एष चन्द्रमसि पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥ १ ॥ स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावर पुरुषाः**

क्षीयन्ते । उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥ २ ॥

इति चतुर्थाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

अथ गार्हपत्योपदेशानन्तर्यमथशब्दार्थः । एनमुपकोसलमन्वाहार्यपचनो दक्षिणाग्निः । अनुशशास इत्यादिकं पूर्ववद्व्याख्येयम् ॥ प्रसिद्धं हि दर्शपौर्णमासयोरन्वाहार्यपचने हविःश्रवणम् । ते चन्द्रं प्राप्यान्नं भवतीत्यादौ चन्द्रमसि प्रसिद्धोऽन्नसम्बन्धः तस्मात्तयोस्तादात्म्यम् ज्योतिष्ट्वेन । दक्षिणदिक्सम्बन्धित्वेनान्वाहार्यपचनचन्द्रमसोरैक्यमिति यावत् ॥ १–२

इति चतुर्थाध्यायस्य द्वादशः खण्डः ॥ १२ ॥



अथ हैनमाहवनीयोऽनुशशास प्राण आकाशो द्यौर्विद्युदिति य एष विद्युति पुरुषो दृश्यते सोऽहमस्मि स एवाहमस्मीति ॥१॥

स य एतमेवं विद्वानुपास्तेऽपहते पापकृत्यां लोकीभवति सर्वमायुरेति ज्योग्जीवति नास्यावरपुरुषाः क्षीयन्त उप वयं तं भुञ्जामोऽस्मिंश्च लोकेऽमुष्मिंश्च य एतमेवं विद्वानुपास्ते ॥२॥

इति चतुर्थाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥



विद्युदाहवनीययोः ज्योतिष्ट्वेन साम्यम् तयोः दिवाकाशाभ्यां भोग्यत्वेनैव सम्बन्धः । होमद्वारकं निष्पन्नापूर्वं द्युलोकफलं तस्मात् । विद्युत आकाशाश्रयत्वं प्रसिद्धम् । अन्यत्सर्वं प्रागुक्तरीत्या व्याख्येयम् ॥ १–२ ॥

इति चतुर्थाध्यायस्य त्रयोदशः खण्डः ॥१३॥



ते होचुरुपसकोसलैषा सोम्य तेऽस्मद्विद्याऽऽत्मविद्या

आचार्य्यस्तु ते गतिं वक्तेत्याजगाम हास्याऽऽचार्य्यस्तमाचार्योऽभ्युवादोपकोसल ३ इति ॥ १ ॥

भगव इति इतिहप्रतिशुश्राव ब्रह्मविद इव सोम्य ते मुखं भाति को नु त्वाऽनुशशासेति को नु मानुशिष्याद्भो इतीहावेव निन्हुत इमे नूनमीदृशा अन्यादृशा इतीहाग्नीनभ्यूदे किन्नु सोम्य किल तेऽवोचन्निति ॥ २ ॥

इदमिति ह प्रतिजज्ञे लोकान्वाव किल सोम्य तेऽवोचन्नहन्तु ते तद्वक्ष्यामि यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवं विदि पापं कर्म न श्लिष्यत इति ब्रवीतु मे भगवानिति तस्मै होवाच ॥ ३ ॥

इति चतुर्थाध्यायस्य चतुर्दशः खण्डः ॥१४॥



ते अग्न्यादयः । एवं सम्भूय प्रत्येकञ्चोपदिश्य होचुः हे सोम्योपकोसल ते तुभ्यमेषास्मद्विद्या परमात्मविद्याचोपदिष्टा । प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेति ब्रह्मस्वरूपमात्रं तदङ्गभूतामग्निविद्यां च उपदेक्ष्यामः । आचार्य्यमुखादुपदिष्टा फलवती विद्या साधिष्ठा भवति । अत आचार्य्य एव ते संयद्वामत्वादिगुणकं ब्रह्माक्षिरूपं तदुपासनास्थानमर्चिरादिकां गतिं वक्तेत्यथावशिष्टं वक्तेत्यर्थः । आजगाम हास्याचार्यः । तमाचार्योऽभ्युवाद उपकोसल ३इति ॥ १ ॥

भगव इति ह प्रतिशुश्रावोपकोसलः । हे सोम्य ते मुखं ब्रह्मविदो मुखमिव सुप्रसन्नं भाति । को नु त्वा त्वामनुशशास । नु वितर्के । देवो वान्यो वेत्युक्त आह । भोमा मां को नु मनुष्योऽसुरो वा नु शिष्यात न कोऽपि । कुतः इह चावचेहावे । इहेति मनुष्यलोकस्थउच्यते । अवेति पातालस्थः । मानुषासुरौ भगवन्तं निन्हुते त्वं न वक्तुं समर्थौ ॥ अतो देवा एव मामनुशशासुरित्यर्थः । के ते देवा इत्यत आह । इम इति । ईदृशाः वर्णतः परिदृश्यमानाग्निवत् ज्वालावर्णाः।

अन्यादृशाः करशिरश्चरणादिमन्तः । इमेऽध्यक्षाः नूनं निश्चयेन मामनुशासुः ॥ वेदपुरुषः स्पष्टं तदुपदेष्टृनाह । इतीति । इत्यनेन प्रकारेण हाचार्य्यसमीपे अग्नीन् स्वात्मोपदेष्टृनभ्यूदे उपकोसलः ॥ एवमुक्त आचार्य्यो हे सोम्य तेऽग्नयः किल किन्ववोचन्नित्युवाच ॥ २ ॥

इदमिति ह प्रतिजज्ञ उपकोसलः । अग्निभिरुक्तमनुक्तवानित्यर्थः एवमुक्तः सत्यकामः ते अग्नयः पृथिव्यादिलोकानेव तवोक्तवन्तो नतु ज्ञातव्यं ब्रह्म कार्त्स्न्येन अहन्तु पद्मपत्रजलाश्लेषतुल्यं ब्रह्म वक्ष्यामि । ब्रवीतु भगवानित्युक्तस्तस्मै होवाच ॥ ३ ॥

इति चतुर्थाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥

---

**य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तद्यद्यप्यस्मिन्सर्पिर्वोदकं धा सिञ्चति वर्त्मनी एव गच्छति ॥ १ ॥**

**एतं संयद्वाम इत्याचक्षते एतं हि सर्वाणि वामान्यभिसंयन्ति सर्वाण्येनं वामान्यभिसंयन्ति य एवं वेद ॥ २ ॥**

**एष उ एव वामनीरेष हि सर्वाणि वामानि नयति सर्वाणि वामानि नयति य एवं वेद ॥ ३ ॥**

य एषोऽक्ष्यन्तःपुरुषो दृश्यते दिव्यदृष्टयैष आत्मा नियन्तेति होवाच एतदमृतं निरतिशयभोग्यम् । अभयं दुःखासंभिन्नमेतद्ब्रह्म निरतिशयं बृहत् सकलगुणपूर्णम् । एतस्मिन् भगवति न किमपि श्लिष्यति । असङ्गोऽसावित्यर्थः । यत्स्थानत्वाच्चक्षुषोऽप्यसङ्गत्वं किं तस्येति भावेन चक्षुषोऽसङ्गत्वमाह । तद्यदीति । यद्यस्मादेवमसङ्गः पुरुषोऽक्षिणि विद्यते तत्तस्मादस्मिंश्चक्षुषि यदि सर्पिर्वोदकं वा कश्चित्सिञ्चति तर्हि वर्त्मनी पक्ष्माण्येव गच्छति न चक्षुः स्पृशतीत्यर्थः ॥१॥

एवं भगवतः स्थानशक्तिमभिधाय तस्य गुणानाह एतमिति । एतं चाक्षुषं पुरुषं भगवन्तं संयद्वाम इत्याचक्षते । संयन्ति सङ्गतानि

वामानि वननीयानि प्रार्थनीयानि यस्मिन्संयद्वामः सर्वकल्याणगुणाश्रयत्वं सत्यसङ्कल्पत्वं वा संयद्वामत्वम् । कुतः ? हि यस्मादेतं सर्वाणि वामानि सौन्दर्याण्यभिसंयन्ति प्रविशन्ति । तथोपासकस्य तदनुरूपं फलमाह । सर्वाणीति ॥ २ ॥

एष एव चाक्षुषः पुरुषो मुख्यतो वामानिरित्युच्यते । कुतः ? यस्मादेव सर्वाणि वामानि सौन्दर्याणि नयति प्रापयति । पूर्ववत्फलमाह सर्वाणीति ॥ ३ ॥

**एष एव उ भामनी रेष हि सर्वेषु लोकेषु भाति सर्वेषु लोकेषु भाति य एवं वेद ॥ ४ ॥**

गुणान्तरमुपासनायोक्त्वा व्युत्पादयति । एष इत्यादिना । एष एव चाक्षुषः । पुरुषः भामनी यस्मात्सर्वेषु लोकेष्वादित्यचन्द्राग्न्यादित्यरूपैर्भाति दीप्यते । " तस्य भासा सर्वमिदं विभाति " इति श्रुतेरतो भामानि नयतीति भामनीः । य एवं वेद सोऽपि सर्वेषु लोकेषु भाति ॥४॥

**अथ यदु चैवास्मिच्छव्यं कुर्वन्ति यदि च नार्चिषमेवाभिसम्भवन्त्यर्चिषोऽहरन्ह आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मास स्तान्मासेभ्यः सम्वत्सरं सम्वत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः ॥ ५ ॥**

**स एनान् ब्रह्म गमयत्येष देवपथो ब्रह्मपथ एतेन प्रतिपद्यमाना इमं मानवमावर्त्तं नावर्त्तन्ते नावर्त्तन्ते ॥ ६ ॥**

इति चतुर्थाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

एवमुपकोशलोपास्यं भगवद्रूपं निरूप्य तद्विद्याफलत्वेन समार्गब्रह्मप्राप्तिञ्चाक्षुषपुरुषवेत्तुर्महिमानञ्च प्रकाशयन्निरूपयति । अथेत्यादिना ।अथेत्यर्थान्तरे । यदु च यद्यपि अस्मिन् ज्ञानिनि मृते शव्यं शवसम्बन्धि कर्म कुर्वन्त्येव तदीयाः यदु च नैव कुर्वन्ति तथापि

ते ज्ञानिनः सर्वथा स्वज्ञानप्रसन्नभगवत्सामर्थ्यात् हृदयाग्रप्रज्वलनप्रकाशितद्वारेण ब्रह्मनाड्या देहादुत्क्रान्ता अर्चिषमर्चिनामकमूर्ध्वलोकं सम्भवन्त्येव प्राप्नुवन्त्येव । अत्राग्निर्ज्योतिरितिद्विधैवार्चिष इत्युक्तमनुसन्धेयम । तत्र कञ्चन कालं स्थित्वा तेन पूजिता, अर्चिषोलोकादतिवाहिकाख्यवायुलोकं प्राप्य ततोऽहरभिमानिदेवतालोकं प्राप्नुवन्ति । अह्नः आपूर्यमाणपक्षं पूर्वपक्षाभिमानिदेवतालोकमापूर्यमाणपक्षाद्गच्छन्यान् षण्मासानुदङ्ङेत्यादित्यस्तान्मासानुत्तरायणाभिमानदेवतालोकं मासेभ्यस्तेभ्यः सम्वत्सराभिमानिलोकं सम्वत्सरात्तडिद्वरुणप्रजापतिप्राप्तिद्वाराऽऽदित्यमादित्याचन्द्रमसं चन्द्रमसो वैश्वानरेन्द्रध्रुवद्वारा विद्युतं प्राप्नोति । ततस्तस्य पुरुषोऽमानवः मानव्यां सृष्टौ भवो मानवो न मानवोऽमानवः एनान् एत्य ब्रह्मलोकं गमयति । ज्ञानिनो देवयानब्रह्मयानाख्यमार्गान्तरोक्तेः कथमेतदित्याह । एष इति । देवपथो ब्रह्मपथ इत्येष एवोच्यते । मार्गान्तरं व्यावर्त्तयति । एष इति । देवैरधिष्ठितः पन्था देवपथः ब्रह्मप्राप्तिहेतुः पन्थाः ब्रह्मपथः । एष एव नान्योऽस्ति एवं ब्रह्मप्राप्तस्य पुनः संसारप्राप्तिरस्ति किं नेत्याह एतेनेति । एतेन खलु मार्गेण परं ब्रह्म प्रतिपद्यमानाः, इमं मानवमावर्तं मानवा यत्र वर्त्तन्ते स मानवावर्त्तः संसारस्तं मानवावर्त्तं नावर्त्तन्त इत्यर्थः ॥ ५ ॥

इति चतुर्थाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

अत्र पञ्चाग्निविद्यायामुपकोशलविद्यायाञ्चार्चिरादिगतेः पाठात् यस्यां विद्यायामर्चिरादिगतिः श्रूयते तन्निष्ठानामेवार्चिरादिगत्या ब्रह्मप्राप्तिर्नान्येषां न चेतद्य इत्थं विदुर्ये चेमेऽरण्ये श्रद्धां तप इत्युपासते, श्रद्धां सत्यमुपासत इति सर्वविद्यासाधारणश्रुतमिति वाच्यम् । तथासत्युपकोशलविद्यायामर्चिरादिगतिश्रुतेर्वैयर्थ्यप्रसङ्ग इति पूर्वपक्षे प्राप्त उच्यते ।

अनियमः सर्वेषामविरोधः शब्दानुमानाभ्याम् ब्र०सू० ।३।३।३१॥

सर्वेषां तन्निष्ठानामर्चिरादिमार्गेणैव गन्तव्यत्वात् तद्विद्यानिष्ठानामेवेति नियमो नास्ति तथा सति । "ये चेमेऽरण्ये श्रद्धां सत्य-

मुपासते । 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायणम्। तत्र प्रयाता गच्छन्ति ब्रह्म ब्रह्मविदो जना।' इति श्रुतिस्मृतिभ्यो विरोधप्रसङ्गः। उपकोशलविद्यायां पुनराम्नानन्तु 'ये'चेमेऽरण्ये श्रद्धां तप इत्युपासत इति पञ्चाग्निविद्यावाक्यप्राप्तसर्वब्रह्मविद्यासाधारणार्चिरादिगतेरपुनरावृत्तिविधानार्थमिति स्थितम्। उपकोसलविद्यायाः परमात्मविद्यात्वं च॥

अन्तर उपपत्तेः ब्र० सू० । १ । २ । १३ ॥

इत्यत्र स्थितम्। तथाहि। "य एषोऽक्षिणि पुरुषो दृश्यते एष आत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेति वाक्यमुदाहृतम्। तत्र 'दृश्यते' इत्यपरोक्षेन निर्दिष्टः प्रतिबिम्बात्मा "य एषोऽक्षिणि पुरुषो दृश्यते" इति प्रसिद्धवन्निर्देशात् प्रत्यगात्मा वा तस्यात्मशब्दवाच्यत्वात् अक्षिणि सन्निहितत्वाच्चेति प्राप्त उच्यते । अक्ष्यधिकरणतयोपदिष्टः पुरुषः परमात्मैव। कुतः ? उपपत्तेः। अमृतत्वात्मत्वाभयत्वादयः गुणा अत्रोपदिष्टास्ते सर्वे ब्रह्मण्येवोपपद्यन्ते । नन्वनन्तब्रह्माण्डेषु व्यापकस्य परमात्मनः कथमल्पस्थानं निर्दिष्टमिति जिज्ञासायामाह ।

स्थानादिव्यपदेशात्। ब्र० सू०। १। २। १४॥

स्यादप्येष दोषो यद्येकमेव स्थानं परमात्मनो निर्दिष्टं स्यात्। सन्ति तस्य बहूनि स्थानानि श्रुतिभिर्निर्दिष्टानि 'पृथिव्यां तिष्ठन्निति, यश्चक्षुषि तिष्ठन्नित्यादिना तेषु चक्षुरपि निर्दिष्टम्। ताभिः श्रुतिभिस्तत्तत्स्थानेषु परमात्मनः स्थितिव्यपदेशात्। स एवाक्ष्याधार इति निश्चीयते। दृश्यत इत्यपरोक्षव्यपदेशो योगिदृष्ट्योपपद्यते।

सुखविशिष्टाभिधानादेव च। ब्र० सू० । १। २। १५॥

प्रकरणादपि परमात्मैव प्रत्येतव्य इत्याह—सुखेति । यच्चापरिच्छिन्नं सुखस्वरूपं कं ब्रह्म खं ब्रह्मेति श्रुतावग्निभिरुपदिष्टं "य एषोऽक्षिणि पुरुषो दृश्यते" इति वाक्ये प्रक्रान्तवाचिना सर्वनाम्नाऽभिधीयते। 'प्राणो ब्रह्म खं ब्रह्म कं ब्रह्मेत्यु'पक्रमवाक्ये कं ब्रह्म सुखविशिष्टं ब्रह्मैव निर्दिष्टमिति सूत्रार्थः॥

ननु "कं ब्रह्म खं ब्रह्म"ति वाक्येनापरिच्छिन्नसुखरूपं

ब्रह्मेति नोपदिश्यते। अपितु मुख्यप्राणे लौकिकसुखे आकाशे च ब्रह्म-दृष्टिर्विधीयते तत्राह ॥

अतएव च तद्ब्रह्म । ब्र० सू० । १ । २ । १६ ॥

उपकोशल उवाच । 'विजानाम्यहं यत् प्राणो ब्रह्म' न विजानाम्यहं कंपदवाच्यं खंपदवाच्यमि,ति प्रश्नान्यथानुपपत्या यद्वाव कं तदेव खं यदेव कं तदेव खमिति प्रतिवचनस्य सङ्गतिभिया चाब्रह्मभूतेषु मुख्यप्राणलौकिकसुखाकाशेषु न ब्रह्मदृष्टिर्विधातुं शक्यते तत्तद्रूपेण किन्तु प्राणो ब्रह्म कं ब्रह्म खं ब्रह्मेत्युपक्रमवाक्ये यदुपक्रान्तं सुखविशिष्टं ब्रह्म तदेवात्राभिधीयते ॥

श्रुतोपनिषत्कगत्यभिधानाच्च । ब्र० सू० । । २ । १७ ॥

श्रुतोपनिषत्कस्याधिगतपरमपुरुषयाथात्म्यानुसन्धेयतया श्रुत्यन्तरप्रतिपाद्यमाना अर्चिरादिका गतिः साक्षिपुरुषविदोऽप्युच्यते तस्मादक्ष्यन्तर्वृत्तिः पुरुषः परमात्मा ॥

अनवस्थितेरसम्भवाच्च नेतरः । ब्र० सू० । १ । २ । १८ ॥

नेतरप्रतिविम्बादीनामक्षिणि नियमेनानवस्थानात् । अमृतत्वादीनां निरुपाधिकानां तेष्वसम्भवात् न ह्यादिरक्षिपुरुषो भवितुमर्हतीति स्थितम् । प्रकृतमनुसरामः ॥

**एष वै यज्ञो योऽयं पवत एष ह यन्निदं सर्वं पुनाति यदेष यन्निदं सर्वं पुनाति तस्मादेष एव यज्ञस्तस्य मनश्च वाक्च वर्तनी ॥ १ ॥**

**तयोरन्यतरां मनसा संस्करोति ब्रह्मा वाचा होताऽध्वर्युरुद्गाताऽन्यतरां स यत्रोपाकृते प्रातरनुवाके पुरा परिधानीयाया ब्रह्मा व्यववदति ॥ २ ॥**

**अन्यतरामेव वर्तनीं संस्करोति हीयतेऽन्यतरा स यथैकपाद्व्रजन्रथो वैकेन चक्रेण वर्त्तमानो रिष्यत्येवमस्य यज्ञो**

रिष्यति यज्ञं रिष्यन्तं यजमानोऽनुरिष्यति स दृष्ट्वा पापीयान् भवति ॥ ३ ॥

उपासनाप्रकरणे उपासकानां फलसिद्ध्यर्थं मार्गोपदेशप्रसङ्गेन यज्ञस्य समाप्तिमानीयानन्तरग्रंथेन मार्गोपदेशादस्ति सङ्गतिः । किञ्चाग्निविद्या प्रकृता यज्ञे च सिद्धेऽग्निसम्बन्धे यदि प्रमादात् ब्रह्मादिऋत्वजां मौनादिनियमभङ्गे प्रायश्चित्तं व्याहृतिहोमरूपं विधातव्यमित्यनन्तरग्रन्थप्रवृत्तिरिति वा 'एष वै यज्ञ इति' योऽयं पवते वायुरेष यज्ञः' । यज्ञस्य क्रियाकलापरूपत्वात् एष वै यज्ञोऽयं पवत इति कथमुक्तमित्याशङ्क्य यज्ञो वाय्वाश्रयो वाय्वात्मक इति श्रौतप्रसिद्धिमवलम्ब्य वायौ यज्ञशब्दं निर्वक्तुं वायुस्वभावं निरूपयति । एष इति । एष वायुर्यन् गच्छन्निदं योग्यं सर्वं पुनाति शुद्धं करोति । ह्वा इति श्रुत्यादिसिद्धिं दर्शयति । तथाहि—'स्वाहा वातेधाः अयं वै यज्ञोऽयं पवत' इति स्वाहाकारमुच्चार्य वाते वायौ धीयते क्षिप्यत इति वातेधा यज्ञ इति श्रुत्यर्थः यो यज्ञः क्रियासमवायी तत्समुदायात्मकः स वायुरेव द्वयोश्चलनात्मकत्वाविशेषात् "वात एव यज्ञस्यारम्भको वातः प्रतिष्ठा" इति श्रुत्या च वायुप्रतिष्ठितत्वात् तदात्मको यज्ञः । नह्यचलतः शुद्धिरस्ति तस्मात्सिद्धं वाय्वात्मकत्वं यज्ञस्य । ननु वायोरस्तु पावनत्वं प्रकृते तस्य क उपयोग इत्यत आह । यदिति । यद्यस्मात् एष यन्निदं सर्वं पुनाति तस्मादेष यज्ञो यज्ञवायोस्तादात्म्यात् यज्ञस्य गन्तृत्वं सम्पादितं ततो यज्ञस्य गन्तुर्मार्गद्वयविशिष्टत्वमाह । तस्य मनश्च वाक् च वर्तनी । प्रवृत्तिसाधनीभूतौ । मनसा हि ध्यायन् वाचमभिव्याहरन् प्राणापानाभ्यामुच्छ्वासनिश्वासाभ्यां परिचलनं विद्यते यस्यास्तस्या वाचश्चित्तस्यच पूर्वापरभावक्रमेण च यज्ञं सम्पादयतीत्याशयः ॥१॥

तयोः सम्पादकानाह तयोरिति । तयोर्मार्गयोर्मध्येऽन्यतरां वर्तिनीं मार्गं ब्रह्मा ब्रह्माख्यऋत्विक् मनोव्यापारेण मौनेनैव संस्करोति । होताध्वर्युरुद्गातचेतित्रयोऽन्यतरां वर्तिनीं वाचा मन्त्रोच्चारणेनैव

संस्कुर्वन्ति । ब्रह्मणः कदा मौनं तद्भङ्गेंचकिमित्यत आह स इति । एवं मौनेन यज्ञस्य सम्पादकत्वात् स ब्रह्मा यत्र यदा प्रातरनुवाके शस्त्रे उपाकृते उपक्रान्ते परिधानीयायाः कर्मसमापिकाया ऋचो प्रत्यवायः स्यात्तन्निवृत्यर्थजपादिति यावत् । पुरा पूर्वं व्ययवदति वाचमुत्सृजेत् मौनं त्यजतीति यावत् ॥२॥

तदा मनोवर्तन्याः संस्काराभावे मनोवर्तनी नश्यति । मनोवर्त्तनी ब्रह्मणो वाग्वर्तनी य होतृप्रभृतिभिः संस्कार्येति व्यवस्थान्तरमाह । अन्यतरामिति । होत्राद्यास्तु अन्यतरामेवं वर्तनी वाचा संस्कुर्वन्ति । तदान्यतरा वर्तनी मार्गः हीयते विनश्यति यज्ञमार्गहानिभवमनर्थं सदृष्टान्तमाह स इति । स वक्ष्यमाणदृष्टान्तः । यथैकपात् पुरुषो व्रजन् रिष्यति यथा वैकेन चक्रेण वर्तमानो रथो रिष्यति । एवमस्य यजमानस्य यज्ञो रिष्यति नश्यति यज्ञं रिष्यन्तं यजमानोऽपि रिष्यति । यज्ञनाशेऽपि यजमानस्याध्यक्षत्वात् कथमेतदित्यत आह । स इति । पापीयान् पापतरो भवति ॥३॥

**अथ चक्राभ्यां यत्रोपाकृते प्रातरनुवाकेन पुरा परिधानीयाया ब्रह्मा व्यववदत्युभे एव वर्तनी संस्कुर्वन्ति न हीयतेऽन्यतरा ॥४॥**

**स यथोभयपाद्व्रजन्रथो वोभाभ्यां चक्राभ्यां वर्त्तमानः प्रतितिष्ठत्येवमस्य यज्ञः प्रतितिष्ठति । यज्ञं प्रतितिष्ठन्तं यजमानोऽनुप्रतिष्ठति स इष्ट्वा श्रेयान् भवति ॥५॥**

इति चतुर्थाध्यायस्य षोडशः खण्डः ॥१६॥

---

यस्मादेवं ब्रह्मणो मौनपरित्यागेऽनर्थोऽथऽतस्तस्माद्यत्र प्रातरनुवाके उपाकृते परिधानीयायाः पूर्वं ब्रह्मा न व्यवदति । तदोभे एव वर्त्तनी संस्कुर्वन्ति ऋत्विजः । एवञ्च न हीयतेऽन्यतरा ॥४॥

किन्तत इत्यतः सदृष्टान्तं ततोभयं पुरुषार्थमाह । सयथेति । व्याख्यातप्रायम् ॥५॥

इति चतुर्थाध्यायस्य षोडषः खण्डः ॥१६॥

---

**प्रजापतिर्लोकानभ्यतपत्तेषां तप्यमानानां रसान् प्राबृहदग्निं पृथिव्या वायुमन्तरीक्षादादित्यं दिवः ॥१॥**

**स एतास्तिस्रो देवता अभ्यतपत्तासां तप्यमानानां रसान् प्रावृहदग्नेर्ऋचो वायोर्यजूंषि सामान्यादित्यात् ॥२॥**

अत्र प्रमादात् ब्रह्मादिऋत्विजां मौनादिनियमभङ्गे प्रायश्चित्तं व्याहृति होमरूपं व्याहृतिमहिमाऽभिधानपुरस्सरमाह । प्रजापतिरित्यादिना । प्रजापतिर्लोकान् पृथिव्यन्तरिक्षद्युसंज्ञकानालोचितवान् । इमे एव रसाः किन्ततोन्ये इत्याहार्यसंशय्य विचारितवान् इमे एव रसा इति प्राप्ते लोकानां तप्यमानानामालोच्यमानानां सकाशात् रसान् प्रावृहत् ॥ उद्ववर्ह निष्कृष्य ज्ञातवानिति यावत । कस्माल्लोकात्कं रसत्वेन निश्चितवानित्यत आह अग्निमिति । पृथिवीलोकादग्निरसम् वायुमन्तरीक्षात् । आदित्यात्, दिव इति निश्चिकाय ॥१॥

ततः स प्रजापतिरेतास्तिस्रा देवताऽभ्यतपत् । एतेभ्यः सारजिघृत्तया आलोचित्वान् । तथाप्येता एव रसा इति प्राप्ते तासां तप्यमानानां रसान् प्रावृहत् जग्राह । तदेवाह । अग्नेरिति । अग्नेर्ऋचः । वायोर्यजूंषि यजुर्वेदान् । आदित्यात् सामानि ॥२॥

**स एतां त्रयीं विद्यामभ्यतपत्तस्यास्तप्यमानाया रसान् प्रावृहद् भूरित्यृग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यः ॥३॥**

**एतद्यद्वृक्तोरिष्येद्भूः स्वाहेति गार्हपत्ये जुहुयादृचामेव तद्रसेनर्चां वीर्येणर्चां यज्ञस्य विरिष्टं संदधाति ॥४॥**

**अथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषां वीर्येण यजुषां यज्ञस्य विरिष्टं सन्दधाति ॥६॥**

ततः स प्रजापतिरेतां त्रयीविद्यां पूर्ववदभ्यतपत् स तस्या इति पूर्ववत् व्याहृतिऋग्भ्यः भूरिति रसं जग्राह यजुर्भ्यो भुवरिति व्याहृतिं सामभ्यः स्वरिति व्याहृतिम् ॥३॥

यदर्थमेतदुक्तं तदाह । तदिति । तत्तस्मात् यत् यदि ऋक्तो ऋङ्निमित्तं रिष्येत् यज्ञः क्षतं प्राप्नुयात् । तदा भूः स्वाहेति मन्त्रेण गार्हपत्याग्नौ जुहुयात् सा तत्र प्रायश्चित्तिः । रसेन वीर्येण यज्ञवता यज्ञस्य अर्चां विरिष्टं ऋङ्निमित्तं क्षतं संदधाति ॥४॥

यदि यजुष्टो यजुर्निमित्तं रिष्येत् । तदा 'भुवः स्वाहे'ति दक्षिणाग्नौ जुहुयात् पूर्ववद्यज्ञं सन्दधाति ॥५॥

यदि सामतो रिष्येत् 'स्वःस्वाहे'ति मन्त्रेणाहवनीये जुहुयात् । साम्नामेतद्रसेन साम्नां वीर्येण साम्नां यज्ञस्य विरिष्टं सामनिमित्तं क्षतं सन्दधाति ॥६॥

**तद्यथा लवणेन सुवर्णं सन्दध्यात् सुवर्णेन रजतं रजतेन त्रपु त्रपुणा सीसं सीसेन लोहं लोहेन दारु दारु चर्मणा ॥७॥**

**एवमेषां लोकानामासां देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टं संदधाति भेषजकृतो ह वा एष यज्ञो यत्रैवंविद्ब्रह्मा भवति ॥८॥**

यज्ञस्य विरिष्टसाधनमेव सदृष्टान्तमाह । तद्यथेति । सुवर्णे-वह्निसंयुक्ते द्रवीभूते लवणेन क्षारप्रक्षेपेण टङ्कणादिना मृदुकरणं मिथोऽवयवसंयोजनं संधानं प्रसिद्धमित्यर्थः । यथात्राशक्यसंधानं रजतं सुवर्णेन सन्दध्यात् स्वर्णकारः वह्निसंयोगेन । यथाशक्यसंधानं

त्रपु रजतेन । तथा त्रपुणा तादृशं सीसम् । सीसेन तादृशं लोहं लोहेन दारु दारुचर्मणा चर्मबन्धनेन सन्दध्यात् ।। ७ ।।

एवमेषां लोकानां पृथिव्यादीनामासां देवतानामग्न्यादीनाम् । अस्याः त्रयीविद्यायाः ब्रह्मादीनामिति यावत्, वीर्य्येण श्रेष्ठेन भूरादिना यज्ञस्य विरिष्टं सन्दधाति ब्रह्मा । ब्रह्मणः सामर्थ्यमाह । भेषजेति । यत्र यज्ञे एवंविद्ब्रह्मा भवत्येष यज्ञो भेषजेन चिकित्सकेन कृतो ह वै ।।८।।

**एष ह वा उदक्प्रवणो यज्ञो यत्रैवंविद्ब्रह्मा भवत्येवंविदं ह वा एषा ब्रह्माणमनुगाथा यतो यत आवर्त्तते तत्तद्गच्छति ॥ ९ ॥**

**मानवो ब्रह्मैवेक ऋत्विक् कुरूनश्वाभि रक्षत्येवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्चर्त्विजोऽभिरक्षति तस्मादेवं विदमेव ब्रह्माणं कुर्वीत नानेवंविदं नानेवंविदम् ॥ १७ ॥**

इति चतुर्थाध्यायस्य सप्तदशः खण्डः ॥१७॥

---

इति छान्दोग्योपनिषदि चतुर्थोध्यायः समाप्तः ॥ ४ ॥

---

यत्र यज्ञे एवंविद्वान् ब्रह्मा भवत्येष यज्ञ उदक्प्रवणः ऊर्ध्वलोकानुसारी ह वै । एवंविदो ब्रह्मण उक्तसामर्थ्यसत्त्वे गाथां प्रमाणयति । एवंविदमिति एवंविदं ब्रह्माणमनुसृत्यैषा वक्ष्यमाणगाथा प्रवर्त्तते । तामेव पठति । यत इति । यज्ञस्य दुरिष्ट्या यतो यतः स्थानात् यज्ञकरणेन प्राप्तुं प्रसक्तादावर्तते तत्, तत्स्थानमेवंविदा ब्रह्मणा गच्छति मानवो यजमानः तत्, तस्मादश्वावडवा योद्धृन्स्वरूढान् यथाऽभिरक्षति एवंविद्ध वै ब्रह्मा यज्ञं यजमानं सर्वांश्च ऋत्विजोऽभिरक्षति तत्कृतदोषापनयनात् । यत एवं कर्मणि कुशलः ब्रह्मा तस्मादेवंविदं यथोक्तव्याहृत्यादिज्ञानसम्पन्नं ब्रह्माणं कुर्वीत नानेवंविदं कदाचन । द्विरुक्तिरध्यायसमाप्त्यर्था । अत्र ब्रह्मणो वेदनेन यजमाना-

नामृत्विजाञ्च रक्षणप्रतिपादनेनोद्गातृप्रभृतीनां वेदनानियमः सूच्यत इति अङ्गेषु यथाश्रयभाव इत्यधिकरणे दर्शनाच्चेति सूत्रितम् ॥

इति चतुर्थाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

इत्यशेषरसिकचक्रचूडामणि श्रीस्वामिहरिदासपदाश्रितानुगेनामोलकरामविदुषा संगृहीतायां छान्दोग्योपनिषत्प्रकाशिकाटीकायां चतुर्थोऽध्यायः ॥ ४ ॥

---

# अथ पञ्चमोध्यायः ।

**योह वै ज्येष्ठञ्च श्रेष्ठञ्च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥**

**यो ह वै वसिष्ठं वेद वसिष्ठो ह स्वानां भवति वाग्वाववसिष्ठः २**

**यो ह वै प्रतिष्ठां वेद प्रति ह तिष्ठत्यस्मिँश्च लोकेऽमुष्मिंश्च चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥**

**यो ह वै सम्पदं वेद संहास्मै कामाः पद्यन्ते दैवाश्च मानुषाश्च श्रोत्रं वाव सम्पत् ॥ ४ ॥**

**यो ह वा आयतनं वेदायतनं ह स्वानां भवति मनो ह वायतनम् ॥ ५ ॥**

अथ प्राणविद्या प्रस्तूयते। यो वा इति । योऽधिकार्यखिलदेवेभ्यो वयसा ज्येष्ठं गुणतः श्रेष्ठं वेद स स्वसमानानां मध्ये ज्येष्ठः श्रेष्ठश्च भवति। ह वा श्रुत्यादिप्रसिद्धिमाह । ज्येष्ठः श्रेष्ठश्च क इत्यत आह। प्राण इति । कस्मान्निर्णीतं वागादिभ्यो प्राणस्य ज्येष्ठत्वमितिचेदित्थम् गर्भस्थे प्रत्यगात्मनि वागादिभ्यः प्राक् प्राणस्य वृत्तिरुपलभ्यते यया गर्भो विवर्द्धते । अतस्तद्वृद्धिदर्शनमेव प्रमाणं वागादिभ्यो ज्यायस्त्वे। चक्षुरादिस्थानावयवनिष्पत्यनन्तरं वागादीनां वृत्तिलाभः ॥१॥

यो वै वसिष्ठं वेद स स्वानां स्वकीयानां मध्ये वसतामुत्तमो भवति । कोऽसौ वसिष्ठ इत्यत आह वागिति ॥ २ ॥

सद्व्यवहारजनकत्वेन वाचो वसिष्ठत्वम् । यो ह वै प्रतिष्ठां वेद सोऽस्मिन्नमुष्मिंश्च लोके प्रतिष्ठति । का प्रतिष्ठा ? चक्षुरेव । समविषमभूतलप्रदर्शकत्वमेव चक्षुषः प्रतिष्ठात्वम् ॥ ३ ॥

यो ह वै सम्पदं वेद अस्मै देवाः मनुष्याश्च कामाः काम्याः सम्पद्यन्ते,इहामुत्र तस्य सम्पदः स्युरिति भावः । का तर्हि सम्पदित्यत्राह । श्रोत्रमिति । वेदशास्त्रतदर्थश्रवणादिसम्पादकत्वेन श्रेष्ठगतिप्रदत्वं श्रोत्रस्य सम्पत्वम् ॥ ४ ॥

यो वा आयतनं वेद स स्वानां मध्ये आयतनमाश्रयो भवति तत्किमित्यत आह । मन इति । स्रक्चन्दनविषयज्ञानभोगायतनत्वमेव मनस आयतनत्वम् ॥ ५ ॥

**अथ ह प्राणा अहं श्रेयसि व्यूदिरेऽहं श्रेयानस्म्यहं श्रेयानस्मीति ॥ ६ ॥**

**ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति तान् होवाच यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठ इति ॥ ७ ॥**

**सा ह वागुच्चक्राम सा सम्वत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथाकला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक् ॥ ८ ॥**

**चक्षुर्होच्चक्राम तत्सम्वत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथान्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वतः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥ १० ॥**

प्राणस्य ज्येष्ठत्वं श्रेष्ठत्वञ्चाभिहितं तत्कुत इत्यतो मीमांसया समर्थितत्वादितिभावेनाख्यायिकामारभते अथेति । प्राणाः पूर्वोक्ताः

वायुपुरस्सरा देवाः । अहंश्रेयसि व्यूदिरे विवादं कृतवन्तः अहं-श्रेयसीत्युक्तमेव विवादमाह अहमिति ॥ ६ ॥

ते विवदमानाः प्राणाः प्रजापतिं । पितरं जनयितारमेत्योचुः । किमूचुः ? हे भगवन् नोऽस्माकं मध्ये कः श्रेष्ठ इति । तान् प्राणान् होवाच प्रजापतिः । वो युष्माकं मध्ये यस्मिन्नुत्क्रान्ते इदं शरीरं पापिष्ठतरमिव शवरूपं दृश्येत स वः श्रेष्ठः ॥ ७ ॥

एवमुक्ते तत्परीक्षणाय तेषां मध्ये सा प्रसिद्धा वागुच्चक्राम परोक्षणीयशरीरमुत्क्रान्तवती तदुत्क्रमणेऽपि शरीरं न पपातेति ग्राह्यम् सोत्क्रान्ता वाक् सम्बत्सरपर्य्यन्तं प्रोष्य प्रवासं कृत्वा शरीर-स्थानितरान् प्राणान् पर्येत्योवाच । मदृते जीवितुं कथमशकतेति । ते शरीरस्थाः प्राणाः होचुः । यथाऽकला मूकाः अवदन्तोऽपि प्राणादिना प्राणनादिकुर्वाणाः जीवन्ति पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवं सर्वकरणचेष्टां कुर्वन्त एव वयमजीवाम इत्यर्थः । एवमुक्त्वा वाक् नाहं श्रेष्ठेति निश्चीत्य तस्मिंच्छरीरे प्रविवेश हा ॥ ८ ॥

एवं चक्षुर्होच्चक्रामेत्यादिकमपि पूर्ववत् ॥ ६ ॥

**श्रोत्रं होवाच तत्सम्वत्सरं प्रोष्य पर्येत्योवाच कथमशक-तर्ते मज्जीवितुमिति यथा वधिरा अश्रृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मनसैवमिति प्रविवेश ह श्रोत्रम् ॥ १० ॥**

**मनो होच्चक्राम तत्सम्वत्सरं प्रोष्य पर्येत्योवाच कथमश-कतर्ते मज्जीवितुमिति यथा वाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥**

अथ ह प्राण उच्चिक्रमिषन्स यथा सुहयः पड्वीशशङ्कून्संखिदेदेवमितरान् प्राणान् समखिदत्तं हाभिसमेत्योचुर्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥ १२ ॥

अथ हैनं वागुवाच यदहं वसिष्ठोऽस्मि त्वं तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदहं प्रतिष्ठास्मि त्वं तत्प्रतिष्ठासीति ॥ १३ ॥

अथ हैनं श्रोत्रमुवाच यदहं सम्पदस्मि त्वं तत्सम्पदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्वं तदायतनमसीति १४

यथा वालाः षण्मासात्पूर्वं वालाः । अमनसः । अप्ररूढमनसः ॥ १० ११ ॥

अथैवं सर्वेषामश्रेष्ठत्वावधारणानन्तरम् । तत्र प्राणो मुख्यप्राणः । उच्चक्रमिषन्नुत्क्रान्तुमिच्छन् दृष्टान्तः यथा लोके सुहयः शोभनाश्वः पड्वीशशङ्कून् पद्भूतहयस्येशाः नियामकाः वन्धका इति यावत् पड्वीशाश्च ते शङ्कवश्चेति तथोक्ताः तान् पादवन्धनकीलानिति यावत् । परीक्षणायारुढेन कशया हतः संखिदेत् समुत्पाटयेदेवमितरान् प्राणान् समखिदत् समुत्पाटितवान् । ते प्राणाः सञ्चालिताः सन्तः स्वस्वस्थाने स्थातुमशक्तास्तं मुख्यप्राणमभिसमेत्योचुः । हे भगवन्नेधि आशु त्वं नोऽस्माकं मध्ये श्रेष्ठोऽसि । अस्माद्देहान्मोत्क्रमीरिति ॥ १२ ॥

तर्हि तस्य मे पूयं वलिं पूजां कुरुतेत्युक्तास्तथेत्यूचुरिति ग्राह्यम् । तत्प्रकारं वक्तुमारभते । अथेति । एवं मुख्यप्राणं प्रति वागुवाच । अहं वसिष्ठोऽस्मि वसतामुत्तमास्मीति यत् त्वं तद्वसिष्ठोऽसि त्वमेव मयि स्थित्वा मदीयवसिष्ठत्वनियामक इत्यर्थः । एवमुत्तरत्रापि ॥ १३ । १४ ॥

न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाऽऽचक्षते प्राणो ह्येवैतानि सर्वाणि भवति ॥१५॥

इति पञ्चमाध्यायस्य प्रथमः खण्डः ॥ १ ॥

वागादीनां वसिष्ठत्वादिकं प्राणाधीनमित्यत्र नियामकमाह। नवा इति। यस्माद्वागादीनि करणानि वाच इति नैवाचक्षते विद्वांसः। एवं चक्षूँषीति नैवाचक्षते श्रोत्राणि नैवाचक्षते मनांसि नैवाचक्षते किं तर्हि ? प्राणा एवैतानि सर्वाणि भवन्ति। सर्वेन्द्रियदेवेषु स्थित्वा तन्नियामको भवतीत्यर्थ ॥ १५ ॥

इति पञ्चमाध्यायस्य: प्रथमः खण्डः ॥ १ ॥

———

**स होवाच किं मेऽन्नं भविष्यतीति यत्किञ्चिदिदमा श्वभ्य आशकुनिभ्य इतिहोचुस्तद्वा एतदनस्यान्नमनो ह वै नाम प्रत्यक्षां न ह वा एवंविदि किञ्चनानन्नं भवतीति ॥ १ ॥**

**स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाचाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो ह भवति ॥ २ ॥**

स मुख्यप्राण उवाच। नालं श्रेष्ठोसीत्युक्तिमात्रेण। किं मेऽन्नं भविष्यतीति एवमुक्ता देवा आ श्वभ्य आ शकुनिभ्यः श्वपक्षिपर्य्यन्तप्राणिभिर्यत्किञ्चिदिदं योग्यमन्नमद्यते तत्तेऽन्नमित्यूचुः। देवैर्दत्तमन्नं पूर्वमतदीयं किं ? नेत्याह। तद्वाइति। तदेतदनस्य मुख्यप्राणस्यैवान्नं कुत इत्यत आह। अनइति। अनो मुख्यप्राण एव प्रत्यक्षम्। अक्षेषु प्रति स्थितत्वात्। एवं प्राणवेत्तुः फलमाह। नेति। एवमुक्तरीत्या प्राणस्य सर्वभोक्तृत्वविदि किञ्चनानन्नं न भविष्यति। सर्वमेवास्यान्नं भवति ॥ १ ॥

एवंसिद्धान्नः स होवाच। किं मे वासो भविष्यतीति सर्वप्राणिभिः पीयमाना आप इति होचुः अत्र नियामकमाह श्रुतिः। तस्मादिति अपां प्राणवस्त्रत्वादेव हि एतदन्नमशिष्यन्तो भोक्ष्यमाणः भुक्तवन्तश्च विद्वांसः श्रोत्रियाः ब्राह्मणाः भोजनात्पुरस्ताच्चोपरिष्टाचाद्भिः परिदधति परिधानं कुर्वन्ति। प्राणस्य वस्त्रबुद्धया भोजनोभयतः पिबतः फलमाह। लम्भुक इति। वासो दिव्य-

वाससो लंभुको लब्धा भवति तथाऽनग्नो भवति इहामुत्र दिव्यवस्त्रैरन्तर्वहिः प्रावरणवान् भवति ॥ २ ॥

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते गुणोपसंहार पादे छान्दोग्यवाजसनेयकयोः कौषीतकिनामुपनिषदि च दशमेऽध्याये यो ह वै ज्येष्ठं श्रेष्ठञ्च वेद ज्येष्ठश्च स्वानां भवतीत्यारभ्य प्राणविद्या पठ्यते तत्र ज्यैष्ठ्यश्रैष्ठ्यगुणान्वितं प्राणमुपास्यतया प्रतिपाद्य वागादीनामपि तत्र वसिष्ठत्वादिगुणानुक्त्वा वागादीनां देहस्य च प्राणाधीनस्थितितया प्राणाधीनकार्यतया च प्राणस्य च श्रैष्ठ्यमुक्त्वा वागादिगुणाः प्राणे पुनः प्रत्यर्पिता। यद्वा अहं वसिष्ठोस्मि त्वं तद्वसिष्ठोऽसीत्यादिना। एवञ्च छन्दोगानां वाजसनेयिनाञ्च प्राणसम्वादे जैष्ठ्यश्रैष्ठ्यगुणको वसिष्ठत्वादिगुणकश्च प्राण उपास्यतया प्रतिपाद्यते। कौषीतकिप्रभृतीनान्तु प्राणसम्वादे वसिष्ठत्वादयो गुणा उक्ताः वागादीनां न पुनः प्राणे समर्पिताः। तत्र संशयः। किं कौषीतकिप्राणविद्यायां प्राणे वसिष्ठत्वादयो गुणा उपसंहर्त्तव्या उत नेति ? किं प्राप्तं, तत्रानुपसंहारोऽश्रुतत्वादिति पूर्वपक्षे प्राप्ते 'सर्वाभेदादन्यत्रेमे'। ब्र० सू०। ३। ३।१०॥ इति सूत्रेण सिद्धान्तितम्। अयमर्थः। अन्यत्र कौषीतकिप्राणविद्यायामपि इमे वसिष्ठत्वादयो गुणाः प्राणे उपादेयाः। कुतः ? सर्वाभेदात्। प्राणज्यैष्ठ्यश्रैष्ठ्योपपादनं वागादीनां स्थितेस्तत्कार्यस्य च प्राणाधीनतयेत्येतत् सर्वत्राप्यविशिष्टमेव। अन्यथा वागादिगतवसिष्ठत्वादेरपि प्राणहेतुकत्वानुसन्धानमन्तरा प्राणस्य ज्यैष्ठ्यश्रैष्ठ्यानुसन्धानं नोपपद्यते॥ तथाच शाखान्तरविद्यायां शाखान्तरगुणोपसंहारः कर्त्तव्य इति भावः। प्रकृतमनुसरामः।

**तद्धैतत् सत्यकामो जाबालो गोश्रुतये वैयाघ्रपद्यायोक्त्वोवाच यद्यप्येनच्छुष्काय स्थाणवे ब्रूयाज्जायेरन्नेवास्मिञ्छाखाः प्ररोहेयुः पलाशानीति ॥ ३ ॥**

**अथ यदि महज्जिगमिषेदमावास्यायां दीक्षित्वा पौर्ण-**

मास्यां रात्रौ सर्वौषधस्य मन्थं दधिमधुनोरुपमथ्य ज्येष्ठाय श्रेष्ठाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥४॥ वसिष्ठाय स्वाहेत्यग्नौ हुत्वा मन्थे सम्पातमवनयेत्प्रतिष्ठायै स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् सम्पदे स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेदायतनाय स्वाहेत्यग्नावाज्यस्य हुत्वा मन्थे सम्पातमवनयेत् ॥५॥

इयं प्राणविद्या परम्परागताचेत्याह । तदिति । तदेतत् प्राणविज्ञानं सत्यकामो जाबालो गोश्रुतये नाम्ना वैयाघ्रपद्याय व्याघ्रपदः पुत्रायोक्त्वा फलञ्चोवाच । एतत्प्राणविज्ञानं शुष्कायापि स्थाणवे यदि ब्रूयात् । तदा सः स्थाणुर्योग्यश्चेदस्मिंशुष्केऽपि स्थाणौ शाखाः जायेरन्नेव पलाशानि प्ररोहेयुरिति ॥ ३ ॥

इदानीं योऽधिकारी स्वस्य दृष्टादृष्टं महत्वमिच्छेत्तस्य कर्त्तव्यं प्रकृतप्राणादिकमेव होमं वक्तुं प्रारभते । अथेति । योऽधिकारी यदि महत् जिगमिषेत् महत्वं ज्यैष्ठ्यश्रैष्ठ्यादिलक्षणं प्राप्तुमिच्छेत् तर्हि सोऽमावास्यायां दीक्षित्वा पक्षपर्य्यन्तं पयोव्रतानुष्ठाय पुनः पौर्णमास्यायां रात्रौ सर्वौषधस्य सर्वौषधीनां व्रीहियवादीनां दश धान्यानां मन्थं पिष्टं दधिमधुनोर्दधिमधुभ्यामुपमथ्य संमिश्रय ज्येष्ठाय श्रेष्ठाय स्वाहेति मन्त्रेणाग्नावाज्यस्याज्यं तत्संस्कृतं मन्थं हुत्वा स्रुवलग्नमाज्यं मन्थे होम्ये पिष्टे सम्पातं पातनं यथा तथावनयेत् हुतशेषं निनयेदित्यर्थः ॥४।५॥

अथ प्रतिसृप्याञ्जलौ मन्थमाधाय जपत्यमो नामास्यमाहि ते सर्वमिदं स हि ज्येष्ठः श्रेष्ठो राजाधिपतिः स मा ज्यैष्ठ्यं श्रैष्ठ्यं राजाधिपत्यं गमयत्वहमेवेदं सर्वमसानीति ॥ ६ ॥

होमावशिष्टं मन्थविनियोगमाह । अथेति । अथेति होमानन्तरं होमावशिष्टं मन्थं पिष्टं प्रतिसृप्याग्नावीषदुपसृप्याञ्जलावाधाय जपति जपेत् । यज्ञदेवतांप्राणमिति शेषः । त्वममो नामासि अम इति प्राणस्य

नाम नतु प्राणस्य नाम मन्थस्य तु कथंमन्त्रार्थत्वमिति चेदित्थम्— अन्नेन हि प्राणः प्राणिति देह इत्यतो मन्थद्रव्यं प्राणस्यान्नत्वात् प्राणत्वेन स्तूयतेऽन्नोनामासीति । मन्थस्य प्राणत्वं कुत इत्यत आह सर्वमिदमिति । सर्वमिदं जगत्सर्वं ते त्वदधीनं मन्थलक्षणान्नाधीनत्वाज्जगत इत्याशयः ॥ स हि मन्थः प्राणः ज्येष्ठः श्रेष्ठः ॥ राजा दीप्तिमानधिपतिः । आधिक्येन पालकः सर्वस्य मा मां ज्यैष्ठ्यं श्रैष्ठ्यं राजाधिपत्यं गमयतु प्रापयतु, इदं सर्वमहमेवासानि सर्वनियन्तृतया भवानि ॥ ६ ॥

**अथ खल्वेतयर्चा पच्छ आचामति तत्सवितुर्वृणीमह इत्याचामति वयं देवस्य भोजनमित्याचामति श्रेष्ठं सर्वधातममित्याचामति तुरं भगस्य धीमहीति सर्वं पिबति, निर्णिज्य कंसं चमसं वा पश्चादग्नेः संविशति चर्मणि वा स्थण्डिले वा वाचंयमोऽप्रसाहः स यदि स्त्रियं पश्येत् समृद्धं कर्मेति विद्यात् ॥ ७ ॥**

**तदेष श्लोकः यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति समृद्धिं तत्र जानीयात् तस्मिन् स्वप्ननिदर्शने तस्मिन् स्वप्ननिदर्शन इति ॥ ८ ॥**

इति पञ्चमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

अथैवं प्राणजपानन्तरं होमावशिष्टं मन्थं ग्रासचतुष्टयं कृत्वा एतया वक्ष्यमाणया ऋचा पच्छः पादशः। आचामति । आचामेन्मन्थं तदेव विशदमाह । तत्सवितुरिति पादेन प्रथमं ग्रासमाचामेत् । वयमिति पादेन द्वितीयं ग्रासमाचामेत् । श्रेष्ठमिति पादेन तृतीयम् । श्रेष्ठं प्रशस्यतमं सर्वधातमं सर्वस्य जगतः धारयितृतममिदञ्च भोजनविशेषणम् । तुरं त्वरमिति पादेन सर्वं निःशेषं पिबति पिबेत् । भगस्य देवस्य सवितुः स्वरूपमितिशेषः । धीमहि चिन्तयेमहि विशिष्ट-

भोजनेन शुद्धात्मानः सन्त इत्याशयः। कंसं कांस्यं चमसं चमसाकारं वौन्दुवरमयं मन्थपात्रं निर्णिज्य प्रक्षाल्याग्नेः पश्चाच्चर्मणि वा स्थण्डिले वा केवलायां भूमौ वा वाचंयमो यतवाक्। अप्रसाहः स्त्रीरहितः। संविशति शयीत। स यजमानः यदि स्वप्नेषु स्त्रियं पश्येत् तदा समृद्धं ममेदं कर्मेति विद्यात्॥७॥

अत्रैव श्लोकमाह। तदिति। तत् तत्रोक्तार्थे वक्ष्यमाणः श्लोको भवति। तं पठति। यदेति। काम्येषु कर्मसु क्रियमाणेषु यदि स्वप्नेषु स्त्रियं पश्यति तत्र तर्हि तस्मिन् स्वप्नाख्ये निदर्शने जाते समृद्धिं जानीयात्। द्विरुक्तिः प्रामाणिकत्वज्ञापनार्था॥ ८॥

इति पञ्चमाध्यायस्य द्वितीयः खण्डः॥ २॥

———

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते। वाजिनां(वाजसनेयिनां) प्राणविद्यायां 'न ह वा अस्यानन्नं जग्धं भवति नानन्नं परिगृहीतं भवति तथा छान्दोग्यानां न ह वा एवंविदि किञ्चनान्नं भवतीति सर्वान्नानुमतिः प्राणविद्यानिष्ठस्य सर्वदा क्रियत इति पूर्वपक्षे प्राप्त उच्यते।

सर्वान्नानुमितिश्च प्राणात्यये तद्दर्शनात्। ब्र० सू०। ३। ४। २८॥

प्राणात्यये एव प्राणविदः सर्वान्नानुमितिः कुतस्तद्दर्शनात्। अयुक्तान्नभक्षणस्य प्राणात्ययापत्तावेव मटचीहतेषु कुरुष्वितिब्राह्मणे दर्शनात्। मटचीसंज्ञकैर्जन्तुविशेषैः सर्वान्नभक्षणेन दुर्भिक्षे जाते क्षुत्परीतो मुनिश्चाक्रायणो हस्तीभ्योच्छिष्टभक्षणं कृतवान्। तस्मात्प्राणविदोऽपि प्रणात्यये एव सर्वान्नभक्षणं सङ्कीर्त्यते।

अबाधाच्च। ब्र० सू०। ३।४। २६॥

आहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवा स्मृतिरिति विद्योत्पत्त्यर्थमाहारशुद्धिविधानं तस्या बाधादपि प्राणात्यये एव सर्वान्नानुमतिरिति निश्चीयते।

अपि च स्मर्य्यते ॥ ब्र० सू० । ३ । ४ । ३० ॥

अपिच प्राणात्यये विदुषोऽविदुषश्च यतस्ततोऽन्नभक्षणं स्मर्य्यते ।

**"जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः ।**
**लिप्यते न स पापेन पद्मपत्रमिवाम्भसेति ॥**

शब्दाश्चातोऽकामकारे । ब्र० सू० । ३ । ४ । ३१ ॥

यतः प्राणात्ययापत्तावेव विदुषोऽविदुषश्च 'सर्वान्नानुमतिरतोऽकामकारे च स्वच्छन्दाचारविपर्य्यये 'तस्माद्ब्राह्मणः सुरां न पिबेदिति कठानां शब्द उपपद्यते ॥ प्राणोपासकस्य सर्वान्नानुज्ञानमापद्विषयम् । अनापद्विषयमिव तच्छ्रवणन्तु तत्तद्विद्यास्तुत्यर्थम् । नतु शमादिवत्प्राणविद्याङ्गतया विधीयत इति फलितार्थः । तस्मात्सर्वान्नभक्षणमापद्विषयमिति स्थितम् ।

तथा वाजसनेयके किं मेऽन्नं किं मे वास इति प्राणो वागादीन् पप्रच्छ, ते प्रत्यूचुः, यदिदं किञ्चाश्वभ्य आकृमिभ्य आकीटपतङ्गेभ्योऽन्नं तत्तेऽन्नमापो वास इति । तथैव छान्दोग्येऽपि 'स होवाच किं मे वासो भविष्यतीत्याप इति होचुस्तस्माद्वा एतदशिष्यन्तः पुरस्ताच्चोपरिष्टाच्चाद्भिः परिदधति लम्भुको ह वासो भवत्यनग्नो भवतीति । तत्र संशयः किं तत्राचमनं विधीयते । अथवा आचमनमनूद्यापां प्राणवासस्त्वध्यानमिति । तत्रैतमेव तदनमनग्नं कुरुतेत्यपां प्राणवासस्त्वध्याने विधिप्रत्ययाश्रवणात् आशिष्यान्नमाचामेदित्याचमने विधि प्रत्ययश्रवणाच्चाचमनं विधीयते । आचमनस्तुत्यर्थञ्चापां प्राणवासस्त्वं व्यपदिश्यत इति प्राप्त उच्यते ।

कार्याख्यानादपूर्वम् । ब्र० सू० । ३ । ३ । १८ ॥

यदपूर्वमप्राप्तं स्मृतितस्तदाचमनीयास्वप्सु वासोदर्शनं विधीयते। कुतः?कार्याख्यानात् अहरहःकर्त्तव्याचमनस्य स्मृत्याचारप्राप्तस्य सङ्कीर्तनात् शास्त्रस्य चाप्राप्ताख्यानस्वरूपत्वाचमनमनूद्याचमनीयास्वप्सु प्राणवसस्त्वमनुविधीयत इति स्थितम् ।

श्वेतकेतुर्हारुणेयः पञ्चालानां समितिमेयाय तं ह प्रवाहणो जैवलिरुवाच कुमारानु त्वाशिषत्पितेत्यनु हि भगव इति ॥ १ ॥

वेत्थ यदितोऽधि प्रजाः प्रयन्तीति न भगव इति वेत्थ यथा पुनरावर्त्तन्ता ३ इति न भगव इति वेत्थ पथोर्देवयानस्य पितृयाणस्य च व्यावर्त्तना ३ इति न भगव इति ॥ २ ॥

वेत्थ यथासौ लोको न सम्पूर्यत ३ इति न भगव इति वेत्थ यथापञ्चम्यामाहुतवापः पुरुषवचसो भवन्तीति नैव भगव इति ॥ ३ ॥

एवं प्राणविद्या निरूपिता सम्प्रति वैराग्यजननाय पञ्चाग्नि विद्यां धूमार्चिरादिमार्गञ्चाख्यायिकापुरःसरं निरूपयति । श्वेतकेतुरित्यादिना खण्डाष्टकेन ॥ श्वेतकेतुर्नामतः । अरुणस्यापत्यमारुणिस्तस्यापत्यमारुणेयो ह पित्रानुशिष्टः स्वपाण्डित्यख्यापनाय पञ्चालानां पञ्चालदेशाधिपतीनां समितिं परिषदं प्रत्याजगाम । तं श्वेतकेतुं प्रवाहणो जैबलिस्तस्याहङ्कारशान्त्यर्थमुवाच । हेकुमार तव पिता त्वा त्वां अनुशिषत् । अन्वशिक्षयत् किमितिशेषः । हेभगव अनु हि, अन्वशिषद्धीति श्वेतकेतुरुवाच ॥ १ ॥

एवमुक्ते प्रवाहणः पृच्छति । वेत्थेति । प्रजा इतो लोकाल्लोकान्तरं प्रयन्त्यो यदधिकृत्य यं मार्गमधिकृत्य ब्रह्मलोकं चन्द्रलोकं वा प्रति प्रयान्ति तं मार्गं वेत्थ किमिति । एवं पृष्टः श्वेतकेतुर्न वेद्मि भगव इति होवाच । द्वितीयं पृच्छति । वेत्थेति । पुनरावृतिमच्चन्द्रलोकं गताः प्रजाः यथा येन मार्गेणेमं लोकं पुनरावर्त्तन्ते इति वेत्थ ? किमिति किंगतेनैव मार्गेण पुनरागमनमन्यथा वेति भावः । न भगव इति श्वेतकेतुः । तृतीयं पृच्छति । वेत्थ पथोरिति पथोरित्यस्य विवरणं देवयानस्य पितृयाणस्य चेति । व्यावर्तनाः । इतरेतरव्यावृतिं = वेत्थ किं यत्साधनसाध्यत्वेन देवयानपितृयाणयोरितरेतरव्यावृ-

त्तिस्तत्साधनं वेत्थ किमित्याशयः । अन्यथा प्रथमप्रश्नेन गतार्थत्वप्रसङ्गात् । न भगव इति होवाच श्वेतुकेतुः ॥२॥

चतुर्थं पृच्छति । वेत्थ यथेति । पुनः पुनः प्रयद्भिरप्यसौ लोकः परलोको यथा येन हेतुना न संपूर्यते तं वेत्थ किमिति ? न भगव इति श्वेतकेतुः । पञ्चमं पृच्छति । वेत्थ यथेति । यथा येन क्रमेण प्रकारेण पञ्चम्यामाहुतौ हुतायामापः पुरुषवचसो भवन्ति अद्भिः सम्परिष्वक्तो जीवो लब्धदेहः पुरुषनामवान् भवति किं तं क्रमं प्रकारञ्च वेत्थेति ? नैव भगव इति होवाच । अवधारणेनातः परं प्रश्नं व्यावर्त्तयति ॥ ३ ॥

**अथानुकिमनु शिष्टोऽवोचथा यो हीमानि न विद्यात् कथं सोऽनुशिष्टो ब्रुवीतेति स हायस्तः पितुरर्धमेयाय तं होवाचाननुशिष्य वाव किल मा भगवानब्रवीदनु त्वाशिषमिति ॥४॥**

**पञ्च मा राजन्यबन्धुः प्रश्नानप्राक्षीत् तेषां नकंचनाशकं विवक्तुमिति स होवाच यथा मां त्वं तदैतानवदो यथाऽहमेषां न कंचन वेद यद्यह मिमानवेदिष्यं कथन्ते नावक्ष्यमिति५**

**स ह गौतमो राज्ञोऽर्धमेयाय तस्मै ह प्राप्तायार्हांचकार स ह प्रातः सभाग उदेयाय तं होवाच मानुषस्य भगवन् गौतम वित्तस्य वरं वृणीथा इति स होवाच तवैव राजन्मानुषं वित्तं यामेव कुमारस्यान्ते वाचमभाषथास्तामेव मे ब्रूहीति स ह कृच्छ्रीबभूव ॥ ६ ॥**

अथ तर्हि एवमज्ञः सन् किन्नु कस्मान्नु अनुशिष्टोऽस्मीत्यवोचथाः । योहीमानि मया पृष्टान्यर्थजातानि न विद्यात् कथं स विद्वाननुशिष्टोऽस्मीति ब्रुवीतेति प्रवाहणः । एवं स श्वेतुकेतुरायस्तः प्रवाहणेनायासितः निरुत्तरितः । अप्रतिष्ठित इति यावत् । स्वपितुरर्धस्थानमेयाय गत्वा पितरमुवाच अननुशिष्य सम्यग्विद्योपदेशमकृत्वैव किलमा मां प्रति भगवानब्रवीदनु त्वाशिषं त्वामन्वाशिषमिति ॥ ४ ॥

यतः पञ्चसङ्ख्यकान् प्रश्नान् प्रष्टव्यार्थान् राजन्यबन्धुः क्षत्रियाभासो मा मां,अप्राक्षीत् ।,राजश्रेष्ठस्यापि कोपादियमुक्तिः । तेषां प्रश्नानां मध्ये एकञ्च नैकमपि प्रश्नं विवक्तुमर्थविशेषेण निर्णेतुंनाशकमिति । कतमे ते प्रश्ना इत्युक्तः प्रश्नवाक्यानुदाजहारेति ग्राह्यम् । एवमुक्तः स-पिता पुत्रक्रोधमुपशमयन्नुवाच । हे तात त्वं यथैतान् प्रश्नान् मां प्रत्यवदस्तथाहमेषां प्रश्नानां मध्ये एकमपि यथा यथावन्न वेद न जानामि कुतः ? यद्यहमिमान् प्रश्नानवेदिष्यं तर्हि कथं ते प्रियाय नावक्ष्यमिति । यदहं किञ्च वेद सर्वमहं तुभ्यमवोचम् । यदि राजपृष्टविद्येच्छा तर्हि राजानं प्रत्येहि । तत्र गत्वा ब्रह्मचर्य्यं वत्स्याव इति पित्रोक्तो भवानेव गच्छत्वित्याहेति ग्राह्यम् वाजसनेयके तथा श्रवणात् ।। ५ ।।

स एवं पुत्रोक्तो गौतमो गोत्रतः राज्ञोजाबलेरर्धं स्थानमेयाय तस्मै प्राप्ताय गौतमायार्हां पूजां चकार राजा स गौतमः कृतातिथ्य उषित्वा परेद्युः प्रातःकाले राजनि सभागे सभांगते सति उदेयाय राजानमुद्गतवान् सभागः सभाग्य इति वा । तमागतं गौतमं प्रत्युवाच राजा । हेभगवन् पूजार्हगौतम मानुषस्य वित्तस्य वरं हिरण्यादिविषयं वरं वृणीथा इति । एवमुक्तः स गौतमो होवाच । हेराजन् मानुषं वित्तं तवैवास्तु त्वं कुमारस्य मत्पुत्रस्यान्ते समीपे यामेव वाचं प्रश्नरूपामभाषथा तामेवमे ब्रूहीति ।स राजा स्वपृष्टस्य गोप्यत्वात्कृच्छ्रीवभूव दुःखीवभूव ।। ६ ।।

**तं ह चिरं वसेत्याज्ञापयांचकार तं होवाच यथा मा त्वं गौतमावदो यथेयं न प्राक् त्वत्तः पुरा विद्या ब्राह्मणान् गच्छति तस्मादुसर्वेषु लोकेषु क्षत्रस्यैव प्रशासनमभूदिति तस्मै होवाच ॥ ७ ॥**

इति पञ्चमाध्यायस्य तृतीयः खण्डः ।। ३ ।।

---

हे गौतम मां प्रति यथावदस्तामेव मे ब्रूहीति तथैवाहं करिष्ये त्वयि चिरोषित इत्यर्थः । 'नासम्वत्सरवासिन' इति श्रुतेरिति भावः ॥ वक्ष्यमाणविद्यां स्तौति यथेति इयं वक्ष्यमाणा विद्या । प्राक् तदेव विवृणोति त्वत्तयुरेति त्वत्तः एव पुरा ब्राह्मणान् यथा यथावन्न गच्छति नगतवती । क्षत्रियस्यैवासाधारणविद्येयमिति भावः । कुत इत्यतस्तत्र क्षत्रगामिविद्याफलमेव हेतुमाह तस्मादिति । विद्यायाः क्षत्रमात्रनिष्ठत्वादेव खलु एतद्विद्याद्यानुष्ठानेन सर्वेषु लोकेषु क्षत्रियस्यैव प्रशासनं प्रशास्तृत्वमभूदित्युक्त्वा तस्मै होवाच । विद्यां राजा ॥ ७ ॥

इति पञ्चमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥



**असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गाः ॥१॥**

**तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति तस्या आहुतेः सोमो राजा सम्भवति ॥ २ ॥**

इति पञ्चमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

इतरप्रश्नोत्तराणां पञ्चमप्रश्नोत्तरसापेक्षत्वादादौ तस्योत्तरं वक्तुं वैराग्यार्थं जीवस्य गतिं निरूपयन् पञ्चाग्नि विद्यामाह । असावित्यादिना । हे गौतम । स्वर्गलोक एवाग्निः । तस्य द्युलोकस्यादित्यः समित् । तेनेद्धोऽसौ लोको दीप्यते । रश्मयः धूमः । तस्य समित्प्रभवत्वात् सवितू रश्मीनां धूमत्वम् । अहरर्चिः प्रकाशकत्वात् । चन्द्रमा अङ्गाराः । अहः प्रशमेऽभिव्यक्तेः । अर्चिषः प्रशमानन्तरमेवाङ्गाराणामभिव्यक्तिः । नक्षत्राणि विस्फुलिङ्गाः । नक्षत्राणां विस्फुलिङ्गत्वं यतस्ते चन्द्रावयवतुल्यत्वेन उपलभ्यन्ते ॥ १ ॥

तस्मिन् सवितृलक्षणसमिधाद्युपेते द्युलोकलक्षणाग्नौ देवा इन्द्रियाणि श्रद्धां 'श्रद्धा वा आप' इति श्रुतेः श्रद्धाशब्देनाप एवोच्यन्ते। इन्द्रियाणि द्युलोकाग्नौ भूतसूक्ष्मरूपाहुतिं प्रक्षिपन्तीति कथमुपपद्यत इतिचेदित्थम्। यदीन्द्रियाणि न स्युस्तदा जीवपरिष्वक्तानां भूतसूक्ष्माणां द्युलोके गमनं नोपपद्येत। अत इन्द्रियाणां होतृत्वमुपपद्यते द्युलोकावाप्तिसाधनकर्मणामिन्द्रियाधीनत्वाद्वा तथोक्तिः सङ्गता। तस्या आहुतेः सोमो राजा सम्भवति स्वर्गभोगोपयिकदेहयुक्तो भवतिभूतसूक्ष्मपरिष्वक्तस्य चन्द्रमसं प्राप्तस्य प्रत्यगात्मनः सोमराजभावाप्तिः नत्वपशब्दितभूतसूक्ष्माणां, श्रूयते हि उत्त रत्र पितृयाने एषसोमो राजेति ॥२॥

इति पञ्चमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

---

**पर्जन्यो वाव गोतमाग्निस्तस्यवायुरेव समिदभ्रं धूमो विद्युदर्चिरशनिरङ्गारा ह्रादुनयो विस्फुलिङ्गाः ॥ १ ॥**

**तस्मिन्नेतस्मिन्नग्नौ देवाः सोमं राजानं जुह्वति तस्या आहुतेर्वर्षं सम्भवति ॥ २ ॥**

इति पञ्चमाध्यायस्य पञ्चमः खण्डः ॥ १ ॥



द्वितीयहोमसम्बन्धी द्वितीयः पर्य्यायस्तस्यार्थं विज्ञातुं तमेव पर्य्यायं निर्दिशति। पर्जन्य इति। हे गौतम पर्जन्यः वृष्टिसञ्चालक देवताविशेषः स एवाग्निस्तस्य वायुरेव समित् वायुर्हि पर्जन्याग्नेः दीप्तिसाधकः। वृष्टेः प्राक् वातस्य प्रावल्ये प्रायो वृष्टिदर्शनात् अभ्रं धूमः। अभ्राणां धूमकार्यत्वं पौराणिकसिद्धान्तसिद्धम्। तथाहि। 'यज्ञधूमोद्भवं त्वभ्रं द्विजानाञ्च हितं सदा॥ दावाग्निधूमसम्भूतमभ्रं वनहितं स्मृतमि' ति। विद्युदर्चिःप्रकाशकत्वेन तयोः साम्यात्। अशनिरङ्गाराः कठिनत्वेन विद्युत्सम्बन्धित्वेन तयोस्तु-

ल्यत्वात् । ह्रादन्यो गर्जितशब्दाः विस्फुलिङ्गाः, । तयोः विप्रकीर्णत्वेन साम्यात् ॥ १ ॥

तस्मिन्नेतस्मिन्नग्नौ देवाः पूर्ववत्सोमं राजन्यं जुह्वति । श्रद्धाख्या आपः सोमाकारपरिणता द्वितीये पर्य्याये पर्जन्याग्निं प्राप्य वृष्टित्वेन परिणमन्ते ॥ २ ॥

इति पञ्चमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

**पृथिवी वाव गौतमाग्निस्तस्याः सम्वत्सर एव समिदाकाशो धूमो रात्रिरर्चिर्दिशोऽङ्गारा अवान्तरदिशो विस्फुलिङ्गाः ॥१**

**तस्मिन्नेतस्मिन्नग्नौ देवा वर्षंजुह्वति तस्या आहुतेरन्नं सम्भवति ॥ २ ॥**

इति पञ्चमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

पृथिवीतिपूर्ववत् । तस्याः पृथिव्याख्याग्नेः सम्वत्सर एव समित् सम्वत्सरकालेन समिधादिपृथिवी सस्यादिनिष्पत्तये भवति । आकाशो धूमः पृथिव्या इवोत्थित आकाशो दृश्यते यथाग्नेर्धूमः । रात्रिरर्चिः । अपपृथिव्यग्नेरनुरूपत्वाद्रात्रेरर्चिष्ट्वम् । दिशोऽङ्गाराः उपशान्तत्वेन तयोस्तुल्यत्वात् । अवान्तरदिशो विस्फुलिङ्गाः । क्षुद्रत्वेन तयोस्साम्यात् ॥ १ ॥

श्रद्धाशब्देन व्यपदिष्टा इन्द्रियसंयुक्ता सूक्ष्मभूताः द्युलोकभोगोपयिकदेहाकारेण परिणमन्ते तद्भोगावसाने ततः च्युताः द्रवितास्सन्तः वर्षाकारेण परिणताः भूतलं प्राप्य व्रीहीयवाद्यन्नरूपेण निष्पद्यन्ते ॥ २ ॥

इति पञ्चमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥



**पुरुषो वाव गौतमाग्निस्तस्य वागेव समित् प्राणो धूमो जिह्वाऽर्चिश्चक्षुरङ्गाराः श्रोत्रं विस्फुलिङ्गाः ॥ १ ॥**

**तस्मिन्नेतस्मिन्नग्नौ देवा अन्नं जुह्वति तस्या आहुते रेतः सम्भवति ॥ २ ॥**

इति पञ्चमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

तस्य पुरुषरूपाग्नेः वागेव समित् वाचा हि मुखेन समिध्यते पुरुषो न मूकः । प्राणो धूम इव मुखान्निर्गमनात् । जिह्वार्चिषोः- लोहितत्वेन साम्यात् तस्यामर्चिष्ट्वव्यपदेशः । चक्षुरङ्गाराः ॥ १ ॥

देवाः तस्मिन्नेतस्मिन्नग्नौ व्रीह्या संस्कृतं अन्नं जुह्वतितस्या आहुते रेतः सम्भवति ॥ २ ॥

इति पञ्चमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

**योषा वाव गौतमाग्निस्तस्या उपस्थएव समिद्यदुपमन्त्रयते स धूमो योनिरर्चिर्यदन्तः करोति तेऽङ्गारा अभिनन्दा विस्फुलिङ्गाः॥१**

**तस्मिन्नेतस्मिन्नग्नौ देवा रेतो जुह्वति तस्या आहुते गर्भः सम्भवति ॥ २ ॥**

इति पञ्चमाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

योषा गौतमाग्निः तस्या उपस्थः समित् । तेन हि सा पुत्राद्युत्पादनाय समिध्यते । उपमन्त्रणं सङ्केतकरणम् । लोहितत्वेन योन्यर्चिषोः साजात्यम् । अन्तःकरणं मिथुनीकरणम् । अभिनन्दास्तज्जन्यसुखलवाः ॥ १ ॥

तस्या आहुतेर्गर्भः सम्भवति । श्रद्ध्वासोमवर्षान्नरेतसां यानि द्युलोकादिषु योषिदन्तेष्वग्निषु हवनानि तेषामेकैकस्मिन् पर्याये । यो क्रमो विहितस्तेनाप एव गर्भभूताः पञ्चम्यामाहुतौ हुतायां रेतोरूपाः ॥ २ ॥

इति पञ्चमाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

**इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्वावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाऽथ-जायते ॥ १ ॥**

किन्तत इत्यतः पञ्चमप्रश्नस्योत्तरं जातमित्याह इतित्विति । श्रद्धादीनां रेतोन्तानामाहुतीनां मध्ये रेतोलक्षणा पञ्चमाहुति-निर्दिष्टा तस्यामप्शब्दवाच्याः सूक्ष्मभूताः पुरुषशब्देनाभिलप्या भवन्ति । तैर्लब्धदेहः प्रत्यगात्मा पुरुषनामवान् भवतीति यावत् । वैराग्यार्थ-मागमनं निरूप्य गर्भवासादिदुःखञ्च निरूपयति । स इति । स उल्वेन जरायुणाऽवृतो गर्भस्थो जीवोनव दश वा मासान् यावत् स्थातव्यं तावद्वा अन्तर्मातुः कुक्षौ शयित्वाऽथ जायते ॥ १ ॥

**स जातो यावदायुषं जीवति तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति यत एवेतो यतः सम्भूतो भवति ॥ २ ॥**

इति पञ्चमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

स जातो जन्तुर्यावदायुषं जीवति । अथ यदा म्रियते तदा तं प्रेतं मृतं दिष्टं सादृष्टमितो लोकादग्नय एव हरन्ति । प्रकृतहोतारो देवाः । अग्निं विशिनष्टि । यत इति । यत एव द्युपर्जन्यवृष्ट्याख्याग्नेः सकाशाद्भूलोकमितः प्राप्तस्तत्र च यतः पुरुषयोषाग्नेः सम्भूतस्तस्मा एवाग्नये हरन्तीत्यर्थः ॥

इति पञ्चमाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

**तद्य इत्थं विदु ये चेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिष-मभिसम्भवन्त्यर्चिषोऽहरन्ह आपूर्यमाण पक्षमापूर्यमाण पक्षाद्यान् षडुदङ्ङेति मासांस्तान् ॥ १ ॥**

**मासेभ्यः सम्वत्सरं सम्वत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयत्येष देवयानः पन्था इति ॥ २ ॥**

इदानीं प्रथमतृतीयप्रश्नयोरुत्तरमाह। तदिति। तत् तस्मात् काम्यकर्मणो गमनागमनहेतुत्वात्तत्र विरक्ता ये इत्थं पञ्चाग्निविद्योक्तरीत्या देहादिलक्षणप्रकृतिविविक्तया ब्रह्मात्मकत्वं सर्वंविदु ये चेमेऽरण्ये-मनोहरप्रदेशे स्थित्वा श्रद्धां पुरस्कृत्य तपःप्रभृतिनिवृत्तकर्मानुतिष्ठन्ति अथवा वाजसनेयके समानप्रकरणे 'श्रद्धां सत्यमुपासत' इति श्रूयते तत्र सत्यशब्दस्य ब्रह्मपरत्ववदत्रापि तपश्शब्दो ब्रह्मवाचकस्तेन तपश्शब्दितं ब्रह्मोपासते तेऽर्चिषमर्चिरभिमानिनं देवतामभिसम्भवन्ति प्रतिपद्यन्ते। १अप्रतीतकालम्बनादिति सूत्रे पञ्चाग्निविदोऽर्चिरादिनागतस्य ब्रह्मप्राप्तिर्भाषिता श्रीबादरायणेन भगवता। व्याख्यातञ्चैतत् भाष्यकारैः श्रीश्रीनिवासाचार्य्यचरणैः श्रीवेदान्तकौस्तुभे तद्यथा—अर्चिरादिक आतिवाहिकगणः। अप्रतीतकालम्बनान्नयतीति भगवान् बादरायणो मन्यते ये नामादिकं ब्रह्मदृष्ट्योपासते तद्व्यतिरिक्तान्यपरम्। ब्रह्मोपासीनान् प्रकृतिवियुक्तं प्रत्यगात्मस्वरूपं ब्रह्मात्मकतयोपासीनानुभयविधान् नयति नवा परब्रह्मोपासीनानेव नयतीति नियमः। कुत उभयथा दोषात्। तत्र कार्य्यब्रह्मोपासीनान्नयतीतिवादरिपक्षे 'एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते" इत्यादिश्रुतिविरोधरूपदोषप्रसङ्गात्। परब्रह्मोपासीनान्नयतीति-जैमिनिपक्षे 'तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धा तप इत्युपासते तेऽर्चिषमभिसम्भवन्तीति पञ्चाग्निविदामर्चिरादिगतिबोधकश्रुतिविरोधप्रसङ्गात्। अत उभयविधान्नयतीत्याह। तत्क्रतुश्चेति। यथाक्रतुरस्मिंल्लोके भवतीति परब्रह्म क्रतुः परं ब्रह्म प्रतिपद्यते परब्रह्मात्मकतया प्रकृतिवियुक्तप्रत्यगात्मकक्रतुस्तादृशस्वरूपप्राप्तिपूर्वकपरमात्मानं प्रतिपद्यत इति ॥१॥

अर्चिषोऽहरन्ह इत्यादिपूर्ववत्। तत्पुरुषः। वैद्युतपुरुष. अमानवः। असंसारी ब्रह्मलोकादागत्य ब्रह्मलोकं प्रापयतीत्यर्थः ॥२॥

**अथ य इमे ग्राम इष्टापूर्त्ते दत्तमित्युपासते धूममभिसम्भवन्ति धमाद्रात्रिं रात्रेरपरपक्षमपरपक्षाद्यान्षडुदक्षिणैति मासांस्तान्नैते सम्वत्सरमभिप्राप्नुवन्ति ॥ ३ ॥**

१ ब्र० सू० ४। ३। १४।

**मासेभ्यः पितृलोकं पितृलोकादाकाशमाकाशाच्चंद्रमसमेष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति ॥४॥**

**तस्मिन् यावत्सम्पातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमोभूत्वाऽभ्रं भवति ॥ ५ ॥**

देवयानं ससाधनं निरूप्य पितृयाणंससाधनं निरूपयति । अथेति। य इमे काम्यकर्मिणो ग्रामे इष्टापूर्ते यजनखाते दत्तं दानम्। इतिशब्दः प्रभृत्यर्थः । पितृश्राद्धादिकमुपासते । आतिष्ठन्ति ते धूमं धूमदेवताकं लोकमभिसम्भवन्ति प्राप्नुवन्ति । धूमाद्रात्रिं रात्र्यभिमानिदेवताम् । रात्रेऽपरपक्षं कृष्णपक्षाभिमानिदेवतामपरपक्षात यान् षण्मासान् दक्षिणा दक्षिणतः एत्यादित्यस्तान् मासान् दक्षिणायनदेवतालोकं प्राप्नुवन्ति ततः सम्वत्सरगमनं निषेधति नैत इति ॥ ३ ॥

तर्हि ततः क्व गच्छन्तीत्यत आह। मासेभ्य इति । मासेभ्यः दक्षिणायनसंज्ञकेभ्यः पितृलोकं पितृलोकादाकाशलोकमाकाशाच्चन्द्रमसं प्राप्नुवन्ति । काम्यकर्मिगम्यं चन्द्रमसमेव विशिनष्टि। एष इति । एषः चन्द्रः सोमलताभिमानीत्यर्थः तदेव देवानामन्नमतस्तं चन्द्रं भक्षयन्ति। लताभिमानित्वेनेयमुक्तिः। अन्नविवक्षया तदिति नपुंसकप्रयोगः ॥ ४ ॥

वेत्थ यथासौ लोको न संपूर्यते इति प्रश्नस्योत्तरमाह । तस्मिन्निति । तस्मिंश्चन्द्रलोके कर्मिणो यावत्सम्पातमुषित्वाथऽकर्मक्षये एतमेवाध्वानं पुनरावर्त्तन्ते। इदानीं वेत्थ यथा पुनरावर्त्तन्त इत्यस्योत्तरं वदन्नेतमेवेत्युक्तं विवृणोति यथेति। यथा येन मार्गेण स्वयमितं चन्द्रलोकं प्रति प्राप्तं तेनैवाध्वना पुनरावर्त्तन्त इत्यर्थः। गतेनैव मार्गेणागमनेऽनतिक्लेशेन न स्वर्गेतिवैराग्यं स्यादित्यतो मार्गान्तरं निरूपयति आकाशमित्यादिना। चन्द्रलोकादागच्छन् आकाशमाप्नोति आकाशाद्वायुमाप्नोति वायुस्थो भूत्वा धूमस्थो भवतीत्यर्थः ॥ ५ ॥

अभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति त इह व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्तेऽतोवै खलु दुर्निष्प्रपतरं यो योह्यन्नमत्ति यो रेतः सिंचति तद्भूय एव भवति ॥ ६ ॥

तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन् ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणाभ्यास अभ्याशोह यत्ते कपूयां योनिमापद्येरन्श्वयोनिंवा सूकरयोनिं वा चाण्डालयोनिं वा ॥ ७ ॥

अथैतयोः पथोर्न कतरेणे च न तानीमानि क्षुद्रमिश्राण्यसकृदावर्तीनि भूतानि भवन्ति जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते तस्माज्जुगुप्सेत यदेषः श्लोकः ॥८॥

अभ्रमिति आपो बिभ्रतीत्यभ्रं मूलविभुजादित्वात् कः। जलधारणावस्थासम्पन्नोऽभ्रशब्दार्थः । मिहसेचन धातोः पचाद्याजीते अप्रत्यये न्यंकादित्वात् कत्वे मेध इति निष्पन्नं भवति । मेघशब्देन वर्षोन्मुखोऽवस्थानिर्दिश्यते अतस्तयोर्भेदः । मेघसंश्लिष्टो भूत्वा वर्षधारारूपेण भूमौ पततीतिभावः । ते कर्मिणः इह लोके केचिद् व्रीहियवाः केचिदौषधिवनस्पतयः केचित्तिलमाषा । इति शब्दोऽन्योपलक्षणार्थः, जायन्ते । अन्याधिष्ठितेषु व्रीह्यादिषु संश्लेषमात्रम् सूत्रितञ्च श्रीव्यासाचार्य्यैः। "अन्याधिष्ठते पूर्ववदभिलापादि"ति । अतो व्रीह्यादिभावानन्तरं दुर्निष्प्रतरं दुःखनिष्क्रमणमतिचिरेण निर्गमनमितियावत्। तदेव विशदयति । य इति । यो यः पुरुषोऽन्नमत्ति यश्चरेतः सिञ्चति तद्भूय एव भवति तमेवानुप्रविशति ॥६॥

तत् ततस्तत्र कर्मिषु रमणीयचरणाः । चर्य्यते चरणं कर्म रमणीयकर्माणः भुक्तशिष्टपरिपक्वसुकृतकर्मयुता भवन्तीत्यर्थः । आपद्येरन्नितियावत् तद्याभ्याशः कालसामीप्येनैवेत्यर्थः । स्वर्गाल्लोकादर्वाक् प्राप्तो वत्सरात्पूर्वमेव तु । मातुः शरीरमाप्नोतीतिवचनात् । रमणीया-

योनिमित्युक्तं विशदमाह । ब्राह्मणयोनिमित्यादिना । अथेति समानम् । कपूयचरणा कुत्सितकर्माणः भुक्तशिष्टकर्मानुसारिजन्म प्राप्नुवति ॥ ७ ॥

नन्वस्तु ये विद्यामार्गा कर्ममार्गा वा तेषामुक्तरीत्या ब्रह्मचन्द्र-प्राप्तिर्येषां तदुभयमपि नास्ति । तेषां कागतिरित्यत आह । अथेति । एतयोरुक्तयोः पथोर्विद्यामार्गकर्ममार्गयोर्मध्ये यान्येकतरेणापि यथा नगच्छन्ति तानीमानि क्षुद्रमिश्राणि अल्पानि सुखदुःखमिश्राणि । असकृदावर्तिनि सदागत्यादिमन्ति जायस्व म्रियस्व पुनः पुनर्जायन्ते म्रियन्ते च । इत्येतत् स्वर्गापवर्गयोरन्यतृतीयस्थानमित्यर्थः । ततश्च यथा सौ लोको न पूर्यत इति प्रश्नोत्तरं जातमित्याह । तेनेति केषा-ञ्चितत्र गमनाभावेन तद्गतानामपि पुनरावृत्तेरसौलोको न सम्पूर्य्यते । यदर्थं त्यागादिनिरूपणं तदाह । तस्मादिति । यस्मादेवं ज्ञानमार्गा-दन्यत्र गतागतादिलेशस्तस्मात्तत्र जुगुप्सेति । विरक्तोभवदित्यर्थः ॥८॥

**स्तेनो हिरण्यस्य सुरां पिबंश्च गुरोस्तल्पमावसन् ब्रह्महा चैते पतन्ति चत्वारः पञ्चमश्चाचरं स्तैरिति ॥ ९ ॥**

**अथ ह य एतानेवं पञ्चाग्नीन्वेद न सह तैरप्याचरन् पाप्मा लिप्यते शुद्धः पूतः पुण्यलोको भवति य एवं वेद य एवं वेद ॥ १० ॥**

इति पञ्चमाध्यायस्य दशमः खण्डः ॥ १० ॥



तमेव श्लोकं पठति । स्तेन इति एतेश्चत्वारः पतन्ति पञ्चमश्च तैः सह चरन्पतति ॥ ९ ॥

किन्तत इत्यत आह । अथेति । य एतानेवं पञ्चाग्नीन् वेद सतैश्च पातकिभिः सहाचारन्नपि पाप्मना न लिप्यते न केवलमेतावत् । य एवं वेद स शुद्धः पूतः । अन्तर्वहिश्च शुद्धः स्वयं शुद्धः पाव

यत्यन्यानिति । पूत इति वा । निवृत्तः पुण्यसाध्योलोकप्राप्यो यस्या सौ पुण्यलोकोभवति । द्विरुक्तिः समस्तप्रश्ननिर्णय प्रदर्शनार्था ॥१०॥

इति पञ्चमाध्यायस्य दशमः खण्डः ॥१०॥

---

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणं लिख्यते ननु परब्रह्मवाचकस्य ब्रह्मशब्दस्य नपुंसकस्य हिरण्यगर्भपरत्वं न सम्भवतीत्यत्राह ।

सामीप्यात्तु तद्व्यपदेशः ॥ ब्र० सू० । ४ । ३ । ८ ॥

यो ब्रह्माणं विदधातीति श्रुतेर्हिरण्यगर्भस्य कार्यब्रह्मणः प्रथमजत्वेन कारणभूतब्रह्मसामिप्यात्तु स एतान् ब्रह्मगमयतीति कारणवाचकेन नपुंसकलिङ्गेन व्यपदेश उपपद्यते नन्वर्चिरादिमार्गो न हिरण्यगर्भलोकविषयः । एष देव पथो ब्रह्मपथ एतेन प्रतिपद्यमानाः इमं मानवमावर्त्तं नावर्त्तन्ते इत्यर्चिरादिमार्गेण गतस्यापुनरावृत्तिश्रवणात् । हिरण्यगर्भस्य द्विपरार्द्धावसानेन शान्तं प्राप्तस्य पुनरावृत्तेरवर्जनीयत्वाच्चेत्यत आह ।

कार्यात्यये तदध्यक्षेण सहातः परमविधानात् । ब्र० सू० ।४।३।६॥

कार्यात्यये हिरण्यगर्भलोकनाशे सति तदध्यक्षेण तल्लोकनाथेन विद्यावता सह तत्रापि विद्याधिकारात्स्वयम लब्धविद्योऽतः कार्यब्रह्मणो हिरण्यगर्भात् परं मूलभूतं ब्रह्म प्राप्नोति कस्मात् । अभिधानात् । "तयोद्ध्र्वमायन्नमृतत्वमेतीति" । ते ब्रह्मलोके परान्तकाले परामृताःपरिमुच्यन्ति सर्वे" इति चाभिधानम् ।

स्मृतेश्च । ब्र० सू० । ४ । ३ । १० ॥

ब्रह्मणा सह ते सर्वे सम्प्राप्ते प्रतिसञ्चरे ॥ परस्यान्ते कृतात्मनः प्रविशन्ति परंपदमिति स्मृतेश्चोक्तार्थोऽवगम्यते । अतिवाहिकगणः परब्रह्मोपासोनान् परं ब्रह्म गमयतीतिजैमिनिराचार्यो मन्यते । एतान् ब्रह्म गमयतीति ब्रह्मशब्दस्य परस्मिन् ब्रह्मणि मुख्यत्वात् ।

दर्शनाच्च । ४ । ३ । १२ ॥

परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । इति परप्राप्यत्वदर्शनाच्च । ननु प्रजापतेः सभां वेश्मप्रतिपद्य इतिश्रुत्या कार्यब्रह्मपरत्वमेव पूर्वश्रुतस्य ब्रह्मशब्दस्येतिचेत्तत्राह ।

नच कार्ये प्रतिपत्त्यभिसन्धिः ॥ ब्र० सू० । ४ । ३ । १३ ॥

नायं कार्यब्रह्मविषयः। प्रतिपत्त्यभिसन्धिः। अपितु परब्रह्मविषयः। नारूपयोर्निर्वहितेतिपरस्यैवाधिकारात् यशोऽहं सम्भवामि ब्राह्मणानामिति तस्याभिसन्धातुः सर्वविद्याविमोकसर्वात्तर्भावाभिसन्धानात् ।

अप्रतीकालम्वनान्नयतीति वादरायण उभयथा दोषात्तत्क्रतुश्च । ब्र० सू० । ४ । ३ । १४ ॥

अर्चिरादिगणः प्रतीकालम्वनव्यतिरिक्तान् परब्रह्मोपासकान् ब्रह्मात्मकतयाऽक्षरस्वरूपोपासकांश्च परं ब्रह्म नयति । कुतः । उभयथादोषात् । कार्योपासकान्नयतीत्यत्र । "अस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्येत्या" दिश्रुतव्याकोपः स्यात् परोपासीनानेव नयतीति नियमे तु । तद्य इत्थं विदुर्येचेमेऽरण्ये श्रद्धां तप इत्युपासते तेऽर्चिषमभिसम्भवन्तीतिश्रुतिव्याकोपः स्यात् । तस्माद्यथाक्रतुरस्मिंल्लोके पुरुषो भवति तथेतः प्रेत्य भवतीत्यादिश्रुतेस्तत्क्रतुस्तथैव प्राप्नोतीति सिद्धान्तो भगवान् वादरायणो मन्यत इति सूत्रार्थः । इतिस्थितम् ॥

**प्राचीनशाल औपमन्यवः सत्ययज्ञः पौलुषिरिन्द्रद्युम्नो भाल्लवेयो जनः शार्कराक्ष्यो बुडिल आश्वतराश्विस्ते हैते महाशाला महाश्रोत्रियाः समेत्य मीमांसां चक्रुः को न आत्मा किं ब्रह्मेति ॥ १ ॥**

**ते ह सम्पादयांचक्रुरुद्दालको वै भगवन्तोऽयमारुणिः सम्प्रतीममात्मानं वैश्वानरमध्येति तं हन्ताभ्यामागच्छामेति तꣳहाभ्याजग्मुः ॥ २ ॥**

**सह सम्पादयांचकार प्रक्ष्यन्ति मामिमे महाशाला महाश्रो-**

त्रियास्तेभ्यो न सर्वमिव प्रतिपत्स्ये हन्ताहमन्यमभ्यनुशासानीति ॥ ३ ॥

**तान् होवाचाश्वपतिर्वै भगवन्तोऽयं कैकेयः सम्प्रतीतमात्मानं वैश्वानरमध्येति तᳬं हन्ताभ्यागच्छामेति तᳬं हाभ्याजग्मुः ॥ ४ ॥**

एवं परब्रह्मविषयापञ्चाग्निविद्योक्ता सम्प्रति तद्विषयामेव वैश्वानरविद्यामाख्यायिकया दर्शयति । प्राचीनशाल इत्यादिखण्डचतुर्दशकेन । प्राचीनशालो नामतः । उपमन्योरपत्यमौपमन्यव इत्येकः । सत्ययज्ञो नामतः । प्रलुषस्यापत्यं पौलुषिरित्यपरः । इन्द्रद्युम्नो नामतः । भल्लवेरपत्यं भाल्लवेयइत्यन्यः । जनो नामतः । शर्कराक्षस्यापत्यं शार्कराक्ष्य इत्येकः। बुडिलो नामतः । अश्वतराश्वस्यापत्यमाश्वतराश्विरित्यपरः । ते हैते पञ्चमहाशालाः सम्यक्प्रत्यब्दयज्ञकृतो महाश्रोत्रियाः सम्यग्वेदवेदार्थविदः समेत्य मिलित्वा मीमासांचक्रुः विचारं चक्रुः । नोऽस्माकमुपास्यः आत्मा वैश्वानराख्यः किंलक्षणकः ब्रह्म च ॥ १ ॥

एवमात्मसु परस्य विचारेणापि विशेषनिर्णयमलभमाना स्तेविशेषनिर्णयायोद्दालकं सम्पादयांचक्रुः सम्पादनप्रकारमेवाह--उद्दालक इति । हे भगवन्तः । उद्दालको नामतः । अरुणस्यापत्यमारुणिः । सम्प्रतीदानीमस्मदभिमतमात्मानं वैश्वानरमध्येति । अधिकं जानाति । तं हाभ्यागच्छामेत्युक्त्वा तमुद्दालकं प्रत्याजग्मुः ॥ २ ॥

तदा स उद्दालकस्तदागमनप्रयोजनं बुद्ध्वा सम्पादयांचकारैतेषामन्यमुपदेष्टारं स्वयमेव कुतो नोक्तमित्यत आह । प्रक्ष्यन्तीति । इमे महाशालात्वादिगुणाः मां प्रक्ष्यन्ति तेभ्यो वक्तुं सर्वमेव तत् पृष्टं न प्रतिपत्स्ये हन्ताऽहमन्यमेषामनुशासकमनुशासानीति विचिन्त्य ॥३॥

तान् हो वाच । हे भगवन्तो श्वपतिर्नामतः केकेयः केकेयदेशा-

धिपतिः सम्प्रतीममात्मानं वैश्वानरमध्येति । तंह्यभ्यगच्छामेति । एव-मुक्तास्ते अश्वपतिं प्रत्याजग्मुर्ह ॥ ४ ॥

**तेभ्यो ह प्राप्तेभ्यः पृथगर्हाणि कारयांचकार सहप्रातः सञ्जिहान उवाच न मे स्तेनो जनपदे न कदर्य्यो न मद्यपो नानाहिताग्निर्नाविद्वान्न स्वैरी स्वैरिणी कुतो यक्ष्यमाणो वै भगवन्तोऽहमस्मि यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्त इति ॥ ५ ॥**

**ते होचुर्येन हैवार्थेन पुरुषश्चरेत्तᳶ हैव वदेदात्मानमेवेमं वैश्वानरᳶ संप्रत्यध्येषि तमेव नो ब्रूहीति ॥ ६ ॥**

**तान् होवाच प्रातर्वः प्रतिवक्तास्मीति ते ह समित्पाणयः पूर्वाह्णे प्रतिचक्रमिरे तान्हानुपनीयैवैतदुवाच ॥ ७ ॥**

इति पञ्चमाध्यास्यैकादशः खण्डः ॥ ११ ॥



तेभ्यो ह प्राप्तेभ्यो ब्राह्मणेभ्यः पृथक् पृथक् अर्हाणि । अर्हणानि कारयांचकार । स राजा परेद्युः प्रातः सञ्जिहानः शयनादुत्तिष्ठन्नुवाच । युष्मदागमने किं कारणं न तावत्स्तेनादि-भयम् । तेषां मद्राष्ट्रेऽभावादित्याह । नेति । कदर्योऽदाता सति विभवे यथाकालमाचारहीनो वा । स्वैर्यभावे स्वैरिणी कुतः । धनार्थिनश्चेदास्यामीत्याह । यक्ष्यमाण इति । हे भगवन्तो यक्ष्यमाणोऽस्मि वै । तत्र यावदेकैकस्मा ऋत्विजे धनं दास्यामि तावद्भगवद्भ्यो दास्यामि वसन्तु भगवन्तः । इत्युवाचेति सम्बन्धः ॥ ५ ॥

एवमुक्तास्ते होचुः येनैवार्थेन ज्ञानादिरूपेण साधितेनेतिशेषः पुरुषश्चरेत् गच्छेन्मोक्षादिकं तमेव वदेत् । यद्वा येनैवार्थेन प्रयोजनेन साधितेनागतः पुरुषश्चरेत् परावृत्त्य स्वग्रामादिकं गच्छेत तदेव वदेदित्यर्थः । तर्हि किं भगदागमने किं प्रयोजनमित्यत आह— आत्मानमिति ॥ ६ ॥

तान् होवाच राजा प्रातर्वः प्रतिवक्तास्मीति ते षट्ब्राह्मणाः समित्पाणयः ऽपरेद्युः पूर्वाह्णे राजानं प्रति चक्रमिरे। तान् ऽनुपनीय-शिष्यतयोपनयनमकारयित्वैवैतद्वक्ष्यमाणमुवाच ब्राह्मणानां क्षत्रिया-दुत्तमत्वात् ॥ ७॥

इति पञ्चमाध्यायास्यैकादशः खण्डः ॥ ११ ॥



**औपमन्यव कं त्वमात्मानमुपास्स इतिदिवमेव भगवो-राजन्निति होवाचैष वै सुतेजा आत्मा वैश्वानरो यं त्वमात्मान-मुपास्से तस्मात्तव सुतं प्रसुतमासुतं कुले दृश्यते ॥ १ ॥**

**अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं संकुले य एतमेवमात्मानं वैश्वानरमुपास्ते मूर्धा त्वेष आत्मन इतिहोवाच मूर्धा ते ऽव्यपतिष्यद्यन्मां नाग-मिष्य इति॥ २ ॥**

इति पञ्चमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

हे औपमन्यव त्वमात्मानं वैश्वानरं कं किन्नामकमुपास्से हभगवो भगवन् राजन् दिवमेव क्रीडात्मकत्वादद्‌वाख्यं स्वर्गाधारमेवात्मानं वैश्वानरमुपास्स इति होवाच । वक्ष्यमाणविशेषव्यावृत्यर्थमेवशब्द । स्तत्र स्वयं विशेषमाह । एष इति। यमात्मानं वैश्वानरं त्वमुपास्से एषः द्युस्थो वैश्वानरो विश्वानरसम्वन्धित्वाद्वैश्वनराख्यः, आत्मा सुतेजाः शोभनं तेजो यस्य सः सुतेजाः ॥ सुतेजस्त्वगुणसम्बन्धि-त्वेन वैश्वानरस्योपासनायाः फलं वक्ति तस्मादिति। द्युस्थवैश्वानरोपास-कत्वादेव तव कुले स्वर्गप्राप्त्यर्थं सोमरूपं द्रव्यं सुतं प्रसुतमासुतम् ॥ सवनत्रयकथनमेतत् । एकाहादिरूपो ज्योतिष्टोमादिरहर्गणस्तत्र सुतं सोमरूपं लताद्रव्यमहीने प्रसुतं सत्रे त्वा सुतमितिविवेकः" सुतेजस्त्व-गुणत्वेनोपास्तेः सुतादिफलकत्वमुपपन्नं भवति । सुतेजः सुतयोः सुशब्दमत्त्वेन साम्यादित्याशयः ॥ १ ॥

अन्नमत्सि दीप्ताग्निः सन् प्रियं पश्यति पुत्रादिकं पश्यसि एवमन्यस्यापि वैश्वानरोपासकस्य फलमाह । योऽधिकारी एतमात्मानं वैश्वानरमुपास्ते । सोऽपि लौकिभोग्यमनुभवति प्रियं पुत्रादिकं पश्यति । अस्योपासकस्य कुले ब्रह्मवर्चसं भवति । विशेषान्तरमाह । मूर्धा त्वेषः । एषः द्युलोकपरिच्छिन्नात्मा वैश्वानरस्यात्मनो मूर्द्धा अवयवभूतः, नतु स एव वैश्वानरात्मा । यद्यदि मां प्रति, एतदर्थनिर्णयार्थं नागमिष्यस्तर्हि वैश्वानरमूर्द्धारूपावयवभूते द्युलोके सामस्त्येन वैश्वानरधियं कुर्वाणस्य तव विपरीतज्ञानेन मूर्धा शिरो व्यपतिष्यत् विपतितमभविष्यत् । इतिशब्द औपमन्यवोपदेशसमाप्त्यर्थः ॥ २ ॥

इति पञ्चमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

**अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स, इत्यादित्यमेव भगवोराजन्निति होवाचैष वै विश्वरूप आत्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्तव वहु विश्वरूपं कुले दृश्यते ॥ १ ॥**

**प्रवृत्तोऽश्वतरीरथे दासीनिष्कोऽत्स्यन्नं पश्यति प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते चक्षुष्ट्वेतदात्मन इति होवाचान्धो भविष्यद्यन्मां नागमिष्य इति ॥ २ ॥**

इति पञ्चमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

अथौपमन्यवोपदेशानन्तरं सत्ययज्ञं पौलुषिं प्रत्युवाचेत्यादिकं समानम् । प्राचीनयोग्य । अनादियोग्यवतावन् । विश्वरूपः विश्वं रूपं प्रकाश्यं यस्य स विश्वरूपः । सवितुर्निखिलस्य विश्वस्य प्रकाशकत्वेन विश्वरूपत्वम् । तदुपासनात्तववहुविश्वरूपं

विश्वदीप्तं पुत्ररत्नादिकं कुले दृश्यते । अश्वतरीभिर्युक्तो रथः । अश्वतरीरथः त्वामनुवृत्तः ।। दासीभिर्युक्तो निष्कः हारः दासीनिष्कः त्वामनुवृत्तः । चक्षुर्वैश्वानरस्य तु सविता कार्त्स्न्येनोपासनादन्धोऽभविष्यश्चक्षुहीनोऽभविष्यो यन्मां नागमिष्ये ।। १२ ।।

इति पञ्चमाध्यायस्य त्रयोदशः खण्डः ।। १३ ।।

---

**अथ होवाचेन्द्रद्युम्नं भाल्लवेयं वैयाघ्रपद्य कमात्मानमुपास्स इति वायुमेव भगवो राजन्निति होवाचैष पृथग्वर्त्मात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वां पृथग्वलय आयान्ति पृथग्रथश्रेणयोऽनुयन्ति ।। १ ।।**

**अत्स्यन्नं पश्यसि प्रियमत्त्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते प्राणस्त्वेष आत्मन इति होवाच प्राणस्त उदक्रामिष्यद्यन्मां नागमिष्य इति ।। २ ।।**

इति पञ्चमाध्यायस्यचतुर्दशः खण्डः ।। १४ ।।



वैयाघ्रपद्य, व्याघ्रपाद्गोत्रापत्यम् । वायुं पृथग्वर्त्मा । पृथक् विलक्षणः वर्त्म मार्गो यस्य स तथोक्तः । वायोर्नानागतिमत्त्वात् पृथग्वर्त्मत्वम् । पृथक् नानादिग्वर्तिनः वस्त्रान्नादिरूपावलयः विलक्षणपूजासाधनानि आयान्ति रथपङ्क्तयोऽपि त्वामनुयान्ति।।१।।

अत्स्यन्नमित्यादिकं पूर्ववद् व्याख्येयम् । प्राणस्त्वेष आत्मन-इति होवाच, प्राणस्ते तवोदक्रामिष्यदुत्क्रान्तोऽभविष्यद्यन्मां नागमिष्य इति ।। २ ।।

इति पञ्चमाध्यायस्य चतुर्दशः खण्डः ।। १४ ।।

---

**अथ होवाच जनꣳशार्कराक्ष्य कं त्वमात्मानमुपास्स इत्याकाशमेव भगवो राजन्निति होवाचैष वै बहुल आत्मा वैश्वानरो यं**

त्वमात्मानमुपास्से तस्मात्त्वं वहुलोऽसि प्रजया धनेन च ॥१॥

अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेव मात्मानं वैश्वानरमुपास्ते सन्देहस्त्वेष आत्मन इति होवाच सन्देहस्तेव्यशीर्यद्यन्मां नागमिष्य इति ॥२॥

इति पञ्चमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

अथ होवाच जनमित्यादिप्रागुक्तरीत्यावसेयम् । एष वै वहुल-आत्मा । आकाशस्य सर्वगतत्वेन वहुलत्वम् । प्रजया च धनेन च वहुलः प्रभूतोऽसि ॥ १ ॥

सन्देहस्त्वेष सन्देहो मध्यमं देहं वैश्वानरस्य आकाशस्य सर्वगतत्वेन वहुलत्वाद्देहस्य परिच्छिन्नत्वेन तदभावात् कथमाकाशं वैश्वानरस्य शरीरमिति संदिहमानत्वात् सन्देह इत्युच्यते ते तव शरीरं व्यशीर्यत् विशीर्णोऽभविष्यत् यद्यन्मां नागमिष्य इति ॥ २ ॥

इति पञ्चमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

अथ हो वाच वुडिलमाश्वतराश्वि वैय।घ्रपद्य कं त्वमात्मान-मुपास्स इत्यप एव भगवो राजन्निति होवाचैष वै रयिरात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं रयिमान् पुष्टिमानसि ॥१

अत्स्यन्नंपश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य व्रह्म-वर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते वस्तिस्त्वेष आ-त्मन इति होवाच वस्तिस्ते व्यभेत्स्यद्यन्मां नागमिष्य इति ॥२॥

इति पञ्चमाध्यायस्य षोड़शः खण्डः ॥ १६ ॥

---

एव वै रयिरात्मा वैश्वानरो धनरूपः । अद्भ्योऽन्नं ततो धनम् । अपशब्देन तत्साधनं लक्ष्यते । आयुर्वै घृतमितिवत् । तत्रायुश्श-

स्यायुर्वर्द्धके लाक्षणिकत्वात् तद्वदत्रापीति यावत् । तदुपासनात् धनवांस्तुपुष्टिमांश्च । शरीरस्य पुष्टिरन्ननिवन्धना । वस्तिर्मूत्रसंस्थानम् । मूत्राशयो धनुर्वक्रो वस्तिरित्यभिधीयत इतिवचनात् । व्यस्तिस्ते व्यभेत्स्यत् भिन्नोऽभविष्यद्यन्मां नागमिष्य इति ॥ २ ॥

इति पञ्चमाध्यायस्य षोड़शः खण्डः ॥ १६ ॥

---

अथ होवाचोद्दालकमारुणिं गौतम कं त्वमात्मानमुपास्स इति पृथिवीमेव भगवो राजन्निितिहोवाचैष वै प्रतिष्ठात्मा वैश्वानरो यं त्वमात्मानमुपास्से तस्मात्त्वं प्रतिष्ठितोऽसि प्रजया च पशुभिश्च ॥ १ ॥ अत्स्यन्नं पश्यसि प्रियमत्यन्नं पश्यति प्रियं भवत्यस्य ब्रह्मवर्चसं कुले य एतमेवमात्मानं वैश्वानरमुपास्ते पादौ त्वेतावात्मन इति होवाच पादौ ते व्यम्लास्येतां यन्मां नाऽऽगमिष्य इति ॥ २ ॥

इति पञ्चमाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥

---

एष वै प्रतिष्ठा पादौ वैश्वानरस्य । अगानां जङ्गमानामोकस्त्वात् पृथिव्याः प्रतिष्ठात्वम् । पादौ ते व्यम्लास्येतां विम्लानावभविष्येतां भज्येतामितियावत् यन्मां नागमिष्ये ॥ १ । २ ॥

इति पञ्चमाध्यायस्य सप्तदशः खण्डः ॥ १७ ॥



तान् होवाचैते वै खलु यूयं पृथगिवेममात्मानं वैश्वानरं विद्वाꣳसोऽन्नमात्थ यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते, स सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मस्वन्नमत्ति ॥ १ ॥

एवं प्रत्येकमुपदिश्य तान् ब्राह्मणान् होवाच एते वै खलु यूयमिममात्मानं वैश्वानरं विद्वांसो भिन्नभिन्नतयोपासीनास्तानुसारेण लौकिकभोगं भुञ्जाना अन्नमात्थैतत् प्रियं पश्यत्यस्योपलक्षणम्। अभिविमानं सर्वाभिव्याप्ततया विगतमानं विश्वेषां नराणां नेता एतमात्मानं प्रादेशमात्रं प्रादेशैर्द्युमूर्धादिभिः पृथिवीपादान्तैर्मीयते ज्ञायते, इति प्रादेशमात्रं द्युलोकादित्यवाय्वाकाशाप्पृथिवीषु प्रदेशेषु परिच्छिन्नं वैश्वानरं य उपास्ते सर्वलोकसर्वभूतसर्वात्मवर्त्तिब्रह्मरूपमन्नमत्ति। येतु मुमुक्षवः वैश्वानरं परमात्मानमपरिच्छिन्नत्वसर्वनियन्तृत्वसर्वात्मकत्वसर्वकारणत्वादिधर्मपुरस्कारेणोपासते तेषां फलन्तु विजातीयं भगवद्गुणानुभवोत्थं निरतिशयानन्दरूपं वाच्यं नतु कर्मवश्याः ये प्राणिनः प्रत्येकमनन्यसाधरण· मन्नं भुञ्जते तद्भोग्यं यदन्नं तस्य मुमुक्षुभिः हेयत्वेन परित्यक्तत्वात् तन्नात्र गृहीतुं शक्यते। अत्र वैश्वानरशब्दस्य योगिकवृत्त्या परमात्मनि रूढत्वात् स एवोपास्यतयाभिप्रेतः स च सर्वात्मकत्वेन विश्वस्मा· दभिन्नत्वं नरतीति नरः प्रोक्तः परमात्मा सनातनस्तस्य च सर्वात्मतया सर्वाभेदव्यपदेशार्हत्वात् विश्वश्चासौनरश्चेति सर्वकारणत्वं विश्वेषां नरो नेता सर्वनियन्तृत्वात् विश्वे वा नरा नियम्या यस्यासौ विश्वानरः नरे संज्ञायामिति दीर्घः। स एव वैश्वानरः। स्वार्थे तद्धितः। यद्येवं तदाऽपरिच्छन्नस्य परमात्मनो वैश्वानरस्य द्युलोकादित्यवाय्वाकाशाप्पृथिवीप्रदेशसम्बन्धित्वेन परिच्छिन्नत्वं कथमभिहितमिति शङ्का परिजिहीर्षुणा भगवता श्रीवादरायणेन सूत्रितम्। अभिव्यक्तेरित्याश्मरथ्य इति समन्वयाध्याये द्वितीयपादे। उपासकबुद्धौ सौकर्यलक्षणाभिव्यक्त्यर्थकतया प्रदेशमात्रत्वप्रतिपादनं, नतु परिच्छिन्नत्वमभिप्रेत्य तथोक्तं तत्रैवाभितो विगतमानत्वोक्तेः। इत्यश्मरथ्याचार्यो मन्यत इति सूत्रार्थः॥ एतत्तत्त्वमधिकं जिज्ञासितं चेत्तदावैश्वानराधिकरणेऽवसेयमित्यभिसन्धिः॥ प्रकतमनुसरामः॥

**तस्य ह वा एतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजाश्चक्षुर्विश्वरूपः प्राणः पृथग्वर्त्माऽऽत्मा संदेहो वहुलो वस्तिरेव**

**रयिः पृथिव्येव पादावुर एव वेदिर्लोमानिवर्हिर्हृदयं गार्हपत्यो-मनोऽन्वाहार्यपचन आस्यमाहवनीयः ॥ २ ॥**

इति पञ्चमाध्यायस्य अष्टादशः खण्डः ॥ १८ ॥



वैश्वानरस्य मूर्द्धा द्यौः पृथिव्यन्ता अवयवा तत्तन्नाम्ना ये उपास्यत्वेन-प्राङ्निर्दिष्टास्ते सर्वेऽप्युपासकेन स्वशरीरेऽनुसन्धातव्या इत्यतो तान्सम्पा-दयितुमाह ॥ तस्य हवेति । तस्य प्रकृतस्यैवैतस्यात्मनो वैश्वानरस्य मूर्धैव सुतेजा उपासकस्य मूर्द्धैव स परमात्मनः मूर्द्धभूताद्यौरित्यर्थः । चक्षुर्विश्व-रूपः । आदित्यः । प्राणः पृथग्वर्त्मा वायुरित्यर्थः । सन्देहो वहुलः । उपासकस्य मध्यदेह एव परमात्ममध्यदेहभूताकाशः । वस्तिरेव रयिः । अस्यवस्तिरेव तदवयवभूताआपः । पृथिव्येव पादौ । अस्य पादावेव पादभूतापृथिवी ॥ उपासकः स्वकीये देहे सर्वात्मकत्वेन वैश्वानरस्य परमात्मन अवयवाननुसंधाय स्वकीयान्युरो लोमहृद मनआस्यानि प्राणाहुत्याधारस्य वैश्वानरस्य वेदिवर्हिं गार्हपत्यान्वाहार्यपचनीयाहवनीयान-ग्निहोत्रस्योपकरणभूतान् परिकल्प्याप्राणाहुतेश्चाग्निहोतृत्वं परिकल्प्यैवं विधेन प्राणाग्निहोत्रेण परमात्मानंवैश्वानरमुपासयेदित्याशयेनाह-उर एव वेदीति। मनः प्रभृतीनां वेद्यादित्वोपदेशश्च प्राणाहुतेरग्निहोत्रसम्पत्त्यर्थमिति सम्प-त्तेरितिजैमिनिस्तथाहि दर्शयतीति सूत्रितम् । अस्योपासकस्योर एव वेदिः स्थण्डिलमात्रं तावन्मात्रस्याग्निहोत्रे उपयुक्तत्वात् । इतरस्य दर्शपौर्ण-मासाद्यङ्गत्वात् । उपासकस्य लोमानि वर्हिः वेद्यामास्तीर्यन्ते ये दर्भाः ते वर्हिश्शब्देनोच्यन्ते यथावेद्यां वर्हींषि आस्तीर्णा दृश्यन्ते तथोरसि लोमानि। हृदयं गार्हपत्यः हृदयकमलावच्छिन्नजाठराग्निर्गार्हपत्यः मन इन्द्रिया-वच्छिन्नजाठराग्निर्दक्षिणाग्निः । आस्यावच्छिन्नजाठराग्निराहवनीयः । हूयन्तेऽस्मिन्नित्याहवनीय इतिव्युत्पत्तेरित्यर्थः ॥

इति पञ्चमाध्यायस्य अष्टादशः खण्डः ॥ १८ ॥



तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमाहुतिं जुहुयात् प्राणाय स्वाहेति प्राणस्तृप्यति ॥ १ ॥

प्राणे तृप्यति चक्षुस्तृप्यति चक्षुषि तृप्यत्यादित्यस्तृप्यत्यादित्ये तृप्यति द्यौस्तृप्यति दिवि तृप्यन्त्यां यत्किञ्च द्यौश्चादित्यश्चाधितिष्ठतस्तत्तृप्यति यस्यानुतृप्तिं तृप्यति प्रजयापशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति पञ्चमाध्यायस्यैकोनविंशः खण्डः ॥ १६ ॥



होमशेषमेव वक्ति । तदिति । तत् तदा भोजनवेलायां यद्भुक्तमन्नं प्रथममागच्छेदास्यं प्रति तद्धोमीयं द्रव्यं स भुक्तायामाहुतिं प्रथमा जुहुयात् प्राणाय स्वाहेति मन्त्रेण । आहुतितृप्यानाह । प्राण इति । प्राणश्चक्षुरादित्यैकैवदेवता द्यौर्वायुपत्नी तृप्यति । दिवि तृप्यन्त्यां यत्किञ्चानन्दरूपं ज्ञानरूपञ्च ब्रह्म द्यौश्चादित्यश्चाधितिष्ठतः । हृदये पूर्वद्वारपत्वेन तद्ब्रह्म तृप्यति, एषां प्रियत्वात् । किन्तत इत्यत आह । तस्येति । तस्य ब्रह्मणस्तृप्तिमनुयजमानः प्रजादिभिः तृप्यति । तेजः शरीरस्थादीप्तिरुज्वलत्वं वा ब्रह्मवर्चसं वृत्तस्वाध्यायनिमित्तं तेजः । एवमुत्तरखण्डचतुष्टयं नेयम् ॥ २ ॥

इति पञ्चमाध्यायस्यैकोनविंशः खण्डः ॥ १६ ॥



अथ यां द्वितीयां जुहुयात्तां जुहुयाद्व्यानाय स्वाहेति व्यानस्तृप्यति ॥१॥ व्याने तृप्यति श्रोत्रं श्रोत्रे तृप्यति चन्द्रमास्तृप्यति चन्द्रमसि तृप्यति दिशस्तृप्यन्ति दिक्षु तृप्यन्तीषु यत्किञ्च दिशश्च चन्द्रमाश्चाधितिष्ठन्ति तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवसेनेर्चति ॥ २ ॥

इति पञ्चमाध्यायस्य विंशः खण्डः ॥ २० ॥



अस्यार्थः पूर्वदर्शितरीत्या व्याख्येयः । १ । २ ॥

इति पञ्चमाध्यायस्य विंशः खण्डः ॥ २० ॥

---

अथ तृतीयां जुहुयात्तांजुहुयादपानाय स्वाहेत्यपानस्तृप्यति ॥ १ ॥ अपाने तृप्यति वाक् तृप्यति वाचि तृप्यन्त्यामग्निस्तृप्यत्यग्नौ तृप्यति पृथिवी तृप्यति पृथिव्यां तृप्यन्त्यां यत्किञ्च पृथिवी चाग्निश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसाब्रह्मवर्चसेनेति ॥ २ ॥

इति पञ्चमाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

---

पृथिवीश्रीः । अधिष्ठितपश्चिमद्वारपत्वेन ॥ २ ॥

इति पञ्चमाध्यायस्यैकविंशः खण्डः ॥ २१ ॥

---

यां चतुर्थीं जुहुयात् तां जुहुयात्समानाय स्वाहेति समानस्तृप्यति ॥ १ ॥ समाने तृप्यति मनस्तृप्यति मनसि तृप्यति पर्जन्यस्तृप्यति पर्जन्ये तृप्यति विद्युत्तृप्यति विद्युति तृपन्त्यां यत्किञ्च विद्युच्च पर्जन्यश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं तृप्यति प्रजया पशुभिरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥२॥

इति पञ्चमाध्यायस्य द्वाविंशः खण्डः ॥२२॥

---

१ । २ ॥

अथ यां पञ्चमीं जुहुयात्तांजुहुयादुदानाय स्वाहेत्युदानस्तृप्यति ॥ १ ॥ उदाने तृप्यति त्वक् तृप्यति त्वचि तृप्यन्त्यां वायुस्तृप्यति वायौ तृप्यत्याकाशस्तृप्यत्याकाशे तृप्यति यत्किञ्च वायुश्चाकाशश्चाधितिष्ठतस्तत्तृप्यति तस्यानुतृप्तिं

तृप्यति प्रजया पशुरग्निरन्नाद्येन तेजसा ब्रह्मवर्चसेनेति ॥ २ ॥

इति पञ्चमाध्यायस्य त्रयोविंशः खण्डः ॥ २३ ॥

---

१ । २ ॥

स य इदमविद्वानग्निहोत्रं जुहोति यथाङ्गारानपोह्य भस्मनि जुहुयात्तादृक् तत्स्यात् ॥ १ ॥

अथ य एतदेवं विद्वानग्निहोत्रं जुहोति तस्य सर्वेषु लोकेषु सर्वेषु भूतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवꣳ हास्य सर्वे पाप्मानः प्रदूयन्ते य एतदेवं विद्वानग्निहोत्रं जुहोति ॥ ३ ॥

तस्मादुहैवं विद्यद्यपि चाण्डालायोच्छिष्टं प्रयच्छेदात्मनि हैवास्य तद्वैश्वानरे हुतꣳ स्यादिति तदेषश्लोकः ॥ ४ ॥

यथेह क्षुधिता बाला मातरं पर्युपासते । एवꣳ सर्वाणि भूतान्यग्निहोत्रमुपासत इत्यग्निहोत्रमुपासत इति ॥ ५ ॥

इति पञ्चमाध्यायस्य चतुर्विंशः खण्डः ॥२४॥

---

इति छान्दोग्योपनिषदि पञ्चमोध्यायः समाप्तः ॥ ५ ॥



एवं वैश्वानररूपं तद्विषयहोमप्रकारञ्च निरूप्य ज्ञानपूर्वहोम एवावश्यंभावीतिभावेन तदज्ञानेन होमेऽनर्थं तज्ज्ञानेन होमे फलं दर्शयति । स य इति । स प्रसिद्धो यः कश्चिदेवं वैश्वानरस्वरूपादिकमविद्वान् प्राणाग्निहोत्रं जुहोति तस्य तदाग्निहोत्राख्यं कर्म यथाङ्गारानपोह्य भस्मनि जुहुयान्मूर्खस्तादृक् स्यात् ॥ १ ॥

अथयोऽधिकारी । एतद्वैश्वानरस्वरूपमेवमुक्तरीत्या विद्वान् प्राणाग्नि होत्रं जुहोति । तस्य सर्वेषु लोकेषु स्थितेषु सर्वेषु भूतेषु तदन्तर्गतेषु सर्वेष्वात्मसु हुतं भवति ॥ २ ॥

ततः किमित्यतोऽनिष्टनिवृत्तिं फलमाह । तदिति । तन्नि-दर्शनम् । इषीकाया मुञ्जामध्यवर्त्तितृणस्य तूलञ्चाग्नौ प्रोतं द्रविष्टं प्रहूयेत परितप्तं भवेत् । भस्मीभवेत् एवं हास्य वैश्वानरोपासकस्य सर्वे पाप्मानः । प्रदूयन्ते विनश्यन्ति, ज्ञानमपरोक्षञ्चेत् सर्वेपाप्मानोऽनारब्धाः । परोक्षञ्चेद्यथायोग्यम्, तस्माद्वैश्वानरज्ञानस्य सर्वपापक्षयहेतुत्वादेव हैवंवित् । यद्यपि चाण्डालायस्मरणायोग्यायापि स्वोच्छिष्टं प्रयच्छेत्, तथापि न तत्तस्य पापहेतुः किन्तु तद्दत्तमुच्छिष्टमस्यचाण्डालस्यान्तर्यामिणि वैश्वानरे आत्मन्येव हुतं स्यात् । वैश्वानरज्ञानपूर्वं कृतमग्निहोत्रं सर्वलोकस्थसर्वभूतान्तर्यामितृप्तिकरमेत्येतत् श्लोकेन दृढयतितदिति ॥ ५ ॥

इति पञ्चमाध्यायस्य चतुर्विंशः खण्डः ॥ २४ ॥

---

अशेषरसिकचक्रचूडामणिश्रीस्वामिहरिदासपदाश्रिताश्रितानुगामोलकरामविदुषासंगृहीतायामुपनिषत्प्रकाशिकाटीकायां ॥

पञ्चमोऽध्यायः ॥ ५ ॥

---

एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते । समन्वयाध्याये यस्त्वेतमेवंप्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्त— इत्यत्र श्रुतस्य वैश्वानरशब्दस्य नार्थो निर्णेतुं शक्यः वैश्वानरशब्दस्य चतुर्ष्वर्थेषु प्रयोगस्य दृष्टचरत्वात् । जाठराग्नौ तावत् अयमग्निर्वैश्वानरो येनेदमन्नं पच्यते यदिदमद्यते तस्यैव घोषो भवति यदेतत् कर्णावपिधाय शृणोतीति वैश्वानरं केतुमह्नामकृण्वन्निति भूततृतीयेऽपि प्रयोगदर्शनात् देवतायाञ्च । वैश्वानरस्य सुमतौ स्याम राजाहिकं भुवनानामभिश्रीरिति परमात्मनि च । स एव वैश्वानरो विश्वरूपः प्राणाग्निहृदयते । उपलभ्यन्तेचात्रप्रकरणे सर्वेषां लिङ्गानि तेभ्यः वैश्वानरशब्दवाच्यः परमात्मेति न निर्णेतुं शक्य इति पूर्वपक्षे प्राप्ते समाधत्ते ।

वैश्वानरः साधारणशब्दविशेषात् ब्र० सू० । १ । २ । २५ ।

वैश्वानरः परमात्मा कुतः साधारणशब्दविशेषात् यद्यपि वैश्वानरशब्दो नानार्थसाधरणस्तथाप्यत्र प्रकरणे परमात्मनोऽसाधारणैस्सर्वात्मत्वादिविशेषणैर्विशिष्यत इति विशेषस्तस्माद्विशिष्यमाणत्वादित्यर्थः । को न आत्मा किं ब्रह्मेति प्रत्यगात्मनामात्मभूतं परमात्मानं जिज्ञासमानैस्तदभिज्ञ इति राजानमुपसन्नैः प्राचीनशालादिभिः पृष्टेन राज्ञोपदिष्टत्वात् वैश्वानरः परमात्मेति शक्यनिर्णयएव ।

स्मर्यमाणमनुमानं स्यादिति । ब्र० सू० । १ । २ । २६ ॥

अग्निमूर्द्धा चक्षुषितिश्रुतौ । चन्द्रसूर्याविति च श्रुतौ द्यां मूर्द्धानमित्यादिस्मृतिषु च परमात्मनः प्रसिद्धरूपं प्रत्यभिज्ञाय तद्वैश्वानरं परमात्मानमवगमयति ।

शब्दादिभ्योऽन्तःप्रतिष्ठापनाच्चेति चेन्न तथादृष्ट्युपदेशादसम्भवात्पुरुषमपि चैनमधीयते । ब्र० सू० । १ । २ । २७ ॥

उक्तहेतुभिः वैश्वानरः परमात्मेति न शक्यनिर्णयः शब्दादिभ्योऽन्तःप्रतिष्ठानाच्च जाठरइत्यपि प्रतीतेः इति चेत्—नैषदोषः, तथादृष्टचुपदेशात् । पूर्वोक्तस्य ब्रह्मणः वैश्वानरस्य सर्वात्मतया जाठराग्न्यादिषु तादात्म्येनोपासनोपदेशात् । असम्भवातकेवलस्य जाठरस्य त्रैलोक्यात्मत्वासम्भवात् । पुरुषमपि चैनमधीयते वाजसनेयिनः स एपोऽग्निर्वैश्वानरो यत्पुरुष इत्यादौ च शब्दः प्रसिद्धिपरः प्रसिद्धंचात्मत्वात् परमात्मन एव पुरुषत्वं पुरुषे अन्तः प्रतिष्ठितत्वञ्च सहस्रशीर्षा पुरुषः पुरुष एवेदं पुरुषान्नपरं किञ्चिदित्यादौ ।

अतएव न देवताभूतञ्च । १ । २ । २८ ॥ ब्र० सू० ।

एतेभ्य एव हेतुभ्यः । अग्निदेवतायाः तृतीयमहाभूतस्य च वैश्वानरत्वशङ्काऽपि प्रत्युक्ता ॥

साक्षादप्यविरोधं जैमिनिः । ब्र० सू० १ । २ । २६ ॥

वैश्वानरस्य परमात्मन उपासनार्थमग्न्यन्तर्यामितयाऽग्निशब्दसामानाधिकरण्यनिर्देश उक्तः, जैमिनिस्त्वाचार्य्यो मन्यते । यथावैश्वा-

नरशब्दस्साधारणोऽपि परमात्मासाधारणधर्मदर्शनात् विश्वेषां नराणां नेता विश्वानरः स एव स्वार्थिकाणप्रत्ययेन वैश्वानर इत्येवं परमात्माभिधायको निश्चीयते । एवमग्निशब्दोऽग्रनयनादियोगेन परमात्माभिधायक इति निश्चीयते ।

अभिव्यक्तेरित्याश्मरथ्यः । ब्र० सू० । १ । २ । ३० ॥

उपासकबुद्ध्यारोहार्थकतया तथा प्रादेशमात्रत्वप्रतिपादनं नतु परिच्छिन्नत्वाभिप्रायेण । तत्रैव अभिविमानमिति । अभितोविगतमानत्वोक्तेः । इत्याश्मरथ्याचार्यो मन्यते ।

अनुस्मृतेर्बादरीः ब्र० सू० । १ । २ । ३१ ॥

उपासनार्थं तथा पुरुषविधत्वकल्पनोपपत्तेः परमात्मप्राप्तयेऽनुस्मृतेः । अनुस्मरणार्थं तथोपासनार्थमिति बादरिराचार्यो मन्यते ।

आमनन्ति चैनमस्मिन् । ब्र० सू० । १ । २ । ३२ ॥

एनं परमात्मानं द्युमूर्द्धत्वादिमन्तं वैश्वानरमस्मिन्नुपासकदेहे प्राणाहुत्यधिकरणत्वार्थेनामनन्ति चेति स्थितम् । तथा गुणोपसंहारपादे वैश्वानरविद्यायां स्वर्लोकादित्यवाय्वाकाशापृथिवीनां प्रत्येकं वैश्वानरत्वं व्यस्तानां तेषामुपासनेषु प्रत्येकमाख्यातं फलञ्च श्रूयते । स्वर्लोकापृथिव्यन्तं त्रैलोक्यशरीरो वैश्वानरश्च व्यस्तोपासनानिन्दापूर्वकं समस्तस्य तस्योपासनं तत्फलञ्च श्रूयते। तत्र किं व्यस्तस्योपासनं कार्यम् । उत व्यस्तस्य समस्तस्य च । अथवा समस्तस्यैवेति पक्षत्रये वलावलानवधारणात् संशये पूर्वपक्षः । व्यस्तानामुपासनं कार्यम् एष वै सुतेजा आत्मेति वाक्यैस्तुतेजश्शब्दाद्युक्तानां द्युप्रभृतीनां प्रत्येकं वैश्वानरत्वप्रतिपादनादिति प्राप्ते । उच्यते ।

भूम्नः क्रतुवज्ज्यायस्त्वं दर्शयति । ब्र० सू० । ३ । ३ । ५५ ॥

भूम्नः समग्रोपासनस्य ज्यायस्त्वं प्रशस्ततप्रमाणवत्त्वं कथमुपक्रमोपसंहाराभ्यामेकवाक्यत्वावगमानुरोधेनावयवविशेषेषूपास्तितत्फलवचनानां समस्तोपासनतत्फलैकदेशानुवादमात्रमिति ज्योतिष्टोम—

यायेन कल्पनोपपत्तेः । क्रतुवदिति ज्यातेष्टिवाक्ये हि वैश्वानरं द्वादशकपालं निर्वपेत् । पुत्रजाते यस्मिञ्जोत, एतामिष्टिं निर्वयति पूत एवेति विहितस्य क्रतोरेकदेशोयदष्टाकपालो भवतीत्यादिनानूद्यते तथाहि दर्शयति वैश्वानरबुद्ध्योपासनं प्रति । मूर्धा न व्यपतिष्यद्यन्मां नागमिष्य इति निन्दावचनम् । अतसमस्तस्योपासनंकार्यमिति स्थितम् । प्रकृतमनुसरामः ।



## अथ षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥

**श्वेतुकेतुर्हारुणेय आस सꣳ ह पितोवाच श्वेतकेतो वस ब्रह्मचर्य्यं न वै सोम्यास्मत्कुलीनोऽननूच्य ब्रह्मबन्धुरिव भवतीति ॥ १ ॥**

**स ह द्वादशवर्षमुपेत्य चतुर्विꣳशतिवर्षः सर्वान् वेदानधीत्य महात्मना अनूचानमानीस्तब्धोऽस्त्युत तमादेशमप्राक्ष्यः ॥२॥**

**येनाश्रुतꣳ श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमिति कथन्नु भगवः स आदेशो भवतीति ॥३॥**

सद्विद्या प्रस्तूयते पिता प्रतिवक्ता पुत्रश्च प्रष्टेत्यवं विधेयमाख्यायिका सा च विद्याया वरीष्ठत्वद्योतनार्था श्वेतकेतुर्नामतः आरुणेय अरुणस्य पौत्रः । आसह तं प्रति पितोद्दालक उवाच ह किल किमिति हेश्वेतकेतो वस ब्रह्मचर्यं वेदाध्ययनार्थं गुरुकुलवासं कुर्वित्यर्थः । कुतः । हे सोम्य प्रियदर्शन । अस्मत् कुलीनोऽननूच्य वेदानधीत्य ब्रह्मबन्धुरिव न भवतीतिहेतोः । स्वयमब्राह्मण एव सन् ब्राह्मणान् बन्धून् व्यपदिश्यति स ब्रह्मबन्धु रित्युच्यते ॥१॥

स पित्रोक्तः श्वेतकेतुर्द्वादशवर्षः सन्नुपेत्याचार्यकुलं द्वादशाब्दतः सर्वान् वेदानधीत्य महामनाः प्रायशो नास्मिमानुषः देवो वा केशवांशो वेतिस्वस्मिन्नतिमहत्वबुद्धिः । तत्र हेतुरनूचानमानी-

साङ्गवेदाध्ययनवानहमित्यभिमानवान् । अहमेव प्रज्ञाधिक इति मन्यमान इति यावत् । अतएव स्तब्धोऽविनीतो दर्पपूर्ण इति यावत् चतुर्विंशतिवर्षः सन्नेयाय पितुः सकाशं तं स्वात्मानुरूपं पुत्रं दृष्ट्वा पितोवाच । स्वातन्त्र्याभिमानिनस्तस्याहङ्कारनिवृत्त्यर्थम् । हेसोम्य यत् यदा नु इदानीं माहमनाइत्थमहंकारवान् । अनूचान-मानीस्तब्धोऽसि । तर्हि कस्तेतिशयः प्राप्त उपाध्यायात् । यज्ञादि-समस्तकर्मविषयश्च सर्वोऽपि वेदः साङ्गोपाङ्गो मयाधीत इतिचेत् किंकर्मादिविषयवेदाभ्यासेन वृथा श्रान्तोसि । उतशब्दः किं शब्दार्थः आदिश्यतइत्यादेशं केवलशास्त्राचार्य्योपदेशगम्यमित्येतत् येन वा परं ब्रह्मातिदिश्यते स आदेशस्तंप्राद्यः पृष्टवानस्याचार्यम् ॥ २ ॥

तमादेशं विशिनष्टि । येनेति । येनाश्रुतेनाश्रुतमपि श्रुतं भवति । येन मतेनामतमपि मतं भवति । येन विज्ञातेन ध्यातेनाविज्ञातमपि विज्ञातं भवति एवं पित्रोक्तेन श्वेतकेतुना हे भगवो भगवन् । स आदेश कथं नु केन प्रकारेणोपपन्नो भवति । अन्यज्ञानेनान्यज्ञानस्य क्वाप्य-दर्शनादेकविज्ञानेन सर्वविज्ञानासम्भवइत्याक्षेप्तुरभिप्रायः ॥ ३ ॥

**यथा सोम्यैकेन मृत्पिण्डेन सर्वंमृण्मयं विज्ञातं भवति स्याद्वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येवसत्यम् ॥ ४ ॥**

**यथा सोम्यैकेन लोहमणिना सर्वंलोहमयं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं लोहमित्येव सत्यम् ॥५॥**

**यथा सोम्यैकेन नखनिकृन्तनेन सर्वं कार्ष्णायसं विज्ञातं स्याद्वाचारम्भणं विकारो नामधेयं कार्ष्णायसमित्येव सत्यमेवसोम्य स आदेशो भवतीति ॥ ६ ॥**

**न वै नूनं भगवन्तस्त एतद्वेदिषु र्यद्ध्येतदवेदिष्यन्**

**कथं मेनात्रच्यन्निति भगवाꣳस्त्वेव मे तद्ब्रवीत्विति तथा सोम्येति होवाच ॥ ७ ॥**

इति षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥



येनाश्रुतं श्रुतमित्यादिनामेकविज्ञानेन सर्वविज्ञानोपपत्तेर्नानुपपत्तिः ह्येकोपादानकारणविज्ञानेन सर्वकार्यविज्ञानस्य सुलभत्वात् तत्सौलभ्याय दृष्टान्तमुपन्यस्यति । यथेति । हे सोम्य सोम्यार्ह यथैकेन मृत्पिण्डेन मृद्द्रव्यतया विज्ञानेन सर्वं मृण्मयं मृद्विकारजातं घटशरावोदञ्चनादिकं मृदात्मकतया विज्ञातं भवति उक्तसिद्धान्तं द्रढयितुं कारणात्कार्यस्यानन्यत्वं नास्ति कार्यञ्चोत्पद्यते, इति वैशेशिकाः वदन्ति तन्मतमपाकर्त्तुमाह । वाचारम्भणमिति ॥ कार्यंजातं वाचा वागिन्द्रियेणारभ्यते । घटेन जलमाहरेत्यादिना व्यवह्रियते । आरभ्यते व्यवह्रियत इत्यारम्भणम् । कृत्यल्युटो बहुलमितिकर्मणिल्युट् । तथा च तत्तदवस्थाविशेषमात्रत्वादुपादेय जातस्य स्वोपादानापृथक्सिद्धत्वमिति स्वोपादानकारणविज्ञानेन कार्यविज्ञानं सुकरं भवितुमर्हति । तच्च कार्यं द्विविधं । विकारो नामधेयञ्च तत्र कम्बुग्रीवादिमद्व्यक्तिविशेषरूपो विकारशब्दवाच्यः नामधेयञ्च घटादिवाचकशब्दविशेष एव । ननु यथा कारणं मृत्तिका स्वतन्त्रसत्ताश्रयत्वात्सत्या तथा घटादीनां कार्याणामपि पृथक्स्वतन्त्रसत्त्वं भवतु । उपलभ्यमानत्वादित्यत्राह । मृत्तिकेत्येव सत्यमिति । एवकारोऽन्ययोगव्यवच्छेदार्थः । इतिशब्दः कारणपरामर्शपरः । मृत्तिकाकारणभूतैव स्वतन्त्रसत्ताश्रयो नतु तथा घटादिकार्यं स्वातन्त्र्येण सत्त्वाश्रयं कारणव्यतिरेकेणानुपलभ्यमानत्वात् । एवमकाशादिप्रपञ्चजातस्य ब्रह्मोपादेयतया तदात्मकतया च स्वतन्त्रसत्वानधिकरणत्वात् स्वोपादानकारणभूतब्रह्मापृथक्त्वमेवेति सिद्धान्तः ॥

दृष्टान्तरेणाप्युक्तार्थं साधयति । यथा सोम्येति । हेसोम्यैकेन लोहमणिना स्वर्णपिण्डेन विज्ञातेन स्वर्णत्वेन तत्कार्यभूतं सर्वं लोहमयं कटकमुकुटादिकं विज्ञातं स्यादित्यर्थः । वाचारम्भणमित्यादिकं पूर्ववत् ॥ ५ ॥

यथा सोम्य नखनिकृन्तनेन कार्ष्णायसपिण्डेन विज्ञातेन तदुपादेयं सर्वं कार्ष्णायसं विज्ञातं स्यात् एवं सोम्य स आदेशो भवति । मयो-क्तआदेशो मृत्पिण्डादितुल्यः । इत्युपदिष्टः पुत्र आह । न वा इति । भगवन्तः पूजार्हास्ते मम गुरवो नूनं निश्चितमेव मे तदुक्तं तत्त्वं नैवा-वेदिषुः । कुतः ? ते यद्येतत् प्रमेयमवेदिष्यन् कथं मे मह्यं प्रियशि-ष्याय नावक्ष्यत् । इति तस्मात् । भवानेव मे मम यत् वाचारम्भणदृ-ष्टान्तेन भगवतः परब्रह्मणः प्राधान्येन विज्ञानमुक्तं तत्तु विशेषाकारेण ब्रवीत्वितिपुत्रेणार्थितः पिता तथेति होवाच ॥ ७ ॥

इति षष्ठाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

**सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् । तद्धैक आहुरसदेवेदमग्र आसीदेकमेवाद्वितीयं तस्मादसतः सज्जा-येत ॥ १ ॥**

**कुतस्तु खलु सोम्येदं स्यादिति होवाच कथमसतः स-ज्जायेतेति सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम् ॥ २ ॥**

**तदैक्षत बहु स्यां प्रजायेयेति तत्तेजोऽसृजत तत्तेज ऐ-क्षत बहु स्यां प्रजायेयेति तदपोऽसृजत तस्माद्यत्र क्वच शो-चति स्वेदते वा पुरुषस्तेज स एव तदध्यापो जायन्ते ॥ ३ ॥**

**ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नम-सृजन्त तस्माद्यत्र क्वच वर्षति तदेव भूयिष्ठमन्नं भवत्यद्भ्य-एव तदध्यन्नाद्यं जायते ॥ ४ ॥**

इति षष्ठाध्यायस्य द्वितीयखण्डः ॥ २ ॥

---

कारणैक्यविज्ञानेन सर्वविज्ञानं भवतीति प्रागभिहितम् । तमेवार्थं विशेषरूपेण समर्थयति सदेवेति । अग्रे सृष्टेरादौ इदं शब्दवाच्यं कार्यं जगत् सदात्मकमासीत् । इदं शब्दवाच्यस्य जगतः सच्छब्दवाच्ये कारणे अतिसूक्ष्मरूपत्वेन सत्त्वेऽपि नामरूपविभागाभावेन पृथग्ग्रहणानर्हत्वात्, सदेवेतिकारणेनैक्यनिर्देशः सूपपन्नः । अन्यथा सच्छब्दवाच्यस्य कारणस्य ब्रह्मण इदमित्यङ्गुल्या निर्देशायोगात्, कार्यस्य कारणे सूक्ष्मरूपेणानङ्गीकारे चासत्कार्यवादाभ्युपगमापत्त्या "तत्सदासीत्, 'सत्त्वाच्चावरस्य, 'असद्व्यपदेशादितिचेन्न धर्मान्तरेण वाक्यशेषात्, (ब्र० सू०) 'युक्तेः शब्दान्तराच्च पटवच्च, (ब्र० सू०) इत्यादि शास्त्रावगतसूत्रकारमतवहिर्भूतत्वप्रसङ्गःस्यात् । किञ्च इदमा निर्दिष्टस्य कार्यस्य पूर्वमभावाङ्गीकारे आसीदिति पूर्वकालसम्बन्धो न स्यात् । अत्र सच्छब्दः स्वतन्त्रवाचकः । सत्त्वं स्वातन्त्र्यमुपदिष्टमिति वाक्यात् । एकशब्दश्च कारणैकत्वं विदधाति । एवकारश्चान्ययोगव्यवच्छेदार्थकस्तत्समं निषेधति । अद्वितीयशब्दश्च तदाधिक्यं निषेधति । "न तत्समश्चाभ्यधिकश्च दृश्यते, इतिश्रुत्यैकार्थकत्वात् । अन्यथा, एकपदेनैवाद्वैतसिद्धावन्यपदयोर्वैयर्थ्यापत्तेः । तत्=जगत् कारणे निरूपणीये एके=असत्कार्यवादिनो नैयायिकाः । आहुर्ह प्रसिद्धम् । किमाहुः । असदेवेदमग्र आसीत् । इदं जगदग्रे सृष्टेः प्राक् असदेवासीन्नतुसदासीत् । नामरूपविभागाभावलक्षणस्यासत्त्वस्य सिद्धान्तेऽपि संमतत्वादाह । एकमेवेति तस्मादिति । तस्मादसतः जगदुत्पद्यत इति ॥१॥

एव मनूदितं पक्षं दूषयति--"कुतइति" तुशब्दः पूर्वपक्षव्यावृत्त्यर्थः । हेसोम्य एवमसदासीदिति कुत एव स्यान्न कुतोपिव्याहतेः प्रमाणाभावाच्चेति होवाच कथमसतः सदुत्पद्येत । अदृष्टत्वादसतः कारणत्वानुपपत्तेरितिभावः । इतिहोवाचेति सम्बन्धः । एवं पूर्वपक्षमपाकृत्य स्वपक्षसिद्धिमुपसंहरति । सदेवेति । अस्यार्थः प्रागवत् ॥ २ ॥

तस्य प्रलयवर्तिनः स्वतन्त्रसत्ताश्रयस्य परब्रह्मणः सृष्टिकाले प्राप्ते कर्तव्यव्यापारमाह--तदिति । तत्=स्वतन्त्रसत्ताश्रयं परब्रह्म-पर्यालोचत । किमिति । अहं बहु स्यां जगद्रूपेणाहमेव बहुरूपं स्याम् । तदर्थं प्रजायेय तेजोऽबन्नादिरूपेण प्रकर्षेण जायेय । तदित्थं विचिन्त्य तेजोऽसृजत । अत्र तेजः पदं तदभिमानिदेवतापरम् । तत्तेज ऐक्षत । वि· चारमकरोत् । अहमपि बहुरूपं स्यां तदर्थं जगदुत्पादयामीति, इत्थं विचिन्त्य तत्तेजोऽपोऽसृजत । अपां तेजः कार्यत्वे प्रमाणमाह । तस्मा· दिति । यस्मादादावाप एव तेजसो जायन्ते । तस्मादेवाद्यापि पुरुषः यत्र क्वचिद्देशे काले वा शोचति रोदिति स्वेदते, स्विद्यते वा तेजस एव ताश्चता आ पश्चेति तदाप एव तेजसो जायन्ते, इति हि प्रसिद्ध मन्वयव्यतिरेकसिद्धत्वात् ॥ ३ ॥

एवं तेजः सृष्ट्वा ता आप ऐक्षन्त । बह्वय इति पूर्ववत् । इत्थं विचिन्त्य ता आपोऽन्नमसृजन्त । पृथिव्या अप्कार्यत्वमुपपादयति । त-स्मादिति । तस्मात्=अन्नस्याप्कार्यत्वादेव । यत्र क्वचिद्देशे काले वर्षति । तत्तत्रैव भूयिष्ठमन्नम्, अन्नाद्यं भवति । अन्यथासिद्धिं निरस्यति । अद्भ्य इति । तदन्नाद्यं प्रसिद्धान्नप्रभृतिपार्थिवमद्भ्यएवजा-यते, नान्यस्मादित्यर्थः ॥ ४ ॥

इति षष्ठाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

---

**तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्त्यण्डजं जीवजमुद्भिज्जमिति ॥ १ ॥**

**सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनाऽऽ-त्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति ॥ २ ॥**

**तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति सेयं देवतेतीमा-स्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्या-करोत् ॥ ३ ॥**

**तासां त्रिवृतं त्रिवृतमेकैकामकरोद्यथा तु खलु सोम्येमास्तिस्रो देवतास्त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥४॥**

इति षष्ठाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

एवमुत्पन्नानां तेजोऽबन्नानां सर्वभूतकारणत्वरूपमाहात्म्यमाह । तेषामिति । तेषां प्रसिद्धानां वक्ष्यमाणानां भूतानां त्रीण्येव खलु प्रागुक्ततेजोऽबन्नान्येव बीजानि कारणानि । एषामित्युक्तभूतान्येवाह—अण्डजमिति । अण्डजं पक्ष्यादि । जीवजं जरायुजं मनुष्यादि । भुवमुद्भिद्य जायत इत्युद्भिज्जं वृक्षादि ॥१॥

भूतसहिततेजोऽबन्नाख्यदेवतात्रयसृष्ट्यनन्तरं परमात्मनोव्यापारमाह—सेयमिति । सेयं सदाख्या परदेवतैक्षत । अहमिमाः पुरःसृष्टाः तिस्रो देवता तेजोऽबन्नरूपा अनेन जीवेन जीवसमष्टिविशिष्टेनात्मनानुप्रविश्य नामरूपे व्याकरवाणीत्यैक्षत ॥२॥

विचारान्तरमाह । तासामिति । तासां देवतानां मध्ये एकैकां त्रिवृतं त्रिवृतमन्योन्यप्रविष्टां करवाणीत्यैक्षत । इति मत्वा सेयं देवतेमास्तिस्रोदेवताः । अनेन जीवेनात्मनानुप्रविश्य ताभ्य इन्द्रादीनां नामरूपे व्याकरोत् व्याकृतवती । अत्र संज्ञामूर्तिक्लृप्त्यधिकरणे पूज्यपादैः भाष्यकारैः श्रीश्रीनिवासाचार्यैः "सेयं देवतैक्षत, इत्युपक्रम्य नामरूपे व्याकरवाणीति उत्तमपुरुषप्रयोगेण त्रिवृतं त्रिवृतमेकैकां करवाणीति नामरूपव्याकरणं सङ्कल्पः । तत्सिद्धये एकैकां देवतां त्रिरूपामण्डोत्पत्तेः प्राक् सम्विधाय ततोऽण्डमुत्पाद्य तत्र प्रविश्य नामरूपे कृतवान् । त्रिवृतकरणश्रुतिः पञ्चैकरणोपलक्षणार्था । एवं त्रिवृत्कुर्वतः परस्य ब्रह्मण एव नामरूपव्याकर्तृत्वोपदेशात् । नामरूपव्याकरणानर्हत्वाच्च जीवस्येत्यर्थः । जीवप्रयोगाभिप्रायस्तु अरूपवदेव हीत्यग्रे स्फुटीभविष्यतीति भाषितम् ॥३॥

हे सोम्य देवताधिष्ठितानां तेजोऽवन्नानां त्रिवृत्करणं यथैव भवति = येन प्रकारेण भवति तन्मे विजानीहीति होवाच ॥४॥

इति षष्ठाध्यायस्य तृतीयः खण्डः ॥३॥



**यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादग्नेरग्नित्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥१॥**

**यदादित्यस्य रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागादादित्यादादित्यत्वं वाचारम्भणं विकारो-नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥२॥**

**यच्चन्द्रमसो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाच्चन्द्राच्चन्द्रत्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥३॥**

अग्नेर्यद्रोहितं रूपं रोहितोभागो दृश्यते तत त्रिवृत्कृतस्य तेजसः स्वरूपम् । त्रिवृत्कृतस्याग्नेर्यच्छुक्लं रूपं तदपामत्रिवृत्कृतानां यत्कृष्णं तस्यैव वाऽग्नेरूपं तदन्नस्य पृथिव्या अवृत्कृताया इतिविद्धि । अग्नेस्तेजोवन्नसमुदायरूपत्वे यावत्तेजोऽवन्नावस्थानमग्निरूपेणोपालम्भं प्राप्नोतीत्यत्राह अपागादग्नेरग्नित्वमिति । तेष्वेव तेजोवन्नेषु अद्वय-वस्थानाशकसामग्रीसन्निधाने अग्नित्वावस्थोपेता भवति अवस्थान्तरं प्रादुर्भवति । वाचारम्भणमिति । अतस्तेजोऽवन्नैरेवाग्नित्वाद्यवस्थालक्षणो-ऽग्न्यादिनामधेयञ्च वाक् पूर्वव्यवहारसिद्धये तेजोवन्नै रेव स्पृश्यते, अत-स्तेजोऽवन्नस्वरूपेणैवाग्निरिति सत्यमित्यर्थः ॥१॥

यदादित्यस्य यच्चन्द्रमसो यद्विद्युत इत्यादिपूर्ववद्व्याख्येयम् ॥२।३॥

**यद्विद्युतो रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्यापागाद्विद्युतो विद्युत्त्वं वाचारम्भणं विकारो नामधेयं त्रीणि रूपाणीत्येव सत्यम् ॥४॥**

॥ १ ॥

**एतद्ध स्म वै तद्विद्वांस आहुः पूर्वे महाशाला महाश्रोत्रिया ननोऽद्य कश्चनाश्रुतममतमविज्ञातमुदाहरिष्यन्तीति ह्येभ्यो विदांचक्रुः ॥५॥**

येनाश्रुतं श्रुतं भवतीत्यारभ्य यदग्नेरोहितरूपमित्युक्तं विद्वत्संमत्या द्रढयति । एतद्धस्मेति । पूर्वे महाशालाः सम्यक् प्रत्यब्दयज्ञकृतः। महाश्रोत्रियाः सम्यक्वेदवेदार्थविदः एतद्ब्रह्मविज्ञानेन सर्वं विज्ञातं भवतीत्युक्तं प्रमेयं विद्वांस एतद्वदयमाणमाहुः । हस्मेति वृतान्तद्योतकम् । किमाहुः नोस्माकमद्यास्मद्गुरूपदेशप्राप्त्यनन्तरं कश्चन ब्रह्मातिरिक्तं किमपि अश्रुतममतमविज्ञातं नोदाहरिष्यति अस्माभिर्ब्रह्मश्रवणमननविज्ञानैः सर्वश्रवणमननविज्ञानफलस्य लब्धत्वात् । इत्याहुरितिसम्बन्धः । एभ्यः सदेवेत्युक्तप्रकारेण विदितब्रह्मप्रधान्येभ्यः पूर्वेभ्यो विद्वद्भ्योऽन्ये विद्वांसः विदांचक्रुर्विदितवन्तः ॥५॥

**यदु रोहितमिवाभूदिति तेजसस्तद्रूपमिति तद्विदांचक्रुः यदुशुक्लमिवाभूदित्यपां रूपमिति तद्विदांचक्रुः यदु कृष्णमिवाभूदिति अन्नस्यरूपमिति तद्विदांचक्रुः ॥६॥**

**यदविज्ञातमिवाभूदिति एतासामेव देवतानां समास इति तद्विदांचक्रु यथा नु खलु सोम्येमास्तिस्रो देवता पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तन्मे विजानीहीति ॥७॥**

इति षष्ठाध्यायस्य चतुर्थः खण्डः॥ ४॥



किमिति रोहितशुक्लकृष्णत्वेन भासमानं यद्रूपं तत्तेजोवन्नात्मकमेवेति विदांचक्रु र्ज्ञातवन्तः॥ ६॥

यदपि रूपमितिदृश्यमानप्रकारेण विज्ञातमिव तद्रूपेण विज्ञायमानमितियावत्, पीतमाञ्जिष्ठधूमरशोणादिरूपत्वेन विशेषतो गृह्यमाणमभूत् तदप्येतासामेव तेजोवन्नात्मकानां देवतानां समासः समु-

दाय इति विदांचक्रुः ॥ एवमधिदैवतं तेजोवन्नात्मकानां देवतानां त्रिवृत्करणप्रकारमभिधायाऽध्यात्ममपि वक्तुं प्रतिजानीते । यथेति । हेसोम्येमास्तिस्रोदेवताः पुरुषशरीरं प्राप्य यथा नु खलु येनैव प्रकारेणैकैका त्रिवृत्त्रिवृद्भवति तथेदानीं तदध्यात्मिकं त्रिवृत्करणमेवेति विजानीहीति होवाच तेजोवन्नानि पुरुषेण भुज्यमानानि पुरुषं प्राप्य यथा परिणमन्ति तं परिणामप्रकारं शृणिवति भावः ॥ ७ ॥

इति षष्ठाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥



**अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठोधातुस्तत्पुरीषं भवति योमध्यमस्तन्मासं योऽणिष्टस्तन्मनः ॥ १ ॥**

**आपः पीतास्त्रेधा विधीयन्ते तासां यः स्थविष्टो धातुस्तन्मूत्रं भवति योमध्यमस्तल्लोहितं योऽणिष्ट सः प्राणः ॥२॥**

**तेजोऽशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः समज्जा योऽणिष्ठः सा वाक् ॥३॥**

**अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागिति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच४**

इति षष्ठाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

अन्नं पुरुषेणाशितमुपजीवितं त्रेधा विधीयते। कथम्। तस्यान्नस्य स्थविष्ठो धातुः स्थूलांशस्तत्पुरीषं भवति पुरीषतामापद्यते मध्यमांशस्तु मांसतामापद्यते । अणिष्टांशस्तु मनः अप्यायकतामापद्यते मनस अहङ्कारिकत्वेनान्नविकारत्वाभावादितिभावः ॥ १ ॥

भुक्तान्नस्य त्रैविध्य मुक्त्वा पीतानामपामपि त्रैविध्यमाह । आपइति पूर्ववत् ॥ २ ॥

तेजोऽशितं तैलघृतादिभक्षितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति। यो मध्यमः समज्जाऽस्थ्यन्तर्गतः स्नेहः। योऽणिष्टः सा वाक् ॥ ३ ॥

अन्नमयं हि मनः । आपोमयः प्राणस्तेजोमयीवागिति मनः प्रभृतीनामन्नजलतेजःसूक्ष्मांशाप्यायितत्वात्तद्रूपवत्वमित्यर्थः । प्राणस्याम्मयत्वं वाचस्तेजोमयत्वञ्चोच्यते हृदयप्रदेशे प्राणादिसन्निधानाविशेषे कथंमनस एवान्नरसेनोपचय इति मनसो विशेषतोऽन्नमयत्व मुपपादयितुमुत्तरग्रंथमुत्थापयति । भूय एवेति । भूय एव मा मां भगवान्मनसोऽन्नमयत्वं दृष्टान्तेन विज्ञापयत्विति तथा सोम्येति होवाच पिता ॥४॥

इति षष्ठाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥



**दध्नः सोम्य मथ्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तत्सर्पिर्भवति ॥ १ ॥**

**एवमेव खलु सोम्यान्नस्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति तन्मनो भवति ॥ २ ॥**

**अपां सोम्य पीयमानानां योऽणिमा स ऊर्ध्वः समुदीषति स प्राणो भवति ॥ ३ ॥**

**तेजसः सोम्याश्यमानस्य योऽणिमा स ऊर्ध्वः समुदीषति सा वाग्भवति ॥ ४ ॥**

**अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वागितिभूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥ ५ ॥**

इति षष्ठाध्यायस्य षष्ठः खण्डः ॥ ६ ॥



यथा खलु दध्नो मथ्यमानस्य योऽणिमा अणोर्भावः सूक्ष्मभागो नवनीतरूपः स ऊर्ध्वः सन् सर्वापेक्षया श्रेष्ठस्सन् समुदीषति सम्यगुदयसम्भावना विषयो भवति तत्सर्पिर्भवति ॥ १ ॥

यथायं दृष्टान्तः एवमेव खलु सोम्यान्नस्योदेनादेरस्यमानस्य भुज्यमानस्यौदर्येणाग्निना वायुसहितेन यथा मथ्यमानस्य योऽणिमा

स ऊर्ध्वः ऊर्ध्वमुद्गतः सूक्ष्मांशो मनो भवति मन आप्यायक भवति। समुदीषति। ईषगतिहिंसादानेष्विति धातुः॥ २–३–४॥

मनआदेरन्नमयत्वं निगमयति। अन्नमयं हीति। मनसोऽन्नयमत्वं दृष्टान्तेन यथा परबुद्ध्यारूढं भवेत् तथा विज्ञापयतु तथा सोम्येति होवाच पिता॥ ५॥

इति षष्ठाध्यायस्य पष्ठः खण्डः॥ ६॥

---

**शोडशकलःसोम्य पुरुषः पञ्चदशाहानि माऽऽशीः काममपः पिवापोमयः प्राणो न पिवतो विच्छेत्स्यत इति॥ १॥**

हे सोम्य पुरुषो जीवः षोडशकलः। षोडशा कला अंशायस्यासौ तथोक्तः॥ तन्मध्ये मनश्चेका कला तत्र मनसोऽन्नमयत्वं प्रत्यक्षीकर्त्तुमिच्छसिचेत्तर्हि पञ्चदशसङ्ख्याकान्यहानि माशीरशनं माकार्षीः। काममिच्छातोऽपः पिव। कुतः यस्मादापो न पिवतः प्राणो विच्छेत्स्यते। विच्छेदमापत्स्यते। तदपि कुतः। यस्मादापोमयः प्राण इत्युवाच अपां पानपरित्यागे प्रणविच्छेदोनान्यथेत्याशयः॥ १॥

**सह पञ्चदशाहानि नाशाथ हैनमुपससाद किंब्रवीमि भो-इत्यृचः सोम्य यजूंषि सामानीति होवाच न वै मा प्रतिभान्ति भो इति॥ २॥**

**तं होवाच यथा सोम्य महतोऽभ्याहितस्यैकोऽङ्गारः खद्योतमात्रः परिशिष्टः स्यात्तेन ततोऽपि न वहु दहेदेवं सोम्य ते षोडशानां कलानामेका कलातिशिष्टा स्यात्तयैतर्हि वेदान्नानुभवत्यशानाथमे विज्ञास्यसीति॥ ३॥**

**सहाशाथ हैनमुपससाद तं ह यत्किञ्च पप्रच्छ सर्वंह प्रतिपेदे॥ ४॥**

**तं होवाच यथा सोम्य महतोऽभ्याहितस्यैकमङ्गारं**

खद्योतमात्रं परिशिष्टं तं तृणैरूपसमाधाय प्राज्वलयेत्तेन ततोऽपि वहुदहेत् ॥ ५ ॥

एवं सोम्य ते षोडशानां कलानामेकाकलाऽतिशिष्टा भूत्साऽन्नेनोपसमाहिता प्राज्वालीत्तयैतर्हि वेदाननु भवस्यन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयीवागिति तद्धास्य विजज्ञविति विजज्ञाविति ॥६॥

इति षष्ठाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

सहैवं श्रुत्वा मनसोऽन्नमयत्वमनुभवारूढं कर्त्तुमिच्छन् पञ्चदशाहानि नाश, अशनं न कृतवान्। अपः पीतवाँश्च । अथ षोडशेऽहनि एनं पितरमुपससाद उपगम्य उवाच। किंब्रवीमि भो इति। इतर आह ऋचः सोम्य यजूंषि सामान्यधीष्वेति एवं पित्रोक्तः सहोवाच भो-भगवन् मा्मामृगादीनि नैव प्रतिभान्ति मे मनसि नैव दृश्यन्ते। कुतो। वदामीत्यर्थः ॥ २ ॥

तं पितोवाच शृणु तत्र कारणम्। यथा सोम्य महतोग्नेरभ्याहितस्य क्रमादेकैकांगारेणापचितस्यैकोङ्गारः खद्योतमात्रः परिशिष्टः स्यात्। तेन तावदेव खद्योतपरिमितमेव स्तुहदेत् । ततः तत्परिमाणादीषदपि वहु न दहेत् तृणादिसहकारि विरहात्। एवं सोम्य ते तव षोडशानां कलानां मध्ये एका कला प्राणरूपातिशिष्टा स्यात्। इतराः शान्तास्तया खद्योतमात्राङ्गारतुल्यकलयै तर्हीदानीं चलस्येव केवलं नतु मनसा वेदाननुभवसि। अन्नाख्यसहकारिविरहात् । ततः कुतो वदसि। एवमन्नव्यतिरेके मनोव्यापारव्यतिरेकमुक्त्वा तदन्वये तदन्वयमाह। अशानेति। भुङ्क्ष्व तावत्। अथ भोजनानन्तरं मे मम सकाशाद्यच्छ्रुतं तत्सर्वं विजिज्ञास्यामीत्युवाच ॥ ३॥

एवमुक्तः स पुत्रोहाश भुक्तवान् ह। अथैनं पितरमुपससादह तमुपागतं पुत्रं यत्किञ्चपप्रच्छ पिता तत्सर्वं ऋगादिप्रतिपेदे ह मनसा वाचा चोवाच पुत्रः ॥ ४ ॥

तं होवाच पुनः पिता यथा सोम्य महतोऽभ्याहितस्याग्नेरेकमङ्गारं खद्योतमात्रं परिशिष्टं तं तृणैरुपसमाधाय प्रज्वलयेत् तेन ततोऽपिवहुदहेत्। सहकारिलाभात्॥ ५॥

एवं सोम्य ते तव षोडशकलानां मध्ये एकाकलातिशिष्टाभूत् सान्नेनोपसमाहिता प्राज्वालीत्तया कलयै तर्हीदानीं वेदाननु भवसि मनसा वाचा च वदसि एवं व्यावृत्त्यनुवृत्तिभ्यामन्नमयत्वं मनसः सिद्धमित्युपसंहरति। अन्नमयं हि सोम्य मन इति। तस्मादिति ग्राह्यम्। तथैतन्मनसोऽन्नमयत्वमन्वयव्यतिरेकेण सिद्धं तथा प्राणवाचोरप्यप्तेजोमयत्वप्रतिपत्तव्यमित्याशयेनाह। आपोमय इति। इति पित्रोपदिष्टोयं श्वेतकेतुरन्नमयत्वादिकमस्योपदेशात् विजज्ञौ विज्ञातवान्। अस्येतिकर्तरि षष्ठी। इति शब्दः समाप्त्यर्थः। सर्वस्यापि विद्यार्थस्य प्रामाणिकत्वावधारणार्थं द्विर्वचनम्॥ ६॥

इति षष्ठाध्यायस्य सप्तमः खण्डः॥ ७॥

---

प्रकृतबिषयाधिकरणानि लिख्यन्ते। सेयं देवतेक्षत हन्ता हमिमास्तिस्रो देवता अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणीति मनोरूपव्याकरणं श्रूयते तद्धिजीवकर्तृकमुत परमात्मकर्तृकम्। जीवकर्तृकमेव। कुतः? अनेन जीवेनात्मनाऽनुप्रविश्येति निर्देशात्। इति प्राप्त उच्यते।

संज्ञामूर्तिक्लृप्तिस्तुत्रिवृत्कुर्वतउपदेशात् ब्र सू० २।४।१६॥

तु शब्दः पूर्वपक्षनिरासार्थः। सञ्ज्ञामूर्तिक्लृप्तिर्नामरूपव्याकरणं त्रिवृत्कुर्वतो यो हि सर्वज्ञः समर्थ एकैकां देवतां त्रिरूपामकरोत्तस्य परमात्मनः कर्म भवितुमर्हति। कुतः? सैयं देवतैक्षतेत्युपक्रम्य नामरूपे व्याकरवाणीति उत्तमपुरुषप्रयोगेण त्रिवृतं त्रिवृतमेकैकां व्याकरवाणीति नामरूपव्याकरणं सङ्कल्पः तत्सिद्धये एकैकां देवतां त्रिरूपामण्डोत्पत्तेः प्र.कृ सम्विधाय ततोऽण्डमुत्पाद्य तत्र प्रविश्य

नामरूपे कृतवान् । त्रिवृत्करणश्रुतिः पञ्चीकरणोपलक्षणार्था एवं त्रिवृत्कुर्वतः परस्य ब्रह्मण एव नामरूपव्याकर्तृत्वोपदेशात् । नामरूपव्याकरणानर्हत्वाच्च जीवस्येत्यर्थः ।

ननु यदग्नेरोहितं रूपं तेजसस्तद्रूपम् । अन्नमशितं त्रेधा विधीयते, इत्युत्तरत्र चतुर्मुखसृष्टाब्भ्यादिषु त्रिवृत्करणप्रकारदर्शनात् त्रिवृत्करणमपि चतुर्मुखकर्तृकमेवेत्याह ।

मांसादिभौमं यथा शब्दमितरयोश्च । ब्र० सू० ।२।४।२०।।

यदुक्तमण्डसृष्ट्युत्तरकालं चतुर्मुखसृष्टदेवादिविषयं तासां त्रिवृतं त्रिवृतमेकैकामकरोदिति त्रिवृत्करणोपदेश इति तन्नोपपद्यते । अन्नमशितं त्रेधा विधीयते । इत्यत्र मांसमनसोः पुरीषादणुत्वेन च व्यपदिष्टयोराप्यत्वतैजसत्वप्रसङ्गात् यदपेक्षया सूक्ष्मं तत्तस्य कारणम् । अतएव हि पार्थिवाप्यतैजसानामुत्तरोत्तरसूक्ष्मतयोत्तरोत्तरकारणत्वं ततश्च पुरीषस्य स्थविष्ठत्वात् पार्थिवत्त्वं ततः सूक्ष्मस्य मांसस्याप्यत्वं ततोऽणिष्ठस्य मनसस्तैजसत्वमभ्युपगन्तव्यम् । तथा प्रायः पीता इत्यत्रापि तथान्वं द्रष्टव्यम् । इति स्थितम् ।

**उद्दालको हारुणिः श्वेतकेतुं पुत्रमुवाच स्वप्नान्तं मे सोम्य विजानीहीति यत्रैतत्पुरुषः स्वपिति नाम सता सोम्य तदा सम्पन्नो भवति स्वमपीतोभवति तस्मादेनं स्वपितीत्याचक्षते स्वं ह्यपीतो भवति ॥ १ ॥**

**स यथा शकुनिः सूत्रेण प्रबद्धो दिशं पतित्वा ऽन्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एव मेव खलु सोम्य तन्मनो दिशं दिशं पतित्वा ऽन्यत्राऽऽयतनमलब्ध्वा प्राणमेवोपश्रयते । प्राणबन्धनं हि सोम्य मन इति ॥२॥**

एकविज्ञानेन सर्वं विज्ञातं भवतीति प्रतिज्ञातं तदुपपत्तये तेजोबन्नात्मकस्य निखिलस्याचेतनवर्गस्य ब्रह्मोपादानत्वमभिहितं सम्प्रति चेतनवर्गस्य तदुपादेयतां बोधयितुं प्रस्तौति । उद्दालक

इति । उद्दालको ह किलारुणिः श्वेतकेतुं पुत्रमुवाच किमिति । स्वप्नस्यान्तः सुषुप्तिस्तं स्वप्नान्तं सुषुप्तिस्वरूपं मे मम सकाशात् विजानीहीति । ननु सुषुप्तौ को विशेषो येन तज्ज्ञातव्यमित्यत आह । यत्रेति । यत्रकाले । एषश्चासौपुरुषश्चेत्येतत्पुरुषो जीवः स्वपिति नाम । पुरुषः स्वपितीत्येतन्नाम भवति पुरुषः स्वपितीति-शब्दो प्रयुज्यत इत्यर्थः । पुरुषस्यस्वापोयदेतियावत् । तदा सता परमात्मना सम्पन्नः सङ्गतो भवति । किन्तत्रमानमित्यतः सुप्ते स्वपितिशब्दप्रयोगएवेति वक्तुमुक्तमेव विशदयति । स्वपीति । तदा प्रस्वापकाले स्वं स्वतन्त्रपरमात्मानमपीतो भवति । अन्तर्भूतो-भवति। एष पुरुष इतिवर्त्तते । सुषुप्तौ जीवात्मनः सम्पत्तिसद्भावे प्रमाणमाह तस्मादिति । हि यस्मात्स्वमपीतो भवति तस्मादेवेनं सुषुप्तं स्वपितीत्याचक्षते विद्वांसः । अन्यथा तन्नोपपद्येत । स्वपितिशब्दप्रयोगादेव सुप्तस्य जीवस्य स्वनामकभगवतसम्पत्तिर्लयरू-पाऽवगम्यते ॥ १ ॥

एवं जागरस्वप्नयोः संसारे वाशरीरेन्द्रियमनसामितस्ततो विक्षेपेण श्रान्तस्य जीवस्य श्रमापनोदाय सुषुप्तौ परमेश्वराश्रयण-मभिधाय तत्र दृष्टान्तमाह । स यथेति । स वक्ष्यमाणो दृष्टान्तः यथा । शकुनिः पक्षी शकुनिघातकस्य हस्तगतेन सूत्रेण प्रबद्धः दिशं दिशं बन्धनमोक्षार्थी सन् प्रतिदिशं पतित्वान्यत्र बन्धनादायतन-माश्रयं विश्रमाणायालब्धाऽप्राप्य बन्धनमेवोपाश्रयते एवमेव अन्न-मयं हि सोम्य मन इतिप्राङ्निर्दिष्टं मनः स्वप्नजागरणयोः दिशं प्रतिदिशं पतित्वा प्राणादन्यत्रायतनमलब्धा प्राणं मुख्यप्राणमेवोप-श्रयते दृष्टान्ते बन्धनमेवोपश्रयत इत्युक्तत्वादत्रापि प्राणस्य बन्धन-त्वमुपपादयति । प्राणेति । हि यस्मात् मनः प्राण एव बन्धनं तस्मात् प्राणमेवोपश्रयत इत्यर्थः ॥ २ ॥

**अशनापिपासे मे सोम्य विजानीहीति यत्रैतत्पुरुषोऽ-शिशिषति नामाप एव तदशितं नयन्ते तद्यथा गोनायोश्व-**

नायः पुरुषनाय इत्येवं तदप आचक्षतेऽशनायेति तत्रैतच्छुङ्ग-मुत्पतितं सोम्य विजानीही नेदममूलं भविष्यतीति ॥ ३ ॥

एवं सुषुप्तौ जीवात्मनःसत्सम्पत्तित्वमभिधाय जाग्रदवस्थायामपि अशनापिपासयोः स्वरूपपर्यालोचनया प्रत्यगात्मनां भगवदाधीनत्वं प्रतिपादयितुं प्रस्तावयति । अशनेति । हेसोम्याशितुमिच्छाऽशनाया यालोपः च्छान्दसः । पातुमिच्छा पिपासा ते, अशनापीपासे तयोस्स्वरूपं विजानीहीत्युवाचेति सम्बन्धः ॥ कस्तत्र विशेष इत्यत आह । यत्र तदैतत्पुरुषः संसार्यशिशिषति अशितुमिच्छति नाम तत्तदा तदशितमन्नं पीता आप एव तदभिमानी प्राण एवेति यावत् । नयन्ते रसवीर्यादिभावेन परिणामयन्ते । अन्नं रसादिरूपेण प्राणः परिणयत्यसाविति वचनात् । अशितनेतृत्वमपां कुत इत्यतो अशनायाशब्दाभिधेयत्वादिति सदृष्टान्तमाह । तद्यथेति । तत् वक्ष्यमाणं निदर्शनं यथा गां नयतीति गोनाय इत्युच्यते गोपालो, यथाश्वं नयतीत्यश्वनाय इत्युच्यतेऽश्वपालः । यथा च पुरुषान्नयतीतिपुरुषनाय इत्युच्यते राजा सेनापतिर्वा । एवं तत्तस्मादशितनेतृत्वादपस्तदभिमानिदेवतां प्राणमशनायेत्याचक्षते विद्वांसः । नन्वेतावता प्रत्यगात्मनोऽवभिमानिप्राणाधीनत्वेऽपि भगवदधीनत्वं कुत इत्यत आह । तत्रेति । तत्रैवं सति अद्भिरसादिभावेनाशितस्य जीर्णीभावे सति तद्रेतोद्वारा एतत्प्रत्यक्षसिद्धं शिशुशरीरमुत्पतितं सोम्य विजानीहि । शुङ्गमिति-दृष्टान्तोक्तिः । वटवीजात्परिणताच्छुंगमङ्कुरमिवेत्यर्थः । किंतत इत्यत आह । नेति । हेसोम्येदमुत्पतितं शरीररूपं कार्यममूलमकर्तृकं न भविष्यतीतिविजानीहि । आत्रायं प्रयोगः । इदं सकर्तृकं कार्यत्वादङ्कुरवदिति ॥ ३ ॥

तस्य क्वमूलं स्यादन्यत्रान्नादेवमेव खलु सोम्यान्नेन शुङ्गेनापोमूलमन्विच्छद्भिः सोम्य शुङ्गेन तेजोमूलमन्विच्छ त्तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः प्रजाः सदायतनाः सत्प्रतिष्ठाः ॥ ४ ॥

**अथैतत्पुरुषः पिपासति नाम तेज एव तत्पीतं नयते तद्यथा गोनायोऽश्वनायः पुरुषनाय इत्येवं तत्तेज आचष्ट उदन्येति तत्रैतदेव शुङ्गमुत्पतितं सोम्य विजानीहि नेदममूलं भविष्यतीति ॥ ५ ॥**

एवंशरीरस्य कार्यत्वेन कर्तृत्वसामान्येऽनुमिते किन्तदिति जिज्ञासायां परिशेषेणान्नमेवेति भावेन प्रसक्तप्रतिषेधं प्रतिविधत्ते । तस्येति । तस्य शरीरस्यान्नादन्यत्र किं मूलं स्यात् । न किमपि । तस्मादन्नमेव परिशेषेण मूलमित्यर्थः । अन्नस्यापि कार्यत्वाच्छुङ्गवत्सकारणकत्वमनुमाय परिशेषेणकारणप्रकृत्वमनुमेयमेवेत्याह । एवमेवेति । यथा शरीरे एवमेव सोम्यान्नेन कार्येण शुङ्गेन दृष्टान्तेन कर्तृसामान्यमनुमाय परिशेषेणापोमूलमन्विच्छानुमातुमिद्धेत्यर्थः । एवमेव सोम्य तेजसा कार्येण शुङ्गेन दृष्टान्तेन कर्तृसामान्यमनुमाय परिशेषेण तेजोमूलमन्विच्छ । एवमेव सोम्य तेजसा कार्येण शुङ्गेन दृष्टान्तेन कर्तृसामान्यमनुमाय सत्परं ब्रह्म मूलमन्विच्छ । तर्हि सतस्तेजोमात्रमूलत्वम् । न सर्वभूतमूलत्वमित्याशङ्कां परिहरन्नुपसंहरति । सन्मूला इति । हेसोम्येमाः सर्वाः प्रजाः सत्परं ब्रह्म मूलं कर्तृ यासां ताः सन्मूलाः । न केवलमेतावत् किन्तु सत्परं ब्रह्मायतनमाश्रयो यासां ताः सदायतनाश्च न केवलमुक्तरीत्या प्रत्यगात्मनां संसार एव भगवदाधीनत्वं किन्तुमोक्षेऽपीत्याह । सप्रतिष्ठा इति । सत्परं ब्रह्म प्रतिष्ठा प्रतिष्ठापकं यासां प्रजानां ताः सत्प्रतिष्ठा इत्यर्थः ॥ ४ ॥

एवमशनायास्वरूपपर्यालोचनया शारीराणां भगवदधीनत्वमुपपाद्य पिपासास्वरूपपर्यालोचनयाऽपि तदुपपादयति—अथेति । योजनापूर्ववदेव । तत्तेज आचष्टे विद्वानुदन्येति । उदं नयतीतिव्युत्पत्तेः । पूर्वमन्नकार्यस्य प्रकान्तत्वात्तच्छरीरेणान्नद्वारा सदनुमानमिहत्वपकार्यस्य प्रकान्तत्वात्तद्वारैवानुमानमित्येवधेयम् ॥ ५ ॥

तस्य क्वमूलं स्यादन्यत्राद्भ्योऽद्भिः सोम्यशुङ्गेन तेजोमूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ सन्मूलाः सोम्येमाः सर्वाः प्रजाः सदायतनाः सत्प्रतिष्ठाः यथा तु खलु सोम्येमास्तिस्त्रोदेवताः पुरुषं प्राप्य त्रिवृत्त्रिवृदेकैका भवति तदुक्तं पुरस्तादेव भवत्यस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम् ॥६॥

तस्येति पूर्ववत्समानम् । ननु पूर्वोक्तास्तेजोबन्नाभिमानिदेवताः शरीरं प्राप्य कथं शरीरधातुं कुर्वन्तीत्यतस्तत्प्रागेवोक्तमनुसन्धेय-मित्याह-यथेति । हे सोम्येमास्तिस्रो देवता स्तेजोबन्नाभिमानिन्यो पुरुषं शरीरीणं प्राप्य यथा तु येनैव प्रकारेणैकैका देवता त्रिवृत् त्रिवृद्भवति । तत्पुरस्तादेवोक्तं भवति । अन्नमशितं त्रेधा विधीयत इत्यादिना तदेवानुसन्धेयमिति भावः ॥ अस्य पुरुषस्य प्रयाण-कालेऽपि सत्सम्पत्तिं प्रकारमाह । अस्येति । अस्य पुरुषस्य म्रियतो म्रियमाणस्य वाङ्मनसि सम्पद्यते मनस्युपसंह्रियते मनपूर्वको हि वाग्व्यापारः । "यद्वै मनसा ध्यायति तद्वाचा वदति" । इतिश्रुतेः । मनोऽपि यदोपसंह्रियते तदा मनः प्राणे सम्पन्नो भवति । प्राणश्चो-पसंहृतस्तेजसि सम्पद्यते । तेजः परस्यां देवतायां सम्पद्यते । तथाचोक्तरीत्या प्राणो जीवसम्पन्नः जीवेन सह तेजश्शब्दोपल-क्षितेषु सर्वेषु भूतेषु सम्पन्नो भवति ततः परं सुखदुःखोपभोगाय सविश्र-माय सजीवानां भूतसूक्ष्माणां परमात्मनि सम्पत्तिर्भवतीत्यत्यभिसन्धिः॥६॥

स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव माभगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ७ ॥

इति षष्ठाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

एतादृशस्तच्छब्दितः स एष अणिमा अणुवद्दुर्विज्ञेयः मानान्तरागोचरः ॥ ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा । अस्यार्थः प्रागुपदर्शितरीत्यावसेयः । एवं सर्वत्रसिद्धं तदात्मकत्वं श्वेतकेतावुपसंहरति तत्त्वमसि श्वेतकेताविति एवमुक्तः श्वेतकेतुः सुषुप्तिकाले प्रजानां सत्सम्पत्तौ वयं सति सम्पन्ना इति प्रतीतिर्भवितव्या ॥ सुषुप्तौ परमात्मनि लीनाः प्रत्यगात्मानः पुनश्च नोपपद्येरन् । अत सुषुप्तौ प्रजानां सत्सम्पतिर्नाश्रद्धेयेति मन्वानः श्वेतुकेतुराह । भूय एवेति । विशिष्य विज्ञापयत्विति श्वेतकेतुना प्रार्थितस्तथेत्यङ्गीकृतवानित्यर्थः ॥ ७ ॥

इति षष्ठाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

एतत्खण्डविषयाकाधिकरणानि लिख्यन्ते । उत्क्रान्तिपादे अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायांमिति सम्पत्तिः श्रूयते तत्र संशयः । किं वाग्वृत्तिर्मनसि सम्पद्यते उत वागवेति, तत्र वाचोमनः प्रकृतिकत्वाभावात्स्वरूपलयस्तत्र न सम्भवतीति वागादीनां मनोऽधीनः वृत्तिकत्वाद्वाग्वृत्तिमात्रमितिपूर्वपक्षे । उच्यते ।

वाङ्मनसि दर्शनाच्छब्दाच्च । ब्र० सू० । ४ । १ । १ ॥

वाक्स्वरूपस्यैव लयो वोध्यः कुतः दर्शनात् । वागिन्द्रियउपरतेऽपि मनः प्रवृत्तिदर्शनात् । वाङ्मनसि सम्पद्यते इतिशब्दाच्च । अन्यत्रशब्दस्वारस्य भङ्गः स्यात् । नहि वृत्त्युपरमे तत्र प्रमाणान्तरेण वागिन्द्रियमवगम्यते । येन वृत्तिसम्पत्तिः कल्प्या । अप्रकृतौ लयाभावात् सम्पत्तिशब्दः संयोगाभिप्राय इति सूत्रार्थः ।

अतएव सर्वाण्येवनु । ब्र० सू० । ४ । १ । २ ॥

अतएव दर्शनात् शब्दाच्च वागिन्द्रियमनुसर्वाण्यपीन्द्रियाणि मनसि सम्पद्यन्ते दर्शनं तावत् पूर्ववदेव । शब्दस्तु "तस्मादुपशान्ततेजाः

पुनर्भवमिन्द्रियैर्मनसि सम्पद्यमानैरिति अतोवागादीनीन्द्रियाणि मनसि सम्पद्यन्त इति स्थितम्।

तथा मनः प्राण इत्यस्य मनोवृत्तेरेव प्राणे अप्ययः। मनःशब्दस्य मनोवृत्तिष्वपि प्रचुरप्रयोगसत्वात्, नतु पूर्वोक्तरीत्या संयोगविशेषः सम्पत्तिशब्दार्थ इति प्राप्त उच्यते।

( तन्मनः प्राणे उत्तरात् ) ब्र० सू०। ४। २। ३॥

तत्सर्वेन्द्रियसंयुक्तं मनः प्राणे सम्पद्यते तेन संयुज्यते। कुतः उत्तरात्। मनः प्राण इति वाक्यशेषात्। किञ्च "अन्नमयं हि सोम्य मन आपो मयः प्राण" इति श्रुत्याऽन्नादिनां मनः प्राणयोरप्यायनस्यैव विवित्तितत्वान्न तदुपादेयत्वं मनसोऽहङ्कारोपादेयत्वात्। प्राणस्य चाकाशोपादेयत्वान्नतत्रावजन्यत्वशङ्कावकाशः। तथाच मनःशब्दस्य मनोवृत्तिपरत्वेऽपि सम्पतिश्रुतेर्गौणत्वावश्यंभावेन मनःश्रुतेरपि गौणत्वाश्रयणस्यान्यायत्वादिति सिद्धान्तितम्॥२॥
प्राणस्तेजसि सम्पद्यत इति प्राप्तउच्यते।

साऽध्यत्ते तदुपगमादिभ्यः। ब्र० सू०। ४। २। ४॥

सः प्राणो देहेन्द्रियाधिपे जीवात्मनि संयुज्यते कुतः। तदुपगमादिभ्यः। एवमात्मानमन्तकाले सर्वे प्राणाः अभिसमायन्तीति प्राणानां जीवोपगमस्य तेन सहोत्क्रान्तेश्च श्रवणात् जीव एव सम्पद्यते। गङ्गया संयुज्य सागरं गच्छन्त्यां यमुनायां यमुना सागरं गच्छतीतिप्रयोगवत् जीवद्वारा प्राणस्य तेजः सम्पत्तावपि प्राणस्तेजसीत्युक्तिरुपपद्यते। इति स्थितम्॥ ३॥

तथा प्राणस्तेजसीति जीवसंयुक्तस्य तेजोमात्र एव सम्पत्तेः श्रवणान्नसर्वंभूतसम्पत्तिरितिप्राप्ते। उच्यते।

भूतेषु तच्छ्रुतेः। ब्र० सू०। ४। २। ५॥

पृथिवीमय आपोमय वायुमय आकाशमयस्तेजोमय इति सञ्चरतो जीवस्य सर्वभूतमयत्वश्रवणात्।

नैकस्मिन् दर्शयतो हि । ब्र० सू० । ४ । २ । ६ ॥

नैकस्मिन्नेव प्राणः संयुज्यते । एकैकस्याकार्यक्षमत्वात् दर्शयतो हि कार्याक्षमत्वं श्रुतिस्मृती । नामरूपे व्याकरवाणि तासां त्रिवृतं त्रिवृतमेकैकां करवाणीति नामरूपव्याकरणार्हत्वाय त्रिवृत्करणमुपदिश्यते ॥ नानावीर्याः पृथग्भूतास्ततस्ते संहतिं विना । नाशक्नुवन् प्रजाः स्रष्टुमसमागम्य कृत्स्नशः ॥ समेत्यान्योन्यसंयोगं परस्परसमाश्रयाः। महदाद्या विशेषान्ता ह्यण्डमुत्पादयन्तिते ॥ इतिस्थितम् ॥४॥

सइन्द्रियः स प्राणो जीवात्मोत्क्रान्तिसमये तेजः प्रभृतिभूतसूक्ष्मेषु संयुज्यते, इत्युक्तं तत्राशङ्क्य परिहृतञ्च तानि पुनर्विदुषोवागादीन्द्रियाणि प्राणो भूतसूक्ष्माणि च किं परदेवतायां समवलीयन्ते उत यथाकर्म यथाविद्यं गच्छन्तीति संशये यथा कर्म यथाविद्यमितिपूर्वपक्षः । तदानीं पुण्यादिफलभोगाभावेन सम्पत्तेर्निष्प्रयोजनत्वादितिप्राप्ते आह ।

( तानि परे तथा ह्याह ) ब्र० सू० । ४ । २ । १४ ॥

तानि विदुषो वागादिप्राणभूतानि परे परस्मिन्सर्वात्मनि ब्रह्मणि सम्पद्यन्ते सर्वस्य तदुपादेयत्वात् कुतः तथेति । हि यतः "तेजःपरस्यां देवतायामि"ति श्रुतिरेव परमात्मानं तथा सुषुप्तिप्रलययोरिव विश्रामस्थानत्वेनाह, इति स्थितम् ॥ ५ ॥

सेयं परमात्मनि विद्वत्प्राणादिसम्पत्तिः किं मनः प्रभृतिषु वागादिसम्पत्तिवत्संयोगरूपा, उत समुद्रे नद्यादिसम्पत्तिवत्तादात्म्यापत्तिरूपेति विषये वाङ्मनसि सम्पद्यत इतिश्रुतस्यैव सम्पत्तिपदस्य "तेजः परस्यामि" त्यत्रानुषङ्गाद्विशेषदर्शनाच्च संयोगापत्तिरूपेति पूर्वपक्षे, उच्यते—

अविभागो वचनात् । ब्र० सू० । ४ । २ । १५ ॥

सर्वात्मनो भगवतः परब्रह्मणः सर्वाधारणत्वात्सर्वकारणत्वाच्च तत्रविद्वत्प्राणादीनां सम्पत्तिरविभागस्तादात्म्यापत्तिरूपैव ।

कुतः वचनात्। एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्यास्तंगच्छन्तीति परमात्मनि प्राणादिकलां सम्पत्तिमुक्त्वा भिद्यते चासां नामरूपे पुरुष इत्येवं प्रोच्यते "सएषोऽकलोऽमृतो भवती" ति तासां नामरूपभेदोक्तेः। अयन्मभिप्रायः। स्थूलदेहादुत्क्रम्य देवयानेन गतो विद्वान् प्राकृतमण्डलं भित्वा प्रकृतिविष्णुपदसीम्नो-विवेचनहेतुभूतां सरिद्वरां विरजां यावत्प्राप्नोति तावत्सूक्ष्मशरीर-मनुवर्त्तते। तत्र सूक्ष्मशरीरं परस्यां देवतायां हित्वा दिव्याप्राकृताना-दिसिद्धमानवानीतब्राह्मयालङ्कारैरलङ्कृतो विष्णुलोकं परं पदं प्रविश्य परं ब्रह्माधिगच्छतीतिस्थितम्॥ ६॥ प्रकृतमनुसरामः।

**यथा सोम्य मधु मधुकृतो निस्तिष्ठन्ति नानात्ययानां वृक्षाणाꣳ रसान्समवहारमेकताꣳ रसं गमयन्ति॥ १॥**

**ते यथा तत्र न विवेकं लभन्ते ऽमुष्याहं वृक्षस्य रसोऽस्म्य मुष्याहं वृक्षस्य रसोऽस्मीत्येवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पद्य न विदुः सति सम्पद्यामह इति॥ २॥**

**त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दꣳशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति॥ ३॥**

**सय एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव भगवान्विज्ञापयत्विति तथा सोम्येति हो वाच॥ ४॥**

इति षष्ठाध्यायस्य नवमः खण्डः॥ ६॥



किमुवाचेत्याह यथा सोम्येति। हे सोम्य यथा मधुकृतो-भ्रमराः मधुमक्षिका वा मधु निस्तिष्ठन्ति निर्मिमते। कथं नानात्ययानां

नानागतीनां परस्परविलक्षणानां वृक्षाणां रसानां समवहारं समूहमेकतां मिश्रतां गमयन्ति ॥ १ ॥

यथा च ते नाना वृक्षरसास्तत्र मिश्रितायां विद्यमानमपि विवेकं परस्परभेदं न लभन्ते न जानन्ति । अमुष्य वृक्षस्याम्रस्याहं रसोऽस्म्ययं त्वन्यस्येति । तथा परोऽप्यमुष्य पनसस्याहं रसोस्म्ययं त्वन्यस्येति। एवमेव खलु सोम्येमाः सर्वाः प्रजाः सति सम्पन्ना अहं देवदत्तोऽहममुष्य पुत्रः। अधुना सति सम्पन्ना इति वा सम्पत्स्यामह इति वा न जानन्तीत्यर्थः ॥ २ ॥

व्याघ्रो वेत्यादि यद्यद्भवन्ति स्वापात्पूर्वं ते ते आगत्य भवन्ति सुषुप्तेः प्राग् व्याघ्राभिमानिस्थितः स्वापानन्तरमपि व्याघ्रो भवति । पूर्ववासनावासित एवोत्तिष्ठतीति यावत् । ततश्च दर्शनानुसारात्सुषुप्तौ लयो न पुनरुत्थितिविरोधीति भावः ॥ ३ ॥

स य एषोऽणिमा, अणुसूक्ष्म इत्यर्थः ॥ ऐतदात्म्यमिदं पूर्ववत् । एवमुक्तःश्वेतकेतुः सुषुप्तिदशायां परमात्मनि सम्पन्नः स्वापानन्तर मुत्थायागतश्चेत्, प्रातर्गृहादुत्थायागतस्य गृहादागतोस्मीतिप्रतिसन्धानवत् सत आगतोस्मीति प्रतिसन्धानप्रसङ्गात् नैतद्विश्रम्भणीयमिति मन्यमान आह–भूय इति पूर्ववत् ॥ ४ ॥

इति षष्ठाध्यायस्य नवमः खण्डः ॥ ९ ॥

---

**इमाः सोम्य नद्यः पुरस्तात्प्राच्यः स्यन्दन्ते पश्चात् प्रतीच्यस्ताः समुद्रात्समुद्रमेवापियन्ति स समुद्र एव भवति ता यथा तत्र न विदुरियमहमस्मीयमहमस्मीति ॥ १ ॥**

**एवमेव खलु सोम्येमाः सर्वाः प्रजाः सत आगत्य न विदुः सत आगच्छामह इति त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदा भवन्ति ॥ २ ॥**

**स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

इति षष्ठाध्यायस्य दशमः खण्डः ॥ १० ॥

---

हे सोम्येमा- प्रसिद्धा गङ्गाद्याः नद्यः प्राच्यः प्रागञ्चनात् प्राचीशब्दवाच्याः पुरस्तात् स्यन्दन्ते स्रवन्ति । तथा प्रत्यगञ्चनात् प्रतीचीशब्दवाच्याः पश्चात्स्पन्दन्ते । एवमत्यन्तविलक्षणास्ता नद्यो मेघादिद्वारेण समुद्रादागत्योत्पन्नजलत्वात् समुद्रमेवापयन्ति । तत्र समुद्रे इयं गङ्गाहमस्मीयन्तु यमुनाऽयञ्च समुद्र इत्येवमन्याऽपि न विदुः स्वं स्वं वारि नैव जानन्तीत्यर्थः ॥ १ ॥

एवमेव खलु सोम्येमाः प्रजाः सर्वाः सुप्तोत्थिता अपि सत आगता इति न प्रत्यभिज्ञातुं समर्थाः । त इहेत्यादि पूर्ववत् ॥ २ ॥

यदि सुषुप्तौ प्रत्यगात्मनां विनाशः स्यात् तदा सुषुप्तोत्थितस्य सोऽहमित्यनुसन्धानं न स्यादित्युच्यते, तदा प्रेत्यभावानन्तरं कदापि- पूर्वजन्म न स्मरति । अतो देहात् प्रणावियोगसमये प्रत्यगात्मनां नाशः स्यादित्यभिमन्यमानेन भूयो विज्ञापयत्वितिप्रार्थितस्तथास्त्वित्यवोचत् ॥३॥

इति षष्ठाध्यायस्य दशमः खण्डः ॥ १० ॥

---

एतत्खण्डविषयकवाक्याधिकरणमुपन्यस्यते । किं यः सुप्तः स- एव प्रबोधसमये समुत्तिष्ठति, तदन्यो वेति विषयः नियमहेत्वभावाद- नियम इतिपूर्वपक्षे प्राप्त उच्यते ।

स एव तु कर्मानुस्मृतिशब्दविधिभ्यः । ब्र० सू० । ३ । २ । ९ ॥

यः सुप्तः स एव प्रबोधसमये समुत्तिष्ठति कुतः कर्मेत्यादि पूर्वेद्यु- रर्द्धं कृतं कर्मानुस्मृत्य परेद्युस्तत्समये प्रवृत्तिदर्शनात् । योऽहमस्वाप्सं स एवाहं जागर्मीति प्रत्यभिज्ञानात् । त इह व्याघ्रो वा सिंहोवेत्यादि-

शब्दात् । अग्निहोत्रं जुहूयादात्मानमुपासीतेत्यादिविधिभ्यश्च । अन्यथाऽग्निहोत्रादिकर्मस्वर्द्धकृतेष्वन्यश्चेदुत्तिष्ठति तदाग्निहोत्रादिश्रवणादिभोगमोक्षसाधनविधायकाः श्रुतयोऽनर्थकाः स्युः । कृतनाशाकृताभ्यागमप्रसङ्गश्च । अहरहर्जीवानामुत्पत्तिविनाशौ स्यातामितिस्थितम् ॥

प्रकृतमनुसरामः ।

**अस्य सोम्य महतो वृक्षस्य यो मूलेऽभ्याहन्याज्जीवन् स्रवेद्यो मध्येऽभ्याहन्याज्जीवन् स्रवेद्योऽग्रेऽभ्याहन्याज्जीवन् स्रवेत् स एष जीवेनात्मनाऽनुप्रभूतः पेपीयमानो मोदमानस्तिष्ठति ॥ १ ॥**

**अस्य यदेकां शाखां जीवो जहात्यथ सा शुष्यति द्वितीयां जहात्यथ सा शुष्यति तृतीयां जहात्यथ सा शुष्यति सर्वं जहाति सर्वः शुष्यति ॥ २ ॥**

**एवमेव खलु सोम्य विद्धीति होवाच जीवापेतं वाव किलेदं म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

इति षष्ठाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

महतो वृक्षस्य यः कश्चिद्यदि मूलेऽभ्याहन्यात् परश्वादिना सकृद्घातमात्रेण न शुष्यति जीवन्नेव भवति तदा तस्य रसः स्रवेत् । रसमुद्गिरेत् । अङ्कुरमात्रस्याभ्याघातेऽवस्थानासम्भवान्महत इत्युक्तम् ॥ एवं यो मध्येऽभ्याहन्यादित्यादिकमपि व्याख्येयम् । एवं स एषः वृक्षजीवोऽनेन प्रकृतेन जीवेनात्मना परमात्मनानुप्रभूतः प्राप्तोऽधिष्ठितः देहः पेपीयमानः पुनः पुनः भृशं पिबन् मोदमानः तिष्ठति ॥ १ ॥

अस्य वृक्षस्य यदेकां शाखां जहात्यथ इति स्पष्टम् । ततश्च यथा एकैकशाखाशोषो न जीवनाशकृतोऽपितु जीवसङ्कोचकृतः प्रदेशान्तरे जीवात्मनोः सत्त्वेन नाशासम्भवात् । एवं सर्वशोषोऽपि तत्त्यागकृत एव नतु नाशकृतः । अतो मानवादिष्वपि जीवत्यागकृतदेहस्य मरणं न जीवात्मनस्तथासति कृतहानाकृताभ्यागमप्रसङ्गात् । अतः सुषुप्तिमरणदशायां सत्सम्पत्तावपि न जीवनाश इति सिद्धमिति भावः ॥ अणिम्नोऽत्यन्तसूक्ष्माद्रूपस्पर्शादिरहितात्सतो विविधस्थावरजङ्गमादि युतानेकब्रह्माण्डोत्पादकत्वं कथमिति शङ्कमानं प्रति बोधयितुमुत्तरवाक्यमुपादत्ते तथेति ॥ २-३ ॥

इति षष्ठाध्यायस्यैकादशः खण्डः ॥११॥



**न्यग्रोधफलमत आहरेतीदं भगव इति भिन्द्धीति भिन्नं भगव इति किमत्र पश्यसीत्यण्व्य इवेमा धाना भगव इत्यासामङ्गैकां भिन्द्धीति भिन्ना भगव इति किमत्र पश्यसीति न किञ्चन भगव इति ॥ १ ॥**

**तं होवाच यं वै सोम्यैतमणिमानं न निभालयस एतस्य वै सोम्यैषोऽणिम्न एवं महान्न्यग्रोधस्तिष्ठति श्रद्धत्स्व सोम्येति ॥ २ ॥**

**स एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥ ३ ॥**

इति षष्ठाध्यायस्य द्वादशःखण्डः ॥ १२ ॥



हेसोम्यअतो वृक्षान्न्यग्रोधफलमाहरेत्युवाच पिता । आहृत्येदं न्यग्रोधफलमाहृतं भगवो भगवन्निति पुत्रः । इदं फलं भिन्धीति पिता । तद्भित्वा भिन्नं भगव इति पुत्रः । अत्र भिन्ने फले किं पश्यसीति

पिता। अण्व्य इव सूक्ष्मा इवेमाऽधाना बीजानि पश्यामीति पुत्रः। हैअङ्ग, आसां धानानां मध्ये एकां धानां भिन्धीति पिता भित्वा भिन्ना भगव इति पुत्रः। अत्र भिन्नायां धानायां किं पश्यसीति पिता न किञ्चन पश्यामि भगव इति पुत्रः ॥१॥

एवमुक्तवन्तं तमुवाच पिता। यमेतमणिमानं भावभवित्रोरभेदात्। अतिसूक्ष्मं बीजजीवं न निभालयसे न पश्यसि। एतस्याणिम्नः। सामार्थ्यादेवं परिदृश्यमानप्रकारेण महान्न्यग्रोधस्तिष्ठति अतोऽणोरपि सच्छब्दिता त्परिदृश्यमानस्य स्थूलप्रपञ्चस्योत्पत्तिरूपपन्ना नात्रान्यथात्वशङ्काकार्येत्याह-श्रद्धत्स्व सोम्येति पिता। अत्र वृक्षः प्रपञ्चः। फलं शरीरम्। धाना जीवः। तत्र यथा सूक्ष्मवटबीजे दृश्यमानेऽपि यत्प्रभावाद्वटावस्थानं सबीजान्तर्गतो बीजजीवः परमात्मावा यथा परमसूक्ष्मत्वान्न दृश्यते। तथा जीवादपि सूक्ष्मत्वात्तदन्तर्गत इत्युक्तं भवति ॥ २ ॥

यदि कारणं ब्रह्म कर्यानुगतं तर्हि कथं नोपलभ्यते। अनुपलभ्यामानस्यानुगततत्वमुररीक्रियते चेत्त त्रप्रमाणं वाच्यमित्यभिप्रायेण प्रार्थितस्तथेत्युक्तवान् ॥३॥

इति षष्ठाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

**लवणमेतदुदकेऽवधायाथ मा प्रातरुपसीदथा इति स ह तथा चकार तं होवाच यद्दोषा लवणमुदकेऽवधा अङ्ग तदाहरेति तद्धावमृश्य न विवेद ॥१॥**

**यथा विलीनमेवाङ्गास्यान्तादाचमेति कथमिति लवणमितिमध्यादाचमेति कथमिति लवणमित्यान्तादाचमेति कथमितिलवणमित्यभिप्रास्यैतदथ मोपसीदथा इति तद्ध तथा चकार तच्छश्वत्सम्वर्त्तते तं होवाचात्र वाव किल सत्सोम्य न निभालयसेऽत्रैव किलेति ॥२॥**

**स एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान्विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥**

इति षष्ठाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥

---

लवणमित्यादीति । हेऽङ्ग एतत्पिण्डरूपं लवणमुदके घटादिस्थेऽवधाय निक्षिप्य मा मां प्रातरुपसीदथाः = उपागच्छेति पित्रोक्तः स तथा चकार । तं होवाच पिता । हेऽङ्ग दोषा रात्रौ यल्लवणमुदकेऽवधाः आवधास्तदाहरेति । तल्लवणमुदके हस्तेनावमृश्य न वेद पुत्रः । यथा लवणं विद्यमानमपि विलीनं सच्चक्षुषा त्वचा वा नोपलभ्यते एवंजीवात्मस्वरूपमपीति भावः । एवं चक्षुषा त्वचाप्यग्राह्यस्य लवणस्योपायान्तरेणावगतिप्रकारं दर्शयति । अस्यामिति । अङ्गास्योदकस्यान्तात् पूर्वदिगवस्थितादवयवादुद्धृत्यैकदेशमाचमेति पिता । आचान्तवन्तं कथं तिष्ठसीति पप्रच्छ पिता । लवणं लवणरसोपेतमित्याह पुत्रः । एवं मध्यादित्यादिव्याख्येयम् ॥ अन्त्यात्पश्चिमदिगवस्थितात् । एतत् उदकमभिप्रास्य निरस्याथ मा मां उपसीदथा इति पिता तद्ध तथा चकार पुत्रः । तल्लवणं जले शश्वत् सर्वदा सम्यग्वर्त्तते इत्युक्तवन्तं शिष्यं प्रति रसनेन्द्रियेणोपलभ्यमानतया वस्तुतः सदेव लवणं यथा चक्षुषा त्वचा वानोपलभ्यते । एवमेवागमोपदेशादिनाऽवगन्तुं योग्यमेव सच्छब्दवाच्यं परं ब्रह्म । अत्रैव किल वर्त्तते इति न निभालयसे द्रष्टुं न शक्नोषि न पश्यसीत्यर्थः ॥१।२॥

सर्वव्यापि ब्रह्म केनोपायेन प्राप्यते दृश्यते चेति जिज्ञासावता श्वेतकेतुना भूय एव पृष्टे तथा सोम्येति होवाच पिता ॥३॥

इति षष्ठाध्यायस्य त्रयोदशः खण्डः ॥१३ ॥

---

यथा सोम्य पुरुषं गन्धारेभ्योऽभिनद्धाक्षमानीय तं ततोऽतिजने विसृजेत् स तत्र प्राङ्वोदङ्वाऽधराङ्वाप्रत्यङ्वा प्रध्मायिताभिनद्धाक्ष आनीतोऽभिनद्धाक्षो विसृष्टः ॥१॥

तस्य यथाभिहननं प्रमुच्य प्रब्रूयादेतां दिशं गान्धारा एतां दिशं व्रजेति स ग्रामाद्ग्रामं पृच्छन् पण्डितो मेधावी गान्धारानैवोपसम्पद्येतैवमेवेहाचार्य्यवान् पुरुषो वेद तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथसम्पत्स्य इति ॥२॥

स य एषोऽणिमैतदात्म्यमिदं सर्वं तत्सत्यं सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

इतिषष्ठमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥



हेसोम्य यथा पुरुषं धनिकं गन्धारेभ्यो गन्धारसंज्ञिकेभ्यो जानपदेभ्योऽभिनद्धाक्षम्। अक्षिणि व ध्वेति यावत्। आनीय तं ततोऽनन्तरम्। अतिजने जनरहितेऽरण्ये विसृजेच्चौरः॥ स विसृष्टो यथा तत्रारण्ये प्राङ्वोदङ् वाधराङ् वा सर्वदिगभिमुखः प्रध्मायीत। उच्चैः शब्दं कुयात्॥ किमिति। अभिनद्धाक्षः। आनीतोस्मि अभिनद्धाक्षो विसृष्टोऽस्मीति ॥१॥

यथा सम्यक् तद्वाक्यं श्रुत्वा कश्चित् कृपावान्तस्याभिहननं वन्धनं प्रमुच्य ब्रूयात् एतां दिशमस्यां दिशि गन्धाराः सन्ति । अत एतां दिशं व्रजेति स तेनोपदिष्टाद् ग्रामान्निर्गत्यापरं ग्रामं पृच्छन् पण्डितः प्राज्ञो मेधावी स्मृतिमान् गन्धारानेवोपसम्पद्यते पश्यति प्राप्नोति च एवमेव अनाद्यविद्यादिभिराच्छादितनिजज्ञानः पुरुषो जीवः संसारे पतितः परमेश्वरानुग्रहाज्जातजिज्ञास आचार्य्यवान गुरूपदेशं लब्ध्वेति यावात् । एवमाचार्योपदेशेन ब्रह्मात्मकस्त्वमसि अतस्तदात्मकतया स्वात्मानमनुसन्धत्स्वेत्युपदिष्टस्तदात्मकत्वमनुसन्धत्ते। ननु यथान्योपदेशेन

वद्धाक्षः स्वगृहं पश्यति व्रजति च तथा पुमानाचार्योपदेशेन ब्रह्मात्मकत्वेनानुसन्धाननिष्ठस्य मोक्षे कथं विलम्ब इत्यत आह। तस्येति। तादृशानुसन्धानवतो मुमुक्षोस्तावानेव विलम्वः यावत्प्रारब्धकर्मारब्धशरीरान्न विमोक्ष्यते तदनन्तरन्तु सद्रूपं ब्रह्म सम्पत्स्यते। नविमोक्ष्येऽथसम्पत्स्य इति पुरुषव्यत्यय च्छान्दसः ॥२॥

इदं चिदाचिदात्मकं जगत् सत्यं प्रमाणप्रतिपन्नं सर्वं जगदैतदात्म्य ब्रह्मव्याप्यत्वेन ब्रह्मात्मकम्। देहविमोक्षोत्तरभाविनी ब्रह्मसम्पत्तिरिति रिक्तं वचः॥ देहोऽहं मनुष्योऽहमित्यभिमानस्य यावदात्मभावित्वेन कदाप्यनुपरमाद्देहराहित्योपजीविनी ब्रह्मसम्पत्तिरपि न श्रद्धयेति मन्यमानेन श्वेतकेतुना भूयएव भगवान्विज्ञापय- त्विति प्रार्थितस्तथेत्युवाचेत्यर्थः ॥

इति षष्ठाध्यायस्य चतुर्दशः खण्डः ॥१४॥

---

चतुर्थाध्याये सर्वे पाप्मानः प्रदूयन्ते सर्वकर्मप्रदाहश्रवणात् ब्रह्मविद्योत्पत्त्यनन्तरमेव सर्वकर्म्मणां नाशः देहस्थितिस्तु चक्रभ्रमणादिवत्संस्कारवशादुपपद्यत इति प्राप्त उच्यते—

अनारब्धकार्ये एव तु पूव तदवधेः। ब्र० सू० १। ४। १५॥

पूर्वे सुकृतदुष्कृते कर्मणी अनारब्धकार्ये अपवृत्तफले एव विद्यया क्षीयेते नतु प्रवृत्तफले कुतः। तदवधेः। तस्य तावदेव चिरं यावन्नविमोक्ष्ये अथ सम्पत्स्यते। इति देहपाताविलम्वावधित्वश्रवणात्। यावच्छरीरधारणं प्रारब्धकर्मानुवृत्तेरवश्यंभावात् कर्मव्यतिरिक्तस्य देहसंस्कारस्य सद्भावे प्रमाणाभावादित्युक्तम्। तथा भोगेन त्वितरे क्षपयित्वाथसम्पद्यते। ब्र० सू० ।४।१।१६॥ तु शब्दश्शङ्कानिरासार्थः इतरे प्रवृत्तकार्येषु एव पापरूपे कर्मणी स्वप्रवृत्तफलभोगेन क्षपयित्वा ऽथ तत्फलसमाप्त्यनन्तरं ब्रह्म सम्पद्यते। प्रारब्धं कर्म यदि ह्येकशरीरे भोग्यं तर्हि तच्छरीरावसाने मोक्षः। अनेकशरीरभोग्यञ्चेदनेकशरीरावसान इति राद्धान्तः प्रकृतमनुसरामः ॥

पुरुषं सोम्योपतापिनं ज्ञातयः पर्युपासते जानासि मां जानासि मामिति तस्य यावन्न वाङ् मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां तावज्जानाति ॥१॥

अथ यदास्य वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायामथ न जानाति ॥२॥

स एषोऽणिमैतदात्म्यमिदꣳ सर्वं तत्सत्यꣳ स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सोम्येति होवाच ॥३॥

इति षष्ठाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥



हेसोम्योपतापिनं रोगिणं पुरुषं ज्ञातयः पर्य्युपासते = परित उपविशन्ति । किं कुर्वतः । हेदेवदत्त त्वं मां जानासि मां जानासीति वदन्तः । एवमेभिरुक्ते स कदा जानाति कदाचन जानातीत्यत आह । तस्येति । म्रियमाणस्य पुरुषस्य वाक् मनसि यावन्न सम्पद्यते प्रस्तव्यापारा न भवति । मनश्च प्राणे न सम्पद्यते प्राणश्च तेजसि न सम्पद्यते । तेजः परस्यां देवतायां न सम्पद्यते तावज्जानाति ॥१॥

अथ यदास्य पुंसः वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायां सम्पद्यते । अथ तदा न जानाति मरणसमये सत्सम्पत्तौ सत्यां देहाभिमानो निवर्त्तते ततश्च देहाभिमानप्रयुक्ता देहसम्बन्धनित्यता शङ्काऽपाकृता भवति । तस्य तावदेवचिरमिति देहसम्बन्धात्यन्तनिवृत्तिप्रतिपादिकायाः श्रुतेर्नानुपपत्तिरिति भावः ॥ ननु देवमनुष्यादिप्रकृत्यात्मकाभिसन्धानादनर्थो भवति सदात्मकत्वेन तदीयत्वाद्यनुसन्धानादनर्थनिवृत्तिरिति न श्रद्धेयं नह्यभिसन्धिर्भेदमात्रेण महापुरुषार्थो पुरुषार्थौ दृष्टचराविति मन्यमानेन श्वेतकेतुना भूय एव मां भगवान् विज्ञापयत्विति प्रार्थितस्तथास्त्वित्युवाचेत्यर्थः ॥३॥

इति षष्ठाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

पुरुषं सोम्योत हस्तगृहीतमानयन्त्यपहार्षीत् स्तेयमकार्षीत् परशुमस्मै तपतेति स यदि तस्य कर्ता भवति तत एवानृतमात्मानं कुरुते सोऽनृताभिसन्धोऽनृतेनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स दह्यतेऽथ हन्यते ॥१॥

अथ यदि तस्याकर्ता भवति तत एव सत्यमात्मानं कुरुते स सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं प्रतिगृह्णाति स न दह्यतेऽथ मुच्यते ॥२॥

स यथा तत्र नादाह्येतैतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो इति तद्धास्य विजज्ञाविति विजज्ञाविति ॥३॥

इति षष्ठाध्यायस्य षोडशः खण्डः ॥ १६ ॥



इति छान्दोग्योपनिषदि षष्ठमोध्यायः समाप्तः ॥ ६ ॥

शृणु सोम्य राजद्रव्येऽपगते सति शङ्कास्पदं राजाहमिति वदन्तमतद्दर्हं वापुरुषं हस्तगृहीतं बद्धहस्तमानयन्ति राजभटाः। किङ्कृतवानयमिति पृष्टाश्च अपहार्षीत् स्तेयमकार्षीदितिवदन्तः। आनयन्तीति सम्बन्धः पश्यतोहरत्वमपहारः, अन्यत्स्तेयम् अस्य-ततस्तेनेनेदं मया कृतमित्युक्ते भटान् प्रति राजा वक्ति। परशुमस्मै परीक्षार्थं तपतेति । स गृहीतो यदि तस्यापहारादेः कर्ता भवति अथा च नेति ब्रूते । स तत एवं कृत्वापि नेतिवचनादेवात्मानमनृतभाषिणं कुरुते । सनृतोऽभिसन्धिरस्येति तथोक्तोऽनृतेनात्मानमन्तर्धाय आच्छाद्य परशुंतप्तं प्रतिगृह्णाति। स दह्यते हन्यते राजभटैः ॥१॥

अथ स गृहीतो दि तस्यामहारादेरकर्ता भवति नेति ब्रूते च। ततएवाकर्तृत्वे वनेतिवचनदार्ढ्यादेवात्मानं सत्यभाषिणं कुरुते ।स-सत्याभिसन्धः सत्येनात्मानमन्तर्धाय परशुं तप्तं गृह्णाति । स न

द्ब्रह्मतेऽथमुच्यते । शिक्षकेभ्यः एवं प्रकृत्यात्मत्वलक्षणासत्यानुसन्धाननिष्ठस्य नानर्थपरिहारः अपितु ऐतदात्म्यमिदं सर्वं तत्सत्यमिति सदात्मकत्वलक्षणसत्याभिसन्धिमतः पुंसः संसारानर्थत्वं निवर्त्तत इत्यर्थः॥२॥

तत्त्वमसीत्यत्र तच्छब्दः सर्वज्ञसर्वशक्तिविश्वात्मपरब्रह्मभूतस्वतन्त्रसत्ताश्रयप्रतिपादनपरः। त्वंपदश्च तदात्मीयतदात्मकपरतन्त्रसत्ताश्रयजीववाचकः, असिशब्दश्चोभयसम्बन्धाभिधानपरः, स च सम्बन्धस्तदात्मकस्य त्वम्पदवाच्यस्य तत्पदार्थेन सह स्वातन्त्र्यसत्वाभेदसहिष्णुपरतन्त्तसत्त्वभेदरूपः । तत्पदार्थवृत्तिस्वातन्त्र्यसत्ताश्रयाभिन्नब्रह्मात्मकपरतन्त्रसत्ताश्रयाभिन्नस्त्वं पदार्थं इति वाक्यार्थः । तत्पदार्थो विश्वात्मा, त्वम्पदार्थःक्षेत्रज्ञान्तरात्मा, तयोरभेदो घटो द्रव्यं पृथिवीद्रव्यमित्यादिवद् मुख्य एव । ननु तत्पदार्थो विश्वात्मा पुरुषोत्तम इति निर्विवात्वान्नात्रशङ्कावकाशः । परन्तु त्वंपदार्थस्य क्षेत्रज्ञतया सुप्रसिद्धत्वात् कथं क्षेत्रज्ञान्तरात्मत्वं प्रतिपाद्यते, इति चेदुच्यते । यथाग्नेर्ढगित्यत्राग्निशब्दोऽकारगकाराद्यवच्छिन्नानुपूर्वीकाग्निशब्दवाचकः अग्नौ जुहोतीत्यत्र स एवाग्निशब्दो दहनप्रकाशनादिशक्त्यवच्छिन्नवस्तुविधायकः । उभयार्थविधायकत्वमग्निशब्दस्य शक्यत्वेन मुख्यमेवेति शाब्दिकानां मतं तथैव ह्यौपनिषदानां सिद्धान्ते सर्वेषामपि ब्रह्मरुद्रादिचेतनाचेतनवस्तुमात्रपराणां शब्दानां तत्तत्पदार्थवाचकत्वे तत्तादात्मभूतब्रह्मपरत्वमविरुद्धं ब्रह्मणः सर्वात्मकत्वात्। यथा चतुर्मुखादिपिण्डाश्चतुमुखादिशब्दानां शक्यास्तदवच्छिन्नास्तत्तचेतयितारश्च, उभयेऽपिचतुर्मुखादिशब्दैर्विधातुं सुशक्यास्तथा तेषां चतुर्मुखादिपिण्डतत्तदवच्छिन्नक्षेत्रज्ञाभिधानपरत्वे तेषामन्तरात्मपरत्वाद्ब्रह्माभिधानपरत्वं वक्तुं सुशकमित्यर्थः । सच्छब्दितं परब्रह्मास्य गुरोर्वचनात् ज्ञातवानित्यर्थः ॥ अन्यत् पूर्ववत्समानम् । द्विरुक्तिरध्याय समाप्त्यर्था ॥ ३ ॥

इति षष्ठाध्यायस्य षोडशः खण्डः ॥ १६ ॥

अशेषरसिकचक्रचूडामणि श्री १०८स्वामिहरिदासपदाश्रिताश्रितानुगेनामोलकरामेण विदुषा संगृहीतायामुपनिषत्प्रकाशिकायांटीकायां

षष्ठोऽध्यायः समाप्तः ॥ ६ ॥



एतद्विषयकमधिकरणं लिख्यते। समन्वाध्याये प्रथमपादे सुखदुःखमोहान्वितस्य जगतः कारणं तद्रूपात्मकं प्रधानमेव वक्तव्यमिति युक्तिसिद्धं त्रिगुणात्मकं प्रधानं सर्वज्ञकपिलस्मृतिसिद्धं वेदान्तप्रतिपाद्यमिति पूर्वपक्षे प्राप्त उच्यते।

ईक्षतेर्नाशब्दम् ब्र० सू० ।१।१।५॥

आनुमानिकंप्रधानं जगत्कारणं न भवेत् कुतः? अशब्दमिति न शब्दः श्रुतिप्रमाणं यस्मिंस्तदशब्दमश्रौतमितिहेतुगर्भित विशेषणम्। अशब्दत्वात् तत्रापि हेतुः। ईक्षतेरिति। ईक्षतिशब्दो धातुवाची तदर्थपरत्वेन व्याख्येयस्तेन च जगत्कारणस्य तत्तत्प्रकरणेषु सर्वत्रेक्षणश्रवणादित्यर्थः। ईक्षणं नाम पर्यालोचनं तस्य तु चेतनासाधारणधर्मत्वेनाचेतने प्रधानेऽसम्भवात्। ननूक्तं गौणमीक्षणं भवितुमर्हतीति प्रपतनासन्नं कूलमालक्ष्य कूलं पिपतिषति शुष्कपङ्कां कृषिमालक्ष्य कृषिर्वृष्टिं प्रतीक्षते। इति प्रयोगस्य लोकप्रसिद्धत्वात् एवमचेतने प्रधानेऽपि चेतनवदीक्षणमौपचारिकमस्तु। इति पूर्वपक्षे प्राप्त उच्यते।

गौणश्चेन्नात्मशब्दात्। ब्र० सू० ।१।१।६॥

सच्छब्दवाच्यं प्रधानमीक्षणं तत्र गौणमिति चेन्न कुतः? आत्मशब्दात्। ऐतदात्म्यमिदं सर्वं तत्सत्यं आत्मेति सच्छब्दवाच्यस्यात्मशब्देन परामर्शदर्शनात्। नहि चेतनश्वेतकेतुं प्रत्यचेतनप्रधानस्यात्मत्वोपदेशः सम्भवति। नन्वात्मशब्दोऽपि चेतनाचेतनसाधारणो दृश्यते तत्कुत आत्मशब्दाद्गौणमीक्षणमितिचेत्तत्राह। तन्निष्ठस्य मोक्षोपदेशात्। ब्र० सू० ।१।१।७॥

तस्मिन् सर्वज्ञे सर्वशक्तौ सच्छब्दवाच्ये ब्रह्मणि सर्वकारणे निष्ठा यस्य स तन्निष्ठस्तस्य मोक्षोपदेशात्। आचार्य्यवान् पुरुषो वेद

इत्यादिना ब्रह्मभावापत्तिलक्षणस्य मोक्षस्य प्रारब्धमात्रप्रतिबन्धश्रवणा-न्नहि प्रधाननिष्ठस्य मोक्षोपदेशः सम्भवः । यदि प्रधानं सच्छब्द-वाच्यतयाऽभिप्रेतं स्यात्तदा श्वेतकेतुं प्रति त्वं जडोसीत्युपदिशन् शास्त्रं विपरीतवादी भूत्वा पुंसोऽनर्थायैव स्यादिति भावः । इत्यश्च न प्रधानम् ।

हेयत्वावचनाच्च ब्र० सू० । १ । १ । ८ ॥

प्रधानस्य सच्छब्दवाच्यत्वे मुमुक्षोः श्वेतकेतोस्तदात्मकस्य हेयत्वं ब्रूयात् नहि तदुच्यते । प्रत्युत तत्त्वमसि तस्य तावदेवचिरमित्यु-पादेयत्वेनोपदेशो दृश्यते ।

प्रतिज्ञा विरोधात् । ब्र० सू० । १ । १ । ६ ॥

प्रधानज्ञानात्तद्विकारजातस्याचेतनवर्गस्य विज्ञानेऽपि चिदचि-दात्मकसर्वप्रपञ्चविज्ञानाभावेन एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा पीड्येत ।

स्वाप्ययात् । ब्र० सू० । १ । १ । १० ॥

सता सोम्य तदा सम्पन्नो भवति स्वमपीतोभवतीतिश्रुत्या सुषुप्तौ स्वस्मिंल्लय उपदिश्यते लयश्च स्वकारण एव । नह्यचेतनं जीवस्य करणं स्यादतो ब्रह्मैव लयस्थानं सच्छब्दाभिधेयम् ।

गतिसामान्यात् । ब्र० सू० । १ । १ । ११ ॥

आत्मा वा इदमेकमेवाग्र] आसीत् नान्यत् किञ्चनमीषत् स ईक्षत लोकन्नुसृजा स इमाँल्लोकानसृजत । तस्माद्वा एतस्मादात्मन आकाशः सम्भूत इत्यादयः शतशः श्रुतयस्सन्ति ताभिः परमेश्वरस्यैव-जगत्कारणत्वं प्रतिपाद्यते तथाच परमेश्वर एव सच्छब्दाभि-धेयः । नह्येषां तार्किकादीनामिव वेदान्तशास्त्रस्य भिन्नागतिर्यतोऽन्य-स्यापि कारणतां वक्तुं शक्येतेति भावः ॥

श्रुतत्वाच्च । ब्र० सू० । १ । १ । १२ ॥

अस्यामेवोपनिषदि सच्छब्दवाच्यस्यात्मत्वेन नामरूपव्याकर्तृ-त्वसर्वशक्तित्वसर्वाधारत्वापहतपाप्मत्वादीनां श्रवणात् नाचेतनं प्रधानं सच्छब्दवाच्यमितिसिद्धम् ।

एवं कार्यकारणानन्यत्ववादेप्येकस्मिन्नेव द्रव्ये तन्तुत्वावस्थाप्रापकांशसंयोगविशेषावच्छेदेन तन्तुवत्तन्तुत्वावच्छेदेनानेकत्वं पटत्वप्रापकतन्तुसंयोगविशेषावच्छेदेन पटत्वं पटत्वावच्छेदेनैकत्वञ्चेति पटत्वतन्तुत्वयोरेकत्वानेकत्वयोश्च समावेशोपपत्तेर्न कश्चिद्दोषः ॥ ननु संस्थानस्यासतउत्पत्तौ, असत्कार्यवाद प्रसङ्ग इति चेत् असत्कार्यवादिमतेऽपि उत्पत्तेरुत्पत्तिमत्वेऽनवस्था स्यात् । उत्पत्तिराहित्ये सत्कार्यवादप्रसङ्गः । अस्माकन्त्ववस्थायाः पृथक्प्रतिपत्तिकार्ययोगानर्हत्वात् पृथगुत्पत्त्यादिकं नापेक्षितम् अस्मन्मते घटस्योत्पत्तिर्नाम घटत्वावस्थासम्बन्धो एव नत्वसतः सत्त्वरूपम् । अत उपादेयमुपादानादनन्यदेव । भावेचोपलब्धेः । ब्र० सू० । २ । १ । १५ ॥

हिरण्यकुण्डलादिकार्यभावेऽपि 'तदेवेदं हिरण्यमितिप्रत्यभिज्ञानरूपोपलब्धेः सत्त्वादभेद एवेत्यर्थः ।

सत्त्वाच्चावरस्य । ब्र० सू० २ । १ । १६ ॥

अवरस्य कार्यस्य कारणे सत्त्वात् । यत्र यस्याभावो न तत्तत उत्पद्यते यथाग्नेर्व्रीह्यङ्कुरादिः सिकताभ्यस्तैलमित्यर्थः यथा च कारणं ब्रह्म त्रिषु कालेषु सत्त्वं न व्यभिचरति तथा कार्यरूपं विश्वमपि त्रिषु कालेषु सत्त्वं न व्यभिचरति ।

असद्व्यपदेशान्नेतिचेन्न धर्मान्तरेण वाक्यशेषाद्युक्तेः शब्दान्तराच्च । ब्र० सू० । २ । १ । १७ ॥

असत्कार्यवादिनो वैशेषिकादयः कार्यस्य जगतः कारणात्प्रागसत्त्वं मन्यन्ते । असदेवेदमग्रआसीदितिश्रुतिं प्रमाणयन्ति तथाचोत्पत्तेः प्राक् कार्यस्यासत्त्वव्यपदेशात् कथं सत्त्वमितिचेत्तत्रोत्तरमाह भगवान्सूत्रकारः । नेति । प्रागपि कार्यस्यासत्त्वं निर्दिष्टमिति न वक्तव्यं तत्र हेतुमाह धर्मान्तरेणेति । अभिव्यक्तनामरूपात्सत्त्वधर्माद्धर्मान्तरमनभिव्यक्तनामरूपमसत्त्वं तेन योगादिति श्रुतिरसत्त्वं व्यपदिश्यति नतु

स्वरूपासत्त्वम् । सत्त्वासत्त्वे हि द्रव्यधर्मौ अनभिव्यक्तनामरूपकमतिसूक्ष्ममासीदित्यर्थः । तत्र हेतुः वाक्यशेषादिति । उपक्रमे जातसंशयः वाक्यशेषान्निवर्त्यते तत उपक्रमवाक्यस्य तात्पर्यमवसीयते । अत्रोपक्रमे असदेवेदमग्रआसीदित्यादिना असदिति निर्दिष्टे तस्यैव पुनःतत्सदासीदितिवाक्यशेषेण तच्छब्देन परामृश्य सत्त्वाभिधानादसत्त्वसंशयं वारयति । असतः कालत्रयसम्बन्धायोगात् तथात्वेचासीदिति प्रयोगो नोपपद्येत शब्दान्तराच्चेति । सदेव सोम्येदमग्र आसीदिति तस्मादपि सदेव कार्यमुत्पपद्यते ।

( पटवच्च ) ब्र० सू० २ । १ । १८ ॥

यथा सङ्कुचितः पटः पटत्वेनागृह्यमाणोऽपि प्रसारणे तु स्पष्टं पट एव प्रत्यक्षतया गृह्यते । तथातिरोभावसमयेऽनभिव्यक्तं विश्वं नामरूपाभ्यामगृह्यमाणमपि सदेवाविर्भावसमयेतु प्रत्यक्षेण स्पष्टं नामरूपाभ्यां गृह्यते ।

यथा च प्राणादिः ब्र० सू० । २ । १ । १६ ॥

यथा प्राणायामसङ्कुचितशक्तिः प्राणः प्राणापानादिना विशेषरूपेणागृह्यमाणोऽपि सूक्ष्मसद्रूपप्राणापानादिविशेषवानेव मुक्तयामस्तु तत्तद्विशेषरूपेणाकुञ्चनप्रसारणादिकार्यानुपपत्त्या स्पष्टं गृह्यते तद्वत्सृष्टेः प्राक् अनभिव्यक्तनामरूपकं कार्यं तत्तन्नामरूपाभ्यामगृह्यमाणमपि स्वोपादने सदेव सृष्टिसमये तु व्याकृतनामरूपत्वात् स्पष्टं गृह्यते, इति स्थितम् ।

तथा प्रथमाध्याये प्रकृत्यधिकरणे लोके यथा घटनिर्मातुः कुलालस्य घटं प्रत्युपादानकारणत्वं न दृश्यते तथा समस्तभुवननिर्मातुः परब्रह्मणो जगदुपादानत्वं न सम्भवति कुलालमृत्पिण्डादिनिमितोपादानभेददर्शनात् । अतो विश्वं प्रति ईश्वरस्य निमित्तकारणत्वं प्रधानस्यैवोपादानकारणत्वं वाच्यम् । मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् । मयाध्यक्षेण प्रकृतिस्सूयते सचराचरमित्यादिश्रुतिस्मृतिदर्शनात् । इति पूर्व पक्षे उच्यते ।

प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् ब्र० सू०। १। ४। २३॥

प्रकृतिरूपादानं निमित्तञ्च ब्रह्मैव कुतः प्रतिज्ञेति प्रतिज्ञा च। उततमादेशमप्राक्ष्यो येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातमित्युपादानकारणविज्ञानेन सर्वकार्यविज्ञानविषया। कार्यस्य तदनतिरिक्तत्वात्। दृष्टान्तोऽपि। यथा सोम्यैकेन मृत्पिण्डेन सर्वं मृन्मयं विज्ञातं स्यादित्यादिरूपः। उपादानत्वे सत्येव सर्वविज्ञानप्रतिज्ञा मृत्पिण्डघटशरावादिदृष्टान्तौ,अनुपपरुध्येयाताम्। नच कुलालमृत्पिण्डन्यायेन निमित्तोपादानभेदश्शङ्कनीयस्तत्रहि निमित्तोपादानाभेदग्राहकप्रमाणाभावात्। तद्भेदः। इह तत्प्रमाणे जाग्रति कथमभेदो न स्यात् सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयमितिसृष्टेः प्रागेकत्वावधारणात्। अद्वितीयपदेनाधिष्ठात्रन्तराभावज्ञापनाच्च।

इतश्च ब्रह्मैवोपादानम्। अभिध्योपदेशाच्च। व० सू० १।४।२४॥

अभिध्या सङ्कल्पः। सोऽकामयत वहुस्यां प्रजायेय तदैक्षत वहुस्यामिति विश्वस्रष्टुर्ब्रह्मणः स्वस्यैवाभिव्यक्तनामरूपजगदात्मना वहुभवनसङ्कल्पोपदेशात् तदैक्षतेतिस्रष्टृत्वं वहुस्यामित्युपादानत्वमिति-विवेकः।

साक्षाच्चोभयाम्नानात्। ब्र० सू०। १। २। २५॥

ब्रह्म वनं ब्रह्म सवृक्षआसीत। यतोद्यावा पृथिवी निष्टतक्षुः। मनीषिणो मनसा ब्रवीति वो ब्रह्माध्यतिष्ठद्भुवनानि धारयन्नितिसाक्षाच्च तस्य निमित्तोपादानोभयरूपत्वमाम्नायते। अत्र किंस्विद्वनमिति प्रश्नवाक्यं पूर्वं कुत्र स्थितमित्यर्थः तस्योत्तरवाक्यं ब्रह्मवनमिति। अधिकरणमित्यर्थः। क उ स वृक्ष आसीदितिप्रश्नवचनं किमुपादानमित्यर्थः। तस्य प्रतिवचनम्। ब्रह्मसवृक्षआसीदिति ब्रह्मोपादानकमिति तदर्थः।

हेत्वन्तरेणापि निमित्तोपादानोभयरूपत्वमवगम्यत इत्याह। आत्मकृतेः परिणामात्। ब्र० सू०। १। ४। २६॥

तदात्मानं स्वयमकुरुतेतिसृष्टौ तस्यैव कर्तृकर्मभावश्रवणादपि तस्य निमित्तोपादानोभयरूपत्वमवसीयते। तदात्मानमिति द्वितीयया

विषयत्वं स्वयमिति कृतिमत्त्वं प्रतीयते । कुतः ? आत्मकृतेः आत्मसम्बन्धिनी कृतिरात्मकृतिः सम्बन्धो विषयविषयिभावः । कृतिः करणं तस्मादित्यर्थः । तत्राव्यक्तरूपेण कर्तृत्वं व्यक्तनामरूपत्वेन च कर्मत्वं कार्यकारणयोस्तादात्म्यात् । नन्वात्मनः कर्तृत्वेन पूर्वसिद्धस्य कथं पुनः कृतिकर्मत्वमत आह परिणामादिति । परिणामो द्विविधः स्वरूपपरिणामः शक्तिविक्षेपलक्षणपरिणामश्च । तत्राद्यो ब्रह्मानधिष्ठित-स्वतन्त्रप्रकृतिस्वरूपपरिणामवादोयं साङ्ख्यानां सिद्धान्तः । द्वितीयश्चोप-निषदानाम् । तथाच सर्वज्ञत्वसर्वाचिन्त्यानन्तशक्त्यादिनिलयः परब्रह्मभूतः श्रीपुरुषोत्तमः स्वात्माधिष्ठितनिजशक्तिविक्षेपेण जगदाकारं स्वात्मानं परिणामयति । यथाऽप्रच्युतस्वरूपादिभ्य एवाकाशोर्णनाभ्यादिभ्यः शब्दवाय्वोस्तन्त्वादेश्च जन्मादिकम् । यथा वाऽप्रच्युतस्वरूपान्मनसः कामक्रोधलोभमोहादीनां परस्परविलक्षणानां समुद्रादूर्मीणाञ्चोद्भवनं प्रत्यक्षागमादिमानसिद्धम् । तेषां तादृशपरमितशक्तियोगादेव । एवमचि-न्त्यानन्तस्वाभाविकशक्तियोगाद्ब्रह्मणोऽपि निर्विकाराप्रच्युतस्वरूपाज्ज-न्मादिकं बोध्यम् । परास्य शक्तिर्विविधैव श्रूयते । शक्तयः सर्वभावानाम-चिन्त्याः ज्ञानशक्तय इत्यादिश्रुतिस्मृतिभ्यः ।

योनिश्च गीयते । ब्र० सू० । १ । ४ । २७ ॥

हि हेतौ यस्मात् सर्वस्य कार्यस्य परमात्मा योनित्वेन गीयते योनिशब्दोह्यु पादानपर्यायः । अक्षरप्रकरणे कर्त्तारमीशं पुरुषं ब्रह्मयोनि-मिति कर्तृत्वस्यापि श्रवणात् ततो निमितोपादानोभयरूपत्वसिद्धिः । तस्मात् ब्रह्म जगत उपादानं निमित्तञ्चेति सिद्धम् । इतिस्थितम् । प्रकृत मनुसरामः ।

## अथ सप्तमाध्यायस्यप्रथमःखण्डः ॥ १॥

**अधीहि भगव इति होपससाद सनत्कुमारं नारदस्तं होवाच यद्वेत्थ तेन मोपसीद ततस्तऊर्ध्वं वक्ष्यामीति ॥ १ ॥**

ननु देवर्षेर्भगवतः श्रीमन्नारदस्य कृतकृत्यस्य सर्वविद्यावेत्तुः सर्ववेदार्थरूपश्रीपाञ्चरात्रप्रवर्त्तकस्य कथं शोकाश्रयत्वं येन वक्ष्यमाणाख्यायिका प्रवृत्ता भवेदितिचेच्छृणु॥ सर्वविज्ञानसाधनशक्तिसम्पन्नस्य सर्वज्ञस्य देवर्षेः श्रीनारदस्य श्रेयो न बभूव इति न वक्तव्यं किन्तु सर्वतत्वविषयकानुभवशक्तिसम्पत्तिनिमित्ताभिमानं हित्वा प्राकृतपुरुषवत् निरतिशयप्राप्तिसाधनब्रह्मविद्यायाः सरणिप्रचारार्थं भगवन्तं सनत्कुमारमुपससाद । समहितञ्चैतत् । श्रीपुरुषोत्तमाचार्य्यचरणैर्वेदान्त—रत्नमञ्जूषायामुपासनीमितिषष्ठश्लोकव्याख्यानावसरे । तथाहि । उपासनीयं नितरां जनैः सदा प्रहाणयेऽज्ञानतमोऽनुवृत्तेः॥ सनन्दनाद्यैर्मुनिभिस्तथोक्तं श्रीनारदायाखिलतत्त्वसाक्षिणे॥ श्रीनरदायेति । अस्मद्गुरुवे, इत्यर्थः । तेनैव मह्यं यदुपदिष्टं तदेवात्रोक्तं मयापीति शेषः॥ श्रीगुरुं विशिनष्टि । अखिलतत्त्वसाक्षिण इति । सर्वतत्त्वविषयकप्रत्यक्षानुभवाश्रयभूताय सर्वज्ञायेति । इदं महोपनिषदं चतुर्वेदसमन्वितमिति वचनात् सर्ववेदार्थरूपश्रीपाञ्चरात्रप्रवर्त्तकायेतिभावः । ननु सोहं भगवः शोचामि तं मां शोकस्य पारं दर्शयत्वित्यादेस्तस्यैव वचनेन नारदस्य शोकाश्रयत्वश्रवणात् कथं सर्वज्ञत्वमिति चेन्न, उपदेशोत्तरकालीनत्वादाचार्य्याणां वाक्यस्य । श्रीसनन्दनादिचरणोपसत्तेः पूर्वं शोकवत्वेऽपि श्रीभगवद्गुरूपदेशेन सकारणशोकनिवृत्त्या सर्वज्ञतासिद्धेरित्यर्थः । तस्मै मृदिकषायाय तमसः पारं दर्शयति भगवान्सनत्कुमार इति वाक्यश्रवणात् । यद्वा श्रीनारदस्य भगवतः सार्वज्ञ्ययोगेऽपि सर्वलोकोपकारार्थकावतारत्वात् । गुरूपसत्तिरूपाधिकारं ग्राहयितुं श्रीपुरुषोत्तमलीलानुकरण वदज्ञत्वानुकरणं बोध्यम् । तथाचोभयवाक्यनैराकाङ्क्ष्यादविरोध इति । श्रीनारदः भगवन्तं श्रीसनत्कुमारमुपससाद उपसत्तिविधिपूर्वकं शरणं जगाम । हेभगवः शोकतरणोपायमधीहि । शिक्षयेति प्रार्थयामासेति शेषः तमुपसन्नं नारदं श्रीसनत्कुमार उवाच । यद्वेत्थेत्यादि । त्वयाऽधीत्य यावज्ज्ञानं सम्पादितं तत्सर्वमनूद्यतां तत उर्द्ध्वं यत् त्वयानाधीतं स्यात् तद्वक्ष्यामि एवं श्रीगुरुणाविद्यानुवादे प्रेरितः स नारद उवाच ॥१॥

**सहोवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥२॥**

ऋग्वेदं भगवो हेभगवन् अध्येमि । स्मरामि वेद्मीति-यावत् । यद्वेत्थेति विज्ञानस्योक्तत्वात् । तथा यजुर्वेदं सामवेदम् । अथार्वणं चतुर्थवेदमध्येमीति पूर्वेण सम्बन्धः ॥ इतिहासपुराणं पञ्चमं वेदं वेदशब्दस्य प्रकृतत्वात् । वेदानध्यापयामास महा-भारतपञ्चमानितिवत्तदुक्तिः । वेदानां वेदं व्याकरणशास्त्रं तेन हि प्रकृतिप्रत्ययविभागपुरस्सरं ऋग्वेदादीनामर्थः प्रतिपत्तुं शक्यते । पित्र्यं श्राद्धकल्पम् । राशिं गणितम् । दैवमुत्पातज्ञानं । निधिं निधिदर्दनोपायप्रतिपादकं शास्त्रम् । वाकोवाक्यं तर्क-शास्त्रम् । एकायनं नीतिशास्त्रम् । एकायनशाखां वा । देवविद्यां देवतोपासनप्रकारविद्याम् । ब्रह्मविद्यां वेदाङ्गभूतशिक्षाकल्परूपाम् । भूतविद्यां वशीकरणविद्याम् । क्षत्रविद्यां धनुर्वेदम् । नक्षत्रविद्यां ज्योतिषम् । सर्पदेवजनविद्यां सर्पविद्यां गरुडं देवविद्यां गन्धर्व-शास्त्रम् । जनविद्यामायुर्वेदम् । एतत्सर्वं भगवोऽध्येमि ॥२॥

**सोऽहं भगवोमन्त्रविदेवास्मि नात्मविच्छ्रुतं ह्येवमे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मां भगवाञ्छोकस्य पारं तारयत्विति तं होवाच यद्वै-किञ्चैतदध्यगीष्ठा नामैव तत् ॥ ३ ॥**

**नाम वा ऋग्वेदो यजुर्वेदः सामवेद आथर्वणश्चतुर्थ इतिहासपुराणः पञ्चमो वेदानां वेदः पित्र्यो राशि र्दैवो-निधिर्वाकोवाक्यमेकायनं देवविद्या ब्रह्मविद्या भूतविद्या क्षत्रविद्या नक्षत्रविद्या सर्पजनविद्या नामैवैतन्नामो-पास्स्वेति ॥ ४ ॥**

स यो नाम ब्रह्मेत्युपास्ते यावन्नाम्नो गतं तत्रास्य यथाकामचारो भवति यो नाम ब्रह्मेत्युपास्तेऽस्ति भगवो नाम्नो भूय इति वा व भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ५ ॥

इति सप्तमाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

प्रार्थयते सोऽहमिति । सोऽहं भगवः शोचामि । एतत्, पूर्वप्रोक्तं सर्वमध्येमि । अधीतवानस्मि तथाऽपि शोकं मां न मुञ्चति । ननु ईदृशविद्यावतोऽपि शोकानिवृत्तौ किङ्कारण मित्यत आह । मन्त्रविदेवास्मीति अन्ययोगव्यवच्छेदार्थकावधारणं स्वयमेव स्फुटयति । श्रुतमिति । भगवद्दृशेभ्यः महद्भ्यो मयैतच्छ्रुतं तरतिशोकमात्मवित् । चेतनाचेतनजगदात्मभूतपरब्रह्मस्वरूपगुणादि-विषयकप्रत्यक्षज्ञानाश्रयः पुमान् स कारणं शोकं तरति । यदा पश्यः पश्यते रुक्मवर्णं कर्त्तारमीशं पुरुषं ब्रह्मयोनिं तदा विद्वान् पुण्यपापे विधूयनिरञ्जनः परमं साम्यमुपैति । इदं ज्ञानमुपाश्रित्य मम साधर्म्यमागताः ॥ सर्गेऽपि नोपजायन्ते प्रलये न व्यथन्तिच इत्यादिश्रुतिस्मृतिभ्यस्तथाभूतज्ञानाभावः शोककारणमित्याह-नात्मविदस्मीति । सर्वविद्यासु सतीष्वपि आत्म-ज्ञानशून्यत्वाच्छोचामीत्यर्थः एवं प्रार्थितः करुणाब्धिः तं होवाच यद्वैकिञ्चिदध्यगीष्ठा अधीतवानसि । अध्ययनेन तदर्थज्ञानमुपलक्ष्यते ज्ञातवानसीत्येतन्नामैवेतत् ॥ ३ ॥

तदेव विशयति । नामेवेत्यादिना ऋग्वेदइत्यादिपूर्ववत्स मानम् । उपसंहरति । नामैवैतदिति । नामरूपत्वात्प्रपञ्चस्य विशिष्य ऋग्वेदादिलक्षणशब्दराशेर्नामरूपत्वात्सर्वं नामैवेत्यर्थः । ततः किमित्यत्राह । नामोपास्वेति । अत्रब्रह्मेतिशेषः । नामब्रह्मेत्यु-पासत्स्वेत्यर्थः ॥ तस्य फलं दर्शयति । स यो नाम ब्रह्मेत्युपास्त इति । यावन्नाम्नोगतं नाम्नोगोचरं तत्र तस्मिन्नामविषयेऽस्य यथा

कामचारः कामचारत्वं राज्ञ इव स्वविषये भवति उक्तार्थमेव पुन-रुपसंहरति यो नामब्रह्मेत्युपास्ते ॥४॥

ब्रह्मशब्दप्रवृत्तिनिमित्तं वृहत्वं नाम्नि न पुष्कलमितिमत्वा नामोपदेशेनापरितुष्टः पृच्छति ॥ अस्ति भगवन्नाम्नो भूय इति । वैपुल्यार्थकाद्वहुशब्दातिशायनके इयसुन्प्रत्यये भूय इतिरूपं निष्पन्नं भवति। । नाम्नो विपुलतरं किञ्चिदस्तीति प्रश्नार्थः । श्रीसनत्कुमारो गुरुराह ॥ नाम्नो वा वभूयोऽस्तीति । शिष्य आह यद्यस्ति तन्मे भगवान्ब्रवीत्विति ॥ ५ ॥

इति सप्तमाध्यायस्य प्रथम खण्डः ॥ १ ॥

---

**वाग्वाव नाम्नो भूयसी वाग्वा ऋग्वेदं विज्ञापयति यजुर्वेदं सामवेदमथार्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवांश्च मनुष्यांश्च पशूंश्च वयांसि च तृणवनस्पतीञ्छ्वा-पदान्याकीटपतङ्गपिपीलकं धर्मञ्चाधर्मञ्च सत्यञ्चानृतं च साधुचासाधु च हृदयज्ञञ्चाहृदयज्ञञ्च यद्वै वाङ्नाभ-विष्यन्न धर्मो नाधर्मो व्यज्ञापयिष्यन्नसत्यं नानृतं नसा-धु नासाधु नहृदयज्ञो वागेवैतत्सर्वं विज्ञापयति वाचमुपा-स्वेति ॥ १ ॥**

वाग्वाव । वागतीन्द्रियम् । जिह्वामूलाष्टसु स्थानेषु स्थितं वर्णानामभिव्यञ्जकम् । वर्णाश्च नामेति नाम्नो वाग्भूयसीत्युच्यते कार्यापेक्षया कारणस्य भूयस्त्वं लोके दृश्यते तथा पुत्रात्पिता तद्वत् । कथञ्च वाग्नाम्नोभूयसीत्याह । वाग् वा ऋग्वेदं विज्ञा-पयत्ययं ऋग्वेद इति । तथा यजुर्वेदमित्यादिसमानम् । हृदयज्ञं

हृदयप्रियम् । तद्विपरीतमहृदयज्ञम् । एतत्सर्वं वागेव विज्ञापयतीति पूर्वेणान्वयः । यद्वै वाङ्नेति । वागिन्द्रियमन्तरा वेदमध्येतुं न शक्यते-तदध्ययनाभावे धर्मतदनुष्ठानं कर्त्तुमशक्यम् । अन्वयव्यतिरेकाभ्यां-तस्याः भूयस्त्वं प्रसाध्य फलितं दर्शयति वागेवैतत्सर्वमिति । तस्माद्वागेवैतच्छब्दोच्चारणेन सर्वं विज्ञापयिष्यदतोभूयसी वाङ्नाम्नस्त-स्माद्वाचं ब्रह्मेत्युपासस्व ॥ १ ॥

स यो वाचं ब्रह्मेत्युपास्ते यावद्वाचोगतं तत्रास्य यथाकाम-चारो भवति यतो वाचं ब्रह्मे त्युपास्तेऽस्ति भगवो वाचो भूय इति वाचो वा व भूयोस्तीति तन्मे भगवान्ब्रवीति । २ ॥

सयो वाचमितिपूर्ववद्व्याख्ययेम् ॥ २ ॥

इति सप्तमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥

———

मनो वाव वाचो भूयो यथा वै द्वेवाऽऽमलके द्वेवा कोले द्वौ वाक्षौ मुष्टिरनुभवत्येवं वाचश्च नाम च मनोऽनुभवति स यदा मनसा मनस्यति मन्त्रानधीयीयेत्यथाधीते कर्माणि कुर्वीते-त्यथ कुरुते पुत्रांश्च पशूं श्चेच्छेयेत्यथेच्छत इमुं च लोकममुंचे-च्छेयेत्यथेच्छते मनोह्यात्मा मनो हि लोको मनोहि ब्रह्म मन उपास्स्वेति ॥ १ ॥

स यो मनो ब्रह्मेत्युपास्ते यावन्मनसोगतं तत्रास्य यथा कामचारो भवति यो मनो ब्रह्मेत्युपास्ते अस्ति भगवो मनसो भूय इति मनसो वावभूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्यायस्य तृतीयः खण्डः ॥३॥

———

मनोवावेति । मनो वाचो भूयः मननलक्षणमनोव्यापाराधीन-त्वात् वागादिप्रवृत्तेर्मनसोभूयस्त्वमित्यर्थः उक्तार्थं दृष्टान्तेन परबुद्ध्या-

रूढं रोति। यथेति। यथा द्वेवाऽऽमलके आमलकफले द्वैवा कोले पूग-फले द्वौ वाक्षौ द्यूतसाधने फलविशेषौ वा मुष्टिरनुभवति। आमलकादिकं यथा मुष्टावन्तर्भवन्ति एवं वाचञ्च नामच मनोऽनुभवति। वाग्नामनी मनस्यन्तर्गते। इत्यर्थः। तदेव विशदयति स इति। स पुरुषो यदा मनसा मन्त्रानधीयेति मनस्यति। अथ तदाधीते। कर्माणि कुर्वीयेति यदा मनस्यतीत्यन्वयः पुत्रान्यशूंश्चेच्छेयम्। इमं लोकममुञ्चेच्छेयमिति मत्वा इच्छति मनोह्यात्मा मनोहि लोको मनो हि ब्रह्म इति। मनोधीनत्वादात्मभूतकर्तृत्वादेर्मनएवात्मा लोकस्यापि मनोव्यापाराधीनत्वान्मनएव लोकः वागाद्यपेक्षया वृहत्वान्मनो हि ब्रह्म। मन उपास्स्वेति ॥ १ ॥

स य मनोब्रह्मेत्युपास्त इतिपूर्ववत् ॥ २ ॥

इति सप्तमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

**सङ्कल्पो वा व मनसो भूतान्यदा वै सङ्कल्पयतेऽथ मनस्यथ वाचमीरयति तामु नाम्नीरयति नाम्नी मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि ॥ १ ॥**

सङ्कल्पो मनसे भूयान् तन्महिमानमाह। यदेति। यदा वै पुरुषः सङ्कल्पयते। इदमहं करोमीति। अथ मनोव्यापारानन्तरमेव वाचमीरयति किंविषय इत्यत आह। तामिति। यद्वा न केवलं लौकिकशब्दविषये वाचमीरयति किन्तु तां नाम्नि ऋग्वेदादिरूपेऽपीरयति। नाम्नि सर्वविद्यायां मन्त्रा एकं भवन्ति। अन्तर्भवन्ति। सामान्ये विशेषान्तर्भावात्। मन्त्रेषु कर्माण्यन्तर्भवन्ति। तत्प्रकाश्यत्वात्॥१

**तानि ह वा एतानि सङ्कल्पैकायनानि सङ्कल्पात्मकानि सङ्कल्पे प्रतिष्ठितानि समक्लृपतां द्यावापृथिवी समकल्पेतां वायुश्चाकाशश्च समकल्पन्तामापश्च तेजश्च तेषां संक्लृप्त्यै वर्षꣳ सङ्कल्यते वर्षस्य संक्लृप्त्या अन्नꣳ सङ्कल्पयतेऽन्नस्य संक्लृप्त्यै प्राणाः सङ्कल्पन्ते प्राणानां सङ्क्लृप्त्यै मन्त्राः सङ्कल्पन्ते मन्त्राणां संक्लृप्त्यै कर्माणि सङ्कल्पन्ते कर्मणा संक्-**

प्त्यै लोकाः सङ्कल्पन्ते लोकस्य सङ्क्लृप्त्यै सर्वं सङ्कल्पते स एष सङ्कल्पः सङ्कल्पमुपास्स्वेति ॥ २ ॥

तान्येतानि मनआदिकर्मान्तानि सङ्कल्पैकायनानि सङ्कल्प एकायनं मार्गो येषां तानि तथोक्तानि सङ्कल्पानुसारीणीति यावत् । सङ्कल्प आत्मा कर्त्ता येषां तानि सङ्कल्पात्मकानि सङ्कल्पकर्तृकाणीत्यर्थः। सङ्कल्पे प्रतिष्ठितानि । सङ्कल्पाभावे येषां न सत्ता सङ्कल्पाधीनसत्ताकानीतियावत् । द्यौश्च पृथिवीचेति द्यावापृथिव्यो समक्लृप्तां सङ्कल्पं कृतवत्यौ तथा वय्वाकाशादयोऽपि स्वेनरूपेण वर्त्तामह इति स्वस्वकार्यं सर्वं करवामह इति सङ्कल्पकृतवन्त इत्यर्थः तेषां द्यावापृथिवीतेजोन्तानां सङ्कक्लृप्त्यै तत्सिद्ध्यै वर्षंवर्षणं । सङ्कल्पन्ते । स्वस्वकार्येसमर्था भवन्त्विति यावत् । तथावर्षस्य सङ्क्लृप्त्यै सङ्कल्पनिमित्तमन्नं सङ्कल्पते । अन्नमया हि प्राणा अन्नोपष्टम्भकाः । तेषां सङ्क्लृप्त्यै मन्त्राः सङ्कल्पन्ते । मन्त्राणां सङ्क्लृप्त्यै कर्माग्निहोत्राणि सङ्कल्पन्ते ।

ऽनुष्ठीयमानानि । मन्त्रप्रकाशितानि समर्थीभवन्ति फलाय । ततो लोकः सङ्कल्पते स्वर्गादिलोकस्य कर्माधीनसिद्धिकत्वादितिभावः । लोकस्य सङ्क्लृप्त्यै सर्वं जगत् सङ्कल्पते । सर्वस्यापि भूतजातस्य सङ्कल्पाधीनत्वादिति भावः । अत्राचेतनेषु सङ्कल्पकथनं स्तुत्यर्थतया वाचेतनत्वारोपेण वा तदभिमानिदेवतापरतयावोपपन्नमिति द्रष्टव्यम् । अतः सङ्कल्पमुपास्स्वेत्युक्त्वा फलमाह तदुपासकस्य ॥ २ ॥

स यः सङ्कल्पं ब्रह्मेत्युपास्ते क्लृप्तान्वै स लोकान् ध्रुवान् ध्रुवःप्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्ध्यति यावत्सङ्कल्पस्य गतं तत्रास्य यथाकामचारो भवति यः सङ्कल्पं ब्रह्मेत्युपास्तेऽस्ति भगवः सङ्कल्पाद्भूय इति सङ्कल्पाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीति ॥ ३ ॥

इति सप्तमाध्यायस्य चतुर्थः खण्डः ॥४॥

योऽधिकारी सङ्कल्पं ब्रह्मोपास्ते स लोकान् ध्रुवान्नित्यान् प्रतिष्ठितान् सदैकप्रकारेण स्थितान्। अव्यथमानान् दुःखरहितान्। लोकान् अव्यथमानः दुःखरहितोऽभिसिद्ध्यति। प्राप्नोति। यावत्सङ्कल्पस्य गतं सङ्कल्पगोचरस्तत्रास्य यथाकामचारो भवति शेषं पूर्ववत्॥३॥

इति सप्तमाध्यायस्य चतुर्थः खण्डः॥ ४॥



**चित्तं वाव सङ्कल्पाद् भूयो यदा वै चेतयतेऽथसङ्कल्पयते ऽथ मनस्यत्यथ वाचमीरयति तामु नाम्नीरयति नाम्नि मन्त्रा एकं भवन्ति मन्त्रेषु कर्माणि॥१॥**

**तानि ह वा एतानि। चित्तैकायनानि चित्तात्मनि चित्ते प्रतिष्ठितानि तस्माद्यद्यपि बहुविदचित्तो भवति नायमस्तीत्येवैनमाहु यदयं वेद यद्वा अयं विद्वान्नेत्थमचित्तः स्यादित्यथ यद्यल्पविच्चित्तवान् भवति तस्मा एवोत शुश्रूषते। चित्तं ह्येवैषामेकायनचित्तमात्मा चित्तं प्रतिष्ठा चित्तमुपास्स्वेति॥२॥**

चित्तं चेतयितृत्वं सङ्कल्पाद्भूयः। अध्यवसायाभिमानचिन्तावृत्तिभेदाम्मन एव बुद्ध्यहङ्कारचित्तशब्दैर्व्यपदिश्यत इत्यर्थः। तत्तत्कालानुरूपातीतानागतविषयप्रयोजनचिन्तारूपप्रवृत्तिविशिष्टं मनश्चेत इत्युच्यते। अतीतं भोजनं तृप्तिसाधनं दृष्टं भोजनत्वादागामिनोऽपि तस्य तदेव प्रयोजनमिति निरूपणसामर्थ्यं चित्तमिति लोके प्रसिद्धं तस्माद्यथोक्तस्य चित्तस्य सङ्कल्पाद्भूयस्त्वमित्याशयः॥ यदा वै प्राप्तवस्त्विदमेव प्राप्तं चेतयते तदा दानाय वाथ सङ्कल्पयते ऽथ मनस्यति मन प्रेरयति अथानन्तरं वाचमीरयति मन्त्राद्युच्चारणे तां वाचमुनाम्नि नामोच्चारणनिमित्तं विवक्षां कृत्वेरयति नाम्नि नामसामान्ये मन्त्राः शब्दाविशेषास्सन्त एकं भवन्त्यन्तर्भवन्तीर्थः। मन्त्रेषु कर्माण्येकं भवन्ति॥ १॥

तानि सङ्कल्पादीनि कामफलान्तानि चेत्तैकायनानि । चित्तमेकायनं मार्गो येषां तानि चित्तमात्मा कर्ता येषां तानि चित्ते प्रतिष्ठितानि चित्तस्थितानि । अन्वयव्यतिरेकाभ्यां चितस्यैव प्रयोजकत्वमाह—तस्मादिति । तस्मात् चित्तस्योत्तमत्वादेव । हि यदि वहुविदप्य चित्तो भवति । वहुशास्त्रपरिज्ञानवानपि प्रमाविषयप्रयोजननिरूपणलक्षणचित्तहीनो यदा भवेदित्यर्थः । तदा लौकिका नायमस्तीत्येवेनमाहुः नायं विद्वानित्येवेनमाहुः । तदेवविशदमाह । यद्यदीति । अयं वेदसामान्येन जानीयात् । यद्वा अयं विद्वान् विशेषतो जानीयात्तद्यपिनेत्थमचित्तः स्यादतोऽज्ञानीत्यर्थः । यतोऽयमचित्तो जातइत्याहुः । व्यतिरेकमुक्त्वान्वयमाह । यद्यल्पविदपि । यदि चित्तवान् भवति तस्मा, एतस्मैतदुक्तार्थ ग्रहणायैवोतापि शुश्रूषन्ते सेवकाः । तस्माचित्तमेव ह्येषां सङ्कल्यादीनामेकायनम् । शेषं पूर्ववत् ॥ २ ॥

**स यश्चित्तं ब्रह्मेत्युपास्ते चित्तान्वै स लोकान् ध्रुवान् ध्रुवः प्रतिष्ठितान् प्रतिष्ठितोऽव्यथमानानव्यथमानोऽभिसिद्धयति यावच्चित्तस्य गतं तत्रास्य यथा कामचारो भवति यश्चित्तं ब्रह्मेत्युपास्तेऽस्ति भगवश्चित्ताद्भूय इति चित्ताद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ ३ ॥**

इति सप्तमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

---

स यश्चित्तमिति प्रागुपदर्शितरीत्या व्याख्येयः ॥ ३ ॥

इति सप्तमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥



**ध्यानं वा व चित्ताद्भूयोध्यायतीव पृथिवी ध्यायतीवान्तरीक्षं ध्यायतीव द्यौर्ध्यायन्तीवाऽऽपोध्यायन्तीव पर्वताध्ययन्तीव देवमनुष्यास्तस्माद्य इह मनुष्याणां महत्तां प्राप्नुवन्ति ध्यानां-**

पादांशा इवैव ते भवन्त्यथ येऽल्पाः कलहिनः पिशुना उपवादिनस्तेऽथ ये प्रभवो ध्यानापादांशा इवैव ते भवन्ति ध्यानमुपास्स्वेति ॥ १ ॥

स यो ध्यानं ब्रह्मेत्युपास्ते यावद्ध्यानस्य गतं तत्रास्य यथाकामचारो भवति यो ध्यानं ब्रह्मेत्युपास्तेऽस्ति भगवो ध्यानाद्भूय इति ध्यानाद्वावभूयोस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

इति सप्तमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

ध्यानं वा व चित्ताद्भूयः ॥ ध्यानं नाम विजातीयप्रत्ययानालम्वनत्वेसति ध्येयाकारैकस्मृतिसंततिरूपं तदेवपरिपाकापन्नं ध्रुवास्मृतिः पराभक्तिशब्दाभिधेयम् । ध्यानस्य महिमानमाह—पृथिवीति । यथा योगी ध्यानान्निश्चलो भवति पृथिवीद्याप्पर्वताध्यानलक्षणस्वमहात्म्यवोधनाय निश्चलाःसन्तो ध्यानमभिनयन्ति अतो ध्यानं महात्म्यहेतुरित्यर्थः देवाश्च मनुष्याश्च देवमनुष्याः तस्मात् ध्यानस्य श्रेष्ठत्वादिह लोके ये मनुष्याणां मध्ये धनैर्विद्यया गुणैर्वा महत्तां प्राप्नुवन्ति ध्यानपादंशाइवैव भवन्ति ध्यानस्यापादनं ध्यानापात् । ध्यानलाभ इति यावत् तस्यांशो येषां ते तथोक्ताः । ध्यानलाभैकदेशवन्त इवैव । नतु पूर्णध्यातवन्त इव । अतोध्यानमेव श्रेष्टमित्यर्थः ॥ किञ्च येऽल्पाः क्षुद्राः कलहिनः कलहशीलाः । पिशुनाः परदोषोद्भासकाः । उपवादिनः परदोषसामीप्ययुक्तवदनशीलास्तेऽथ ये प्रभवः प्राप्तमहत्वास्तेच ध्यानाऽपादंशाइवैव भवन्ति ॥ १ ॥

ध्यानं ब्रह्मेत्युपास्ते । सः ध्यानवतो ह लोकानभिसिद्ध्यतीति ग्राह्यम् । अन्यत्समानम् ॥ २ ॥

इति सप्तमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

विज्ञानं वाव ध्यानाद्भूयो विज्ञानेन वा ऋग्वेदं विजानाति यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यां दिवञ्च पृथिवीञ्च वायुञ्चाकाशञ्चापश्च तेजश्च देवांश्च मनुष्यांश्च पशूंश्च वयांसि च तृणवनस्पती ञ्छ्वापदान्याकीटपतङ्गपिपीलकं धर्मञ्चाधर्मञ्च सत्यञ्चानृतञ्च साधु चासाधु चहृदयज्ञं चाहृदयज्ञं चान्नञ्च रसञ्चेमञ्च लोकममुञ्च विज्ञानेनैव विजानाति विज्ञानमुपास्स्वेति ॥ १ ॥

स यो विज्ञानं ब्रह्मेत्युपास्ते विज्ञानवतो वै सलोकाञ्ज्ञानवतोऽभिसिद्ध्यति यावद्विज्ञानस्य गतं तत्रास्य यथा कामचारो भवति यो विज्ञानं ब्रह्मेत्युपास्तेऽस्ति भगवो विज्ञानाद्भूय इति विज्ञानाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥ २ ॥

इति सप्तमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

---

विज्ञानं वाव ध्यानाद्भूयः । तत्सामर्थ्यमाह । विज्ञानेनेति । ऋग्वेदयजुर्वेदादिकं परलोकात्तञ्च विज्ञानेनैव विजानाति किञ्च पश्वादींश्च धर्माधर्मौ शास्त्रसिद्धौ साध्वसाधुनी अन्नं चेमं च लोकममुञ्च सर्वं विज्ञानेनैव विजानातीत्यर्थः । तस्माद्युक्तं ध्यानाद्विज्ञानस्य भूयस्त्वम् । अतो विज्ञानमुपास्स्वेति ॥ १ ॥

विज्ञानोपासनस्य फलं दर्शयति–स यो विज्ञानमिति । विज्ञानं येषु लोकेषु तान् विज्ञानवतो लोकान् ज्ञानवतश्चाभिसिद्ध्यत्यभिप्राप्नोति । शेषं पूर्ववत् ॥ २ ॥

इति सप्तमाध्यायस्य सप्तमः खण्डः ॥ ७ ॥

**वलं वाव विज्ञानाद्भूयोऽपि ह शतं विज्ञानवतामेको वलवानाकम्पयते स यदा वलीभवत्यथोत्थाता भवित्युतिष्ठन् परिचरिता भवति परिचरन्नुपसत्ता भवत्युपसीदन् द्रष्टा-भवति श्रोता भवति मन्ता भवति वोद्धा भवति कर्त्ता भवति विज्ञाता भवति वलेन वै पृथिवी तिष्ठति वलेनान्तरिक्षं वलेन द्यौर्वलेन पर्वता वलेन देवमनुष्या वलेन पशवश्च वयांसि चतृणवनस्पतयः श्वपदान्याकीटपतङ्गपिपीलकं वलेन लोकस्तिष्ठति वलमुपास्स्वेति ॥ १ ॥**

वलं वा व विज्ञानाद्भूय- यस्माद्विज्ञानवतां शतमप्येकः प्राणी वलवानाकम्पयते यथा हस्ती मत्तो मनुष्याणां शतसमुदितमपि तस्माद्विज्ञानाद्वलं भूयः वलस्य सर्वव्यापारहेतुत्वमाह—सयदेति । देवमन्नाद्युपयोगनिमित्तं वलं तस्मात्पुरुषो यदा वलीवलेन भवत्यथतदोत्थातोत्थानस्य कर्तेति उतिष्ठन् गुर्वादीनां परिचरिताशुश्रुकोभवति परिचरंश्चोपसत्ता तेषांसमीपगो भवति उपसीदन्नुपद्रष्टुरेकाग्रतया द्रष्टा-श्रोता मन्ता वोद्धा भवति । अतो विज्ञानापेक्षया वलमेव भूय इत्यर्थः वलस्य महात्म्यं वलेनैव पृथव्यादयस्तिष्ठन्तीत्यर्थः ॥१॥

**स यो वलं ब्रह्मेत्युपास्ते यावद्वलस्य गतं तत्रास्य यथा-कामचारो भवति यो वलं ब्रह्मेत्युपास्तेऽस्ति भगवो वलाद्भूय इति वलाद्वाव भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥**

इति सप्तमाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

वलोपासकस्य फलं दर्शयति । स यो वलमिति । अस्यार्थः । पूर्वदर्शिदिशावसेयः ॥२॥

इति सप्तमाध्यायस्याष्टमः खण्डः ॥ ४ ॥



**अन्नं वलाद्भूयस्तस्माद्यद्यपि दशरात्रीन्नाश्नीयाद्यद्युह जी-वेदथवाऽद्रष्टा ऽश्रोताऽमन्ताऽ वोद्धाऽ कर्त्ताऽ विज्ञाता भवत्य-**

थान्नस्याशीद्रष्टा भवति श्रोता भवति बोद्धा भवति कर्त्ता भवति विज्ञाता भवत्यन्नमुपास्स्वेति ॥१॥

स योऽन्नं ब्रह्मेत्युपास्तेऽन्नवतो वै स लोकान्पानवतोऽभिसिद्ध्यति यावदन्नस्य गतं तत्रास्य यथा कामचारो भवति योऽन्नं ब्रह्मेत्युपास्तेऽस्ति भगवोऽन्नाद्भूय इत्यन्नाद्वा व भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

इति सप्तमाध्यायस्य नवमः खण्डः ॥ ६ ॥



अन्नं बलाद्भूयः । तस्मादन्नस्य भूयस्त्वाद्यदि दशरात्रीरपि नाश्नीयात्तदा यदुहयद्यपि जीवेत् । अथाप्यद्रष्टृत्वाश्रोतृत्वादिमान् भवति । यदान्नमश्नीयात्तदा द्रष्टृत्वादिमान् भवति । इत्यन्वयव्यतिरेकाभ्यामन्नस्य दर्शनादिहेतुत्वादन्नस्य बलाद्भूयस्त्वमित्यर्थः ॥१॥

अन्नोपासकस्य फलं दर्शयति। स योऽन्नमिति। योऽन्नं ब्रह्मेत्युपास्ते स लोकान्यानवतः प्रभूतोदकांश्चान्नपानयोर्नित्यसम्बन्धाल्लोकानभिसिद्ध्यत्युपास्तेद्भूयेति । समानमन्यत् ॥२॥

इति सप्तमाध्यायस्य नवमः खण्डः ॥ ६ ॥

---

आपो वा वान्नाद्भूयस्तस्माद्यदा सुवृष्टिर्न भवति व्याधीयन्ते प्राणा अन्नं कनीयोभविष्यतीत्यथ यदा सुवृष्टिर्भवत्यानन्दिनः प्राणा भवंत्यन्नं बहुभविष्यत्याप एवेमामूर्ता ये यं पृथिवी यदन्तरिक्षं यद्द्यौर्यत्पर्वता यदेव मनुष्या यत्पशवश्च वयांसि च तृणवनस्पतयः श्वापदान्याकीटपतङ्गपिपीलकमाप एवेमामूर्ता अप उपास्स्वेति ॥१॥

स योऽपो ब्रह्मेत्युपास्त आप्नोति सर्वान् कामाᳫं स्तृप्तिमान् भवति यावदपां गतं तत्रास्य कामचारो भवति योऽपोब्रह्मे–

त्युपास्तेऽस्ति भगवोऽद्भ्यो भूय इत्यद्भ्यो वा व भूयोऽस्तीति तन्मे भगवान्ब्रवीत्विति ॥२॥

इति सप्तमाध्यायस्य दशमः खण्डः ॥ १० ॥



आप अन्नाद्भूयस्यः तस्मादपामन्नकारणत्वादेव हि यदा सुवृष्टिः सस्यहिता वृष्टिर्न भवति । तदा प्राणाः प्राणिनः व्याधीयन्ते दुःखिनो भवन्ति । किन्निमित्तम् । कनीयोऽल्पतरमन्नं भविष्यतीति यदा शोभना वृष्टिर्भवति तदान्नं बहुभविष्यतीत्यानन्दिनो हृष्टा भवन्ति । आप एवेमामूर्त्ता इमा वक्ष्यमाणमूर्त्तिभेदाकारपरिणता आप एवेत्यर्थः शेषं पूर्ववत् ॥१॥

फलं विवृणोति–स यो यो ब्रह्मेत्युपास्त इति ॥२॥

इति सप्तमाध्यायस्य दशमः खण्डः ॥१०॥



तेजो वावाद्भ्यो भूयस्तदा एतद्वायुमागृह्याऽऽकाशमभितपति तदाहुर्निशोचति नितपति वर्षिस्यति वा इति तेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तदेतदूर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिरहादाश्चरन्ति तस्मादाहुर्विद्योतते स्तनयति वर्षिष्यति वा इतितेज एव तत्पूर्वं दर्शयित्वाऽथापः सृजते तेज उपास्स्वेति ॥ १ ॥

स यस्तेजो ब्रह्मेत्युपास्ते तेजस्वी वै स तेजस्वतो लोकान् भास्वतोऽपहततमस्कानभिसिद्ध्यति यावत्तेजसोगतं तत्रास्य यथा कामचारो भवति यस्तेजोब्रह्मेत्युपास्ते भगवस्तेजसो भूय इति तेजसो वा व भूयोऽस्तीति तन्मे भगवान्ब्रवित्विति ॥२॥

इति सप्तमाध्यायस्यैकादशः खण्डः ॥११॥



तेज एवाद्भ्योभूयः तत्तस्मादेतस्मिन् काले वायुमागृह्यावष्टभ्याकाशमभितपत्यादित्यस्तदाहुर्लौकिका आदित्यो निशोचति नितपति नितरां प्राणिनः शोचयति यतोऽयं नितरां तपति अतो वर्षयिष्यति वा इति । अतोऽप्सृष्टेः पूर्वं तेजएवदर्शयित्वाथापः सृजते । किञ्च तस्मादेवैतस्मिन् काले ऊर्ध्वाभिश्च तिरश्चीभिश्च विद्युद्भिः सहाह्लादा-स्तनयित्नुशब्दाश्चरन्ति प्रवर्त्तन्ते । तस्मादाहुर्लौकिकाः द्योतते स्तनयति वर्षयिष्यति इति वा शिष्टं पूर्ववत् ॥१।२॥

इति सप्तमाध्यायस्यैकादशः खण्डः ॥११॥



**आकाशो वाव तेजसोभूयानाकाशे वै सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राण्यग्निराकाशेनाऽऽह्वयत्याकाशेन प्रति शृणोत्याकाशेनरमत आकाशेन रमत आकाशे जायत आकाशमभिजायत आकाशमुपास्स्वेति ॥ १ ॥**

**स य आकाशं ब्रह्मेत्युपास्ते आकाशवतो वै लोकान्प्रकाशवतोऽसंबाधानुरुगायवतोऽभिसिद्धयति यावदाकाशगतं तत्रास्य यथा कामचारो भवति य आकाशं ब्रह्मेत्युपास्तेऽस्ति भगव आकाशाद्भूय इत्याकाशाद्वाव भूयोस्तीति तन्मे भगवान ब्रवीत्विति ॥ २ ॥**

इति सप्ताध्यायस्य द्वादशः खण्डः ॥ १२ ॥



आकाशस्तेजसो भूयान् तस्य सर्वदेवताधारत्वमाह । आकाश इति । सूर्याद्यग्न्यन्तान्याकाशे स्थितानीतिशेषः । आकाशेन तत्प्रेरणयैव देवताद्याह्वानं करोति पुरुषः । आकाश । इति निमित्तसप्तमी आकाशे रमते क्रीडत्यन्योन्यम् । न रमते व्यथते बध्वादि वियोगे । आकाशे जायते । आकाशे जायमानोऽप्यङ्कुरादिराकाशलक्षण-

मवकाशमाकाशमभिलक्ष्य प्रतिलक्ष्यैव जायते । अत आकाशस्य तेजोवाय्वाद्यपेक्षयाभूयस्त्वम् । अत आकाशमुपास्स्वेति ॥ १ ॥

आकाशोपासनायाः फलं दर्शयदि । स य इति आकाशवतो वै विस्तारयुक्तान् सविद्वाँल्लोकान् प्रकाशवतः प्रकाशाकाशयोर्नित्यसम्बन्धात् प्रकाशवतश्च लोकानसंबाधान अन्योन्यपीडारहितान् । उरुगायवतोविस्तीर्णगतीन् विस्तीर्णप्रचाराँल्लोकानभिसिद्ध्यति ॥ २ ॥

इति सप्तमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥



स्मरो वा वा काशाद्भूयस्तस्माद्यद्यपि वहव आसीरन्नस्मरन्तो नै बेते कञ्चन शृणुयुर्नमन्वीरन्नविजानीरन्यदावाव ते स्मरेयुरथशृणुयुरथमन्वीरन्नत विजानीरन्स्मरेण वै पुत्रान्विजानाति स्मरेण पशून्स्मरमुपास्स्वेति ॥ १ ॥

स यः स्मरं ब्रह्मेत्युपास्ते यावत्स्मरस्य गतं तत्रास्य यथा कामचारो भवति यः स्मरं ब्रह्मेत्युपास्तेऽस्ति भगवः स्मराद्भूय इति स्मराद्वाव भूयोऽस्तीतितन्मे भगवान् ब्रवीत्विति॥२॥

इतिसप्तमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥



स्मरः स्मरणं स्मृतिरिति यावत् साचाकाशाद्भूयसीति लिङ्गव्यत्ययेनान्वयः ॥ तस्मात्स्मरणस्य भूयस्त्वादेव यद्यपि लोके वहवः पुरुषा आसीरंस्ते यदि न स्मरन्तस्तदा नैव ते कञ्चनशृणुयुर्नमन्वीरन्नविजानीरन् । एकस्यां परिषदि स्मरणरहिता वहवः पुरुषा उपविष्टाऽपि अन्योन्यभाषितमपि न स्मरन्तश्चेत् नतैः केचनश्रवणादिकार्ये समर्था भवन्ति । मन्तव्यं न मन्वीरन् । तेषां स्मरणशक्तेरसत्वात् व्यतिरेकं प्रदर्श्यान्वयं दर्शयति । अन्यदेति । यदा वै ते स्मरेयुरथश्रवणादिव्यापारवन्तोभवेयुस्तदास्मरणेनैव पुत्रादिकं

विजानाति ममैते पुत्रादय इति स्मर्तुः स्मरणे सत्याकाशादिसर्वं कार्यजातमर्थवदतस्स्मरस्याकाशाद्भूयस्त्वं सिद्ध्यति ॥ १ । २ ॥

इति सप्तमाध्यायस्य द्वादशः खण्डः ॥ १३ ॥



आशा वा व स्मराद्भूयस्याशेद्धो वै स्मरो मन्त्रानधीते कर्माणि कुरुते पुत्रांश्च पशूंश्चेच्छत इमञ्च लोकममुञ्चेच्छत आशामुपास्स्वेति ॥ १ ॥

स य आशां ब्रह्मेत्युपास्त आशयाऽस्य सर्वे कामाः समृद्ध्यन्त्युमोघा ह्यस्याशिषो भवन्ति यावदाशया गतं तत्रास्य यथा कामचारो भवति य आशां ब्रह्मेत्युपास्तेऽस्ति भगव आशाया भूय इत्याशाया वा व भूयोऽस्तीति तन्मे भगवान् ब्रवीत्विति ॥ २ ।

इति सप्तमाध्यायस्य त्रयोदशः खण्डः ॥ १३ ॥



आशा तृष्णा कामः फलेच्छा इत्यनर्थान्तरम् । सा च स्मराद्भूयसी आशयेद्धः फलेच्छया इद्ध उत्पादितः ( स्मरः ) इष्टसाधनत्वादि प्रकारकं स्मरणं भवति ततो मन्त्रानधीते कर्माणि कुरुते पुत्रादिकञ्चेच्छते इच्छति । अत आशायाः स्मरादपि भूयस्त्वमित्यत आशामुपास्स्व ॥ १ ॥

अस्योपासकस्य सर्वेकामाः काम्या आशया समृद्ध्येतीत्याह । स य इति शेषं समानम् ॥ २ ॥

इति सप्तमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥



प्राणो वा आशया भूयान् यथा वा आरा नाभौ समर्पिता एवमस्मिन् प्राणे सर्वं समर्पितं प्राणः प्राणेन याति प्राणः प्राणं ददाति प्राणाय ददाति प्राणोह पिता प्राणो माता प्राणो भ्राता प्राणः स्वसा प्राण आचार्य्यः प्राणो ब्राह्मणः ॥ १ ॥

**स यदि पितरं वा मातरं वा भ्रातरं वा स्वसारं वाऽऽचार्य्यं वा ब्राह्मणं वा किञ्चिद्भृशमिव प्रत्याह धिक् त्वाऽस्त्वित्येवैनमाहुः पितृहा वै त्वमसि मातृहा त्वमसिवै भ्रातृहावै त्वमसि स्वसृहा वै त्वमस्याचार्यहा वै त्वमसि ब्राह्मणहावै-त्वमसीति ॥ २ ॥**

प्राणएवाशाया भूयान् । प्राणपदस्य प्राणसम्वन्धिनि प्रत्यगात्मनि लक्षणा प्राणसहाचर्य्यात् हेतुरत्र वक्ष्यते । तत्सामर्थ्यं सदृष्टान्तमाह । यथेति । यथा वा रथचक्रस्याराः रथनाभौ समर्पिताः । एवमस्मिन् प्राणे सर्वमचेतनजातं समर्पितम् । एतावता तस्यैव निरूपचरितसर्वाधारत्वं मन्तव्यमित्याशयेनाह । प्राण इति । यो सावाशोत्तमः प्राणः जीवःस प्राणेनजीवनाश्वेनयाति प्रवर्त्तते प्राणस्य पराधीनप्रवृत्तिकत्त्वेनेष्टप्राप्तिः प्राणः प्रत्यगात्मा । प्राणं प्रत्यभीष्टं ददातीत्यर्थः । गन्ता चैत्रादिरपि एव वव दाताऽपि जीव एवेति भावः ।। १ ।।

देह एव पितृशब्दवाच्योनतुजीवात्मा यद्याशङ्केत तदाप्याह—सयदीति । ब्राह्मणं वा किञ्चित् भृशमिव प्रत्याह । तदात्वा त्वां प्रति । । धिगस्त्वित्येवैनमाहुर्लौकिकाः । कुत इत्यत आह । पितुहेति । त्वं पितृहन्तेत्यादि ॥ २ ॥

**अथ यद्यप्येनानुत्क्रान्तप्राणाञ्छूलेन समासं व्यतिषं दहेन्नैवेनं ब्रूयुः पितृहाऽसीति न मातृहासि न भ्रातृहासि न स्वसृहाऽसीति नाचार्य्यहाऽसीति न ब्राह्मणहाऽसीति ॥ ३ ॥**

**प्राणो ह्येवेतानि सर्वाणि भवति स वा एष एवं पश्यन्नेवं मन्वान एवं विजानाति वादी भवति तञ्चेद्ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत ॥ ४ ॥**

इति सप्तमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥



अथ यद्यप्येतान् पित्रादीनेवोत्क्रान्तप्राणाच्छूलेन समासं समस्य व्यतिषं दहेत् व्यस्तस्तं संदहेत् । तथापि नैवेनं ब्रूयुः पितृहासीत्यादि । यद्यपि त्यक्तप्राणेष्वपि देहेषु पित्रादिशब्दोदृष्टस्तथापि नासौ मुख्यस्तद्विषये क्रूरकर्मानुष्ठानेऽपि शिष्टगर्हादृष्टेरिति भावः ॥ १ ॥

वेत्तुः फलमाह । स वा इति स एषोऽधिकारी एवं शृण्वन्नेवं मन्वान एवं ध्यायन्नेवं पश्यन्नतिवादिसर्वस्मादतीत मुत्तमं प्राणाख्यं वदतीत्यतिवादीभवति वै । तं प्राणातिवादिनं प्रति यदि त्वमतिवाद्यसीत्यन्ये ब्रुयुस्तदाहमतिवाद्यस्मीति ब्रूयात् । नापह्नुवीत प्राणवादिनो भयाभावादित्यर्थः ॥ ४ ॥

इति सप्तमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥



**एष तु वा अतिवदति यः सत्येनाति वदति सोऽहं भगवः सत्येनातिवदानीति सत्यन्त्वेव विजिज्ञासितव्यमिति सत्यं भगवो विजिज्ञास इति ॥ १ ॥**

इति सप्तमाध्यायस्य षोडषः खण्डः ॥ १६ ॥



पूर्वोपदिष्टेषु नामप्रभृतिष्वा न्तेषु, अतिवादित्वं नोक्तं प्राणस्य तथात्वाभिधानात प्रक्रान्त आत्मोपदेशः प्राणशब्दवाच्ये प्रत्यगात्मनि पर्य्यवसन्न इति प्राणाद्भावभूयोऽस्तीति पुनरपृच्छत्येव श्रीनारदे शिष्ये भगवान् श्रीसनत्कुमारो गुरुः स्वयमेव ततोप्यतिशयितं परमात्मानमुपक्षिपति । एष तु वेति । तु शब्दो विशेषप्रदर्शकः । अत्र सत्यपदेन ब्रह्म बोध्यते तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमित्युपरिष्ठाद्दहरविद्यायां निर्वाच्यत्वात् । सत्यं ज्ञानमनन्तं ब्रह्मेति श्रुतौ सत्यशब्दस्य ब्रह्मणि प्रसिद्धत्वाच्च तस्य ब्रह्मण सततैकरूपत्वेन निर्विकारत्वात् सत्यत्वं तेन ब्रह्मणा निमित्तेन योऽतिवदति पूर्वस्मात्प्राणवादिनो विलक्षण इत्यर्थः

पूज्यपादैः श्रीश्रीनिवासाचार्य्यैं वादरायणसूत्रभाष्यकृद्भिर्भाषितं भूमाधिकरणे। एष तु वा अतिवदति यः सत्येनातिवदतीति । तुशब्द एव प्राणोपासकात्सत्योपासकं व्यावृत्य पूर्वातिवादित्वनिमित्तात् प्राणस्यातिवादित्वनिमित्तं सत्यमधिकतयोपदिशति सत्येनेतीत्थम्भूतलक्षणे तृतीया परब्रह्मण उपास्यत्वेनोपलक्षितो योऽतिवदतीत्यर्थः। सत्यशब्दश्च ब्रह्मणि प्रसिद्धः। 'तस्य ह वा एतस्य ब्रह्मणो नाम सत्यम्' सत्यं ज्ञानमनन्तं ब्रह्मेत्यादिषु अतिवादित्वञ्च स्वोपास्याधिक्यवादित्वं तच्चोपास्यदेवताऽतिशये पर्य्यवस्यतीति। शिष्यस्य श्रीमन्नारदस्य प्रार्थनां दर्शयति। सोहं भगव इति सोऽहं त्वा प्रपन्नो भगवन्सत्येनातिवदानि । गुरू उपदिशति। सत्यं त्वेव विजिज्ञासितव्यमिति। यदि सत्यशब्दवाच्यब्रह्मनिमित्तकातिवादितामभिलषसि तर्हि ब्रह्मोपास्यमित्यर्थः । ब्रह्मोपासनमतिवादित्वहेतुरिति यावत् । शिष्यस्तदभ्युपगच्छति । सत्यं भगवो विजिज्ञास इति। विजिज्ञासे, उपासनं करोमीत्यर्थः ॥

इति सप्तमाध्यायस्य षोडशः खण्डः ॥१६॥

**यदा वै विजानात्यथ सत्यं वदति नाविजानन्सत्यं वदति विजानन्नेव सत्यं वदति विज्ञानन्त्वेव विजिज्ञासितव्यमिति विज्ञानं भगवो विजिज्ञास इति ॥ १ ॥**

इति सप्तमाध्यायस्य सप्तदशः खण्डः ॥१७॥

अत्र विजानाति पदेन साक्षात्कार उच्यते यदा वै साक्षात्करोति तदा सत्यं वदति सत्येनातिवदतीत्यर्थः । सत्येनातिवदानीति प्रागभिहितत्वात् सत्यशब्दवाच्यस्य ब्रह्मणोऽतिवादिनं प्रति निमित्तत्वेन कारणत्वविवक्षयातृतीयावद्वदनं प्रति कर्मतया द्वितीयाया अभ्युपपत्तेः ॥

अन्वयमुक्त्वाव्यतिरेकमाह । नाविजानन्निति । अविजानन् । साक्षात्कारमकुर्वन् सत्यं न वदति । साक्षात्कारासत्वेऽतिवादित्वाभावः साक्षात्कार सत्वेऽतिवादित्वमित्यर्थः । अतः साक्षात्काररूपं विज्ञानं विजिज्ञासितव्यं सम्पाद्यमित्याह–विज्ञानन्त्वेवेति । पाकं पचतीतिवद्विज्ञानं विजिज्ञासितव्यमिति निर्देशः । उत्तरस्यापि विजिज्ञासितव्यपदस्य सम्पाद्यत्वमेवार्थः ॥ उक्तं व्यासाचार्य्यैः सत्यव्यतिरिक्तविषयाणि विजिज्ञासितव्यपदानि सम्पाद्यवाचीनीति ॥ शिष्यः श्रीमन्नारदस्तदभ्युपगच्छति । विज्ञानं भगवो विजिज्ञास इति ॥ हेभगवन् अतिवादित्वनिमित्तं साक्षात्कारं सम्पादेयमित्यर्थः ॥१॥

इति सप्तमाध्यायस्य सप्तदशः खण्डः ॥१७॥

---

**यदा वै मनुतेऽथ विजानाति नाम त्वा विजानाति मत्वैव विजानाति मतिस्त्वेव विजिज्ञासितव्येति मतिं भगवो विजिज्ञास इति ॥१॥**

इति सप्तमाध्यायस्याष्टादशः खण्डः ॥ १८ ॥

---

मतिर्मननमित्यर्थः । अन्यत्सर्वं पूर्ववद्व्याख्येयम् ॥ ब्रह्मोपासनोपायभूतं मननं सम्पाद्यमित्यर्थः ॥ १ ॥'

इति सप्तमाध्यायस्याष्टादशः खण्डः ॥ १८ ॥

---

मननोपदेशाच्छ्रवणमप्यार्थात्प्राप्तं श्रुतार्थस्यैव मननसम्भवादतः श्रवणोपायभूतां श्रद्धामुपदिशति ।

**यदा वै श्रद्दधात्यथ मनुते नाश्रद्दधन् मनुते श्रद्दधदेव मनुते श्रद्धात्वेव विजिज्ञासितव्येति श्रद्धां भगवो विजिज्ञास इति॥१॥**

अत्र ब्रह्मविषयिणी श्रद्धा विवक्षिता ॥ १ ॥

इति सप्तमाध्यायस्यैकोनविंशः खण्डः ॥१९ ॥

---

यदा वै निस्तिष्ठत्यथ श्रद्धाति नानिस्तिष्ठञ्च्छ्रद्धाति निस्तिष्ठन्नेव श्रद्दधाति निष्ठात्वेव विजिज्ञासितव्येति निष्ठां भगवो विजिज्ञास इति ॥ १ ॥

इति सप्तमाध्यायस्य विंशतमः खण्डः ॥२०॥

---

ब्रह्मैव श्रोतव्यं नान्यदिति व्यवसायरूपानिष्ठा श्रोतुस्त्वरालक्षणश्रद्धोपायतया सम्पाद्येत्यर्थः ॥ १ ॥

इति सप्तमाध्यायस्य विंशतितमः खण्डः ॥२०॥



यदा वै करोत्यथ निस्तिष्ठति नाकृत्वा निस्तिष्ठति कृत्वैव निस्तिष्ठति कृतिस्त्वेव विजिज्ञासितव्येति कृतिं भगवो विजिज्ञास इति ॥ १ ॥

इति सप्तमाध्यायस्यै कविंशः खण्डः ॥२१॥



उद्योगप्रयत्नापरपर्याया श्रोतव्यान्तरेषु हेयत्वानुसन्धानेन मनसोनियमनरूपा कृतिर्ब्रह्मैव श्रोतव्यमिति व्यवसायलक्षणनिष्ठाकारणत्वात्सम्पाद्येत्यर्थः ॥ १ ॥

इति सप्तमाध्यायस्यै कविंशः खण्डः ॥२१॥

---

यदा वै सुखं लभतेऽथकरोति नासुखं लब्धा सुखं करोति सुखमेव लब्धा करोति सुखन्त्वेव विजिज्ञासितव्यमिति सुखं भगवो विजिज्ञास इति ॥ १ ॥

इति सप्तमाध्यायस्यद्वाविंशः खण्डः ॥२२॥

---

यदा ब्रह्मण्यत्यन्तानुकूलनिरतिशयं सुखं लभते तदोक्तलक्षणाकृतिर्निष्पन्ना भवति। ब्रह्मव्यतिरिक्तवस्तुषु हेयत्वानुसन्धानपूर्वकमनो-

नियमनरूपकृतिं प्रति निरतिशयात्यन्तानुकूलब्रह्मविषयकसुखत्वावच्छिन्नं कारणमतस्तदेव सुखत्वं ज्ञातव्यमित्यर्थः ॥ श्रवणमननश्रद्धादितः प्राक् सुखप्राप्तिर्नास्तीति प्राप्त्यर्थकस्यापि लभते ज्ञानमेवार्थः ज्ञानस्यापि प्राप्तिरूपत्वात् । श्रोतव्ये ब्रह्मण्यत्यन्तानुकूलत्वज्ञानासत्वे निरुक्तकृत्य-सत्वं तत्सत्त्वे तत्सत्त्वमित्यन्वयव्यतिरेकाभ्यां निश्चीयते श्रोतव्ये पर-ब्रह्मणि वासुदेवेऽत्यन्तानुकूलत्वं ज्ञातव्यमिति भावः ॥ अत्र सविजि-ज्ञासितव्यशब्दस्य ज्ञातत्वमर्थो नोपासितव्यत्वं सस्पादनीयत्वं वा ॥१॥

इति सप्तमाध्यायस्य द्वाविंशः खण्डः ॥२२॥

---

**यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमात्वेव विजिज्ञासितव्य इतिभूमानं भगवो विजिज्ञास इति ॥ १ ॥**

इति सप्तमाध्यायस्य त्रयोविंशः खण्डः ॥२३॥

---

अत्र भूमशब्दो बहुत्ववाची । बहुशब्दाद्भावे पृथ्वादिभ्य इम-निजितिसूत्रेणेमनिचि "बहोर्लोपोभूचबहोरित्यनुशासनेन प्रकृतिप्रत्य-ययो र्विकारे भूमेति निष्पन्नः ॥ बहुत्वञ्चात्र वैपुल्यम् न सङ्ख्या-विशेषत्वं "बहुषु बहुवचनम्" बहवो ज्ञानतपसा ॥ बहूनां जन्मना मन्ते" इत्यादौ सङ्ख्यायामिव "अल्पं वा बहु वा यस्य श्रुतस्योप-करोति यः" इत्यत्राल्पत्वप्रतियोगिवैपुल्येऽपि प्रयोगदर्शनादिहापि नाल्पे सुखमस्तीत्यल्पत्वप्रतिद्वन्द्वितयैव भूमशब्दप्रयोगाच्च' विपुलत्व-मेवार्थः । तथाच नाल्पे सुखं विद्यते किन्तु भूमैव सुखं तस्माद्भूमात्वेव विजिज्ञासितव्यः निरतिशयवैपुल्पविशिष्टसुखरूपः परमात्मैव विजिज्ञा-सितव्य इत्यर्थः एवं श्रीसनत्कुमारेणोक्ते भगवान् श्रीनारद आह "भूमा-नमेव विशेषेण ज्ञातुमिच्छामीत्येतत्सर्वं भाष्ये ह्युक्तम् ॥१॥

इति सप्तमाध्यायस्य त्रयोविंशः खण्डः ॥१३॥



**यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमाऽथयत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं यो वै भूमा तदमृतमथयदल्पं तन्मर्त्यं स भगवः कस्मिन् प्रतिष्ठित इति स्वे महिम्नि यदि वा न महिम्नीति॥१॥**

एवं पृष्टो भगवान्सनत्कुमारः पूर्वोद्दिष्टयो र्भूमाल्पयोर्लक्षणमाह। यत्रेति। यत्र, यस्यां भूमजिज्ञासायां पूर्वोक्तनामाद्युपासनेष्विवान्यद-वच्छेदकं नामादिकं न पश्यति नश्शृणोति न विजानाति स भूमेति। देशतः कालतः वस्तुतः परिच्छेदशून्यः सर्वसमानाधिकरणार्हो भगवान् भूमशब्दार्थः। भाष्यकारैः धर्मोपपत्तेश्चेति सूत्रव्याख्यानावसरे व्याख्या-तञ्चैतत्। धर्माणां भूमप्रकरणे पठितानामन्यत्राघटमानानां परमात्मपर-त्वेनैवोपपत्तेश्च भूमा परमात्मेति गम्यते। तथाहि यत्र नान्यत्पश्यति। यत्र हिनिरतिशयवैपुल्पयुक्ते सुखे निमग्नमनाः। अन्यत् वैपुल्यविशिष्ट-सुखप्रतियोग्यल्पं वैषयिकं सुखं न पश्यति पीतामृतो यथापेयान्तरं न पश्यति तथा। किञ्च यत्र सुखे विशक्तः सुखप्रतियोगि दुःखं न पश्यति सर्वसुखसम्पन्नो भवति। सर्वदुःखविनिर्मुक्तो भवति यदनुरागीत्यर्थः एवं निरतिशयसुखप्रदत्वदुःखनिवर्त्तकत्वादीनां धर्माणामुपपत्तिः परमा-त्मन्येव नतु प्राणपदगृहीते जीव इति। यत्र येषु पूर्वोक्तेषु नामवागाद्यु-पासनेषु अन्यदवच्छेदकं वागादिरूपं पश्यति शृणोति विजानाति वा तदल्पं परिच्छिन्नमन्तवच्चेत्यर्थः॥ अपरिच्छिन्नत्वादेवभूम्नोऽमृतत्वं कालादिपरिच्छिन्नत्वादेवाल्पस्य मर्त्यत्वमित्याह। यो वै भूमा तदमृत-मथ यदल्पं तन्मर्त्यमिति यदि पूर्ववत्तस्योपाधिरूपमवच्छेदकं नाम-वागादिकं नास्ति तर्हि स कुत्र आस्ते। इति पृच्छति। स भगव कस्मिन् प्रतिष्ठित इति। तत्रोत्तरयति। स्वमहिम्नीति। तर्हि परिच्छेदो दुर्वार इत्याशङ्क्याह यदिवेति। स्वमहिम्नोब्रह्मात्मकत्वेन स्वाभिन्नसत्ता-कत्वात्॥ १॥

**गो अश्वमिह महिमेत्याचक्षते हस्तिहिरण्यं दासभार्यं**

क्षेत्राण्यायतनानीति नाहमेवं ब्रवीमि ब्रवीति होवाचान्यो ह्यन्यस्मिन्न प्रतिष्ठित इति ॥२॥

इति सप्तमाध्यायस्य चतुर्विंशः खण्डः ॥२४॥



तदेव विवृणोति । गोअश्वमित्यादि । इह लोके गवादिमहिमेत्याचक्षते यथा क्षेत्रज्ञानां गवादयो महिमानस्तेषां तदन्यत्वेन तदन्यत्रावस्थाननियमात् । अश्वे देवदत्तो हस्तिनि यज्ञदत्तः क्षेत्रे आयतने वा तिष्ठतीतिप्रत्ययो जायते नात्र तथानियमोऽपि त्वात्माधारत्वमेवेत्याह । अन्यो ह्यन्यस्मित् प्रतिष्ठते यथा नाहमेवं ब्रवीमीति । कथमुच्यते तर्हि भवद्भिरित्यापेक्षायां तस्य सर्वान्तरात्मत्वं विधास्यन् सर्वत्र व्याप्त्या सर्वस्य तदविनाभावनियममाह । स एवेति ।

**स एवाधस्तात् स उपरिष्टात्स पश्चात् स पुरस्तात् स दक्षिणतः स उत्तरतः स एवेदꣳ सर्वमित्यथातोऽहंकारादेश एवाहमेवाधस्तादहमुपरिष्टादहं पश्चादहं पुरस्तादहं दक्षिणतोऽहमुत्तरतोऽहमेवेदꣳ सर्वमिति ॥ १ ॥**

यस्मात्स एव भूमाऽधस्तात् स एवोपरिष्टात् न तद्व्यतिरेकेणान्यद्विद्यते सर्वान्तरात्मत्वं भूम्नः स एवेदं सर्वमितिनिर्दिष्टस्य चिदचिद्वर्गस्य भूमात्मकत्वं फलितं भवति । सर्वात्मभूतभावश्च व्याप्तिनिबन्धन इत्यर्थः ॥

**अथात आत्मादेश एवात्मैवाधस्तादात्मोपरिष्टादात्मा पश्चादात्मा पुरस्तादात्मा दक्षिणत आत्मोत्तरत आत्मैवेदं सर्वमिति स वा एष एवं पश्यन्नेवमन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवति । अथ येऽन्यथाऽतो**

**विदुरन्यराजानस्तेऽन्यक्षय्यलोका भवन्ति तेषाꣳ सर्वेषु लोकेष्वकामचारो भवति ॥ २ ॥**

इति सप्तमाध्यायस्य पञ्चविंशः खण्डः ॥ २५ ॥



एवं सर्वात्मभूतस्य भूम्न उपासकेन स्वात्मकतयोपासनं कर्त्तव्यमित्युपदिशति । अथाथोऽहंकारादेशः क्रियते इति शेषः । अहंकारोऽहंबुद्धिः । अहंग्रहेण भूम्न उपासकप्रकार अतः परममुपदिश्यत इत्यर्थ ॥ नतु प्रत्यगात्मस्वरूपोपदेश इति मन्तव्यम् । परमात्मनोऽहं ग्रहेणोपासनप्रकारमेव दर्शयति । अहमेवेति ॥ अतोऽहमेवेदम् । सर्वदिग्वर्त्तिसर्वात्मा भूमाहमेवेति ज्ञातव्यमित्यर्थः ॥१॥

नन्वहं बुद्धिशब्दयोर्जीवात्मविषययोः कथं {भूमपर्य्यन्तत्वम् । अनहमर्थे च परमात्मन्यहंग्रहोपासनस्यायथार्थत्वमेव स्यादित्याशङ्क्य भूम्नः सर्वान्तर्यामितया सर्वात्मत्वात् जीवात्मानं प्रत्यपि आत्मत्वेन तद्विषयाहंबुद्धिशब्दानां परमात्मपर्य्यन्तत्वमुपपद्यत इति दर्शयन् तरति शोकमात्मविदिति प्रक्रान्तमात्मनोपदेशं भूम्नि समापयति । अथात आत्मा देश इति । अत्रापि ।क्रियत इति शेषः । अथशब्दः प्रकृतविषयित्वद्योतनार्थः । आत्मादेश आत्मत्वोपदेशः क्रियत इत्यर्थः । आत्मैवाधस्तादित्यादिति । सर्वात्मतयोपदिश्यमानो भूमोपासकस्यात्मैवेत्यर्थः ॥ ततश्च तत्राहंबुद्धिशब्दयोर्याथार्थ्यमेवेति भावः । एवं तस्यविश्वान्तरात्मकत्वं विश्वव्याप्तियोगञ्चोक्त्वा पूर्णत्वात् पूर्णफलकत्वमाह । स वा एष एवं पश्यन्नेवं मन्वान इत्यादिना । आत्मनि ब्रह्मण्येव रतिः प्रीतिर्यस्य नाहम्ममास्पदयोः शब्दादिपञ्चेन्द्रियविषयेषु वस्त्रालङ्कारादिषु वेति । तथैव आत्मना विष्णुना सह क्रीडा यस्य न लौकिकैः क्रीडोपकरणैरतएवात्मा भगवानेव मिथुनं यस्य न भार्यादिः । ततश्चात्मना तेनैवानन्दो यस्य नच बाह्यविषयैस्तत्साधनैर्वेति । तथा

यद्यन् क्रीडन् रममाणः सह ब्रह्मणा विपश्चितेति वाक्यान्तरात् । स उक्तलक्षणः पुमान् स्वराडिति स्वेनैव भगवता विश्वान्तरात्मना राजते दीप्यते नेन्द्रियादिभिः सूर्यादिभिर्वा प्रकाशकरणैदिति तथा-सार्वज्ञादिविकासात् । अथोक्तोपासनादार्ढ्यार्थं परिच्छिन्नोपास्यविषयक-परिच्छिन्नफलकान्यन्यदेवाद्युपासनपरान् मूढान् निन्दति भगवती श्रुतिः । अथ येऽन्यथातो विदुरिति । अथेति पक्षान्तरे ये मूढा अत उपदिष्टात् सिद्धान्तात् विपर्य्ययं देवान्तरमुपास्यत्वेन निश्चितवन्तः । कथमिव जानन्ति ते इत्यपेक्षायां तेषां ज्ञानस्यानुकरणमाह । अन्य राजान इति । अन्ये ब्रह्मरुद्रेन्द्रादयोऽपि राजान इति मोक्षदातारः स्वतन्त्रा मोक्षार्थि-नोपासितव्या इति ते च क्षय्यलोकाः स्वर्गपशुपुत्रादयो जन्मादिलक्षण-संसरणहेतवो भवन्ति । तेषां क्षेत्रज्ञत्वाविशेषेण मोक्षदातृत्वायोगात् । अस्वातन्त्र्याच्च मोक्षदानानर्हत्वमित्यर्थः ॥२॥

इति सप्तमाध्यायस्य पञ्चविंशः खण्डः ॥२५॥

---

तस्य ह वा एतस्यैवं पश्यत एवं मन्वानस्यैवं विजानत आत्मतः प्राण आत्मत आशाऽऽत्मतः स्मर आत्मत आकाश आत्मतस्तेज आत्मत आप आत्मत आविर्भावतिरोभावात्म-तोऽन्नमात्मतोबलमात्मतो विज्ञानमात्मतो ध्यानमात्मतश्चित-मात्मतः सङ्कल्प आत्मतो मन आत्मतो वागात्मतो नामाऽऽ-त्मतो मन्त्रा आत्मतः कर्माण्यात्मत एवेदꣳ सर्वमिति ॥१॥

तदेष श्लोको भवति न पश्यो मृत्युं पश्यति न रोगं नोतदुःखताꣳ सर्वं ह पश्यः पश्यति सर्वमाप्नोति सर्वश इति स एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादशः स्मृतः शतञ्च दश चैकश्च सहस्राणि च विंशति-राहारशुद्धौ सत्त्वशुद्धिः सत्त्वशुद्धौ ध्रुवास्मृतिः स्मृतिलम्भे

सर्वग्रन्थीनां विप्रमोक्षस्तस्मै मृदितकषायाय तमसःपारं दर्शयति भगवान्सनत्कुमारस्तं स्कन्द इत्याचक्षते तं स्कन्द इत्याचक्षते ॥ २ ॥

इति सप्तमाध्यायस्य षड्विंशः खण्डः ॥ २६ ॥



इति छान्दोग्योपनिषदि सप्तमोऽध्यायः समाप्तः ॥७॥



अथातात्मादेश इत्यनेन विहितोपासकान्तर्यामिणश्चेतनाचेतन-सकलप्रपञ्चोपादानत्वलक्षणं सर्वात्मकत्वं स्पष्टयति। तस्य हवेति। तस्य ह वा एतस्यैवंपश्यत एवंमन्वानस्यैवं विजानत उपासकस्यान्तर्याम्यतः प्राणशब्दितजीवपर्य्यन्तसकलविश्वं जायते स्थितः संह्रियते। न केवलमेतावत् किन्त्वात्मन एवेदं सर्वं तथाच सकलप्रपञ्चस्योपादानमुपासकस्यान्तर्याम्यतोहमेवेदं सर्वमिति विहितोऽहंग्रहस्तात्विकविषय-एवेति भावः ॥ १ ॥ तदेष श्लोकस्तस्मिन्विषये एष वक्ष्यमाणश्लोकः प्रवृत्त इत्यर्थः। पश्यतीति पश्यो द्रष्टा यथोक्तदर्शी विद्वान् मृत्युं मरणं रोगं दुःखसाधनं नोतदुःखतां जगति प्रतिकूलताञ्च न पश्यति सर्वमेव स पश्यः पश्यति सर्वशः सर्वप्रकारैः सर्वमाप्नोति। सर्वसाक्षात्कर्ता सन् सङ्कल्पमात्रेण सङ्कल्पितानर्थान्सर्वस्मिन् प्राप्नोति। अपहत-पाप्मत्वादिगुणाष्टकाविर्भावो भवतीत्यर्थः। तस्यैव स्वेच्छानिबन्धन-मेकानेकरूपत्वं माहात्म्यमाह। स इति। नवधा स्थितएव पुनरेकादशो भवति। शतञ्चैकञ्चेत्येकः पक्षः। तेनैकधा दशधाइत्युक्त्या न पुनरुक्तिः॥ प्रकृतमोक्षसाधनान्येव क्रमापन्नान्याह॥ आहारेति॥ भोक्तुर्भोग्यस्याहारस्यान्नादेश्शुद्धिः राजसतामसैरसंसृष्टं निर्मल्यं सात्त्विकमितियावत् तस्यामाहारशुद्धौ सत्यां तद्वतोऽन्तःकरणस्य सत्त्वस्य शुद्धिर्नैर्मल्यं भवति सत्त्वशुद्धौ सत्यां यथावगते भूम्नि ध्रुवास्मृतिः। अनवतरस्मृतिसन्तान-रूपा॥ तस्यां लब्धायां स्मृतिलम्भे सति दुर्मोचतया ग्रन्थिशब्दितोनाम-

विद्यारागादीनां मोक्षो भवति। सर्वशास्त्रार्थमशेषत उक्त्वाऽख्यायिका मुपसंहरति । तस्मा इति तस्मैउपदिष्टार्थग्रहणचतुराय तत्र हेतुः मृदितकषायाय । जन्मत एवशुद्धत्वात् जन्मतः शुद्धान्तःकरणाय श्रीमन्नारदाय भगवान्सनत्कुमारः संसारतमसः पारं परमात्मानं स्पष्ट मुपादिदिक्षदित्यर्थः ॥ सनत्कुमारस्येत्थं सामर्थ्यं कथमित्यत आह—तं स्कन्द इत्याचक्षते सनत्कुमारं स्कन्दः श्रीविष्णोरवतारइत्याचक्षते। स्कन्दति, अन्तर्यामिरूपेणभूतेषु गच्छति अमृतरूपेण स्रवति वा भक्तदुःखं शोषयतिवा। स्कन्दः स्कन्दधरोधूर्य इति महाभारतेऽनुशासनिकेपर्वणि श्रीविष्णुसहस्रनाम प्रकरणे तथोक्तत्वात्, इत्यभि वदन्ति द्विरुक्तिरध्याय-समाप्त्यर्था ॥ २ ॥

श्रीसनन्दनादिप्रवर्त्तितसम्प्रदायानुगताशेषरसिकचक्रचूडामणि-श्रीस्वामिहरिदासपदाश्रिताश्रितानुगामोलकरामेण संगृहीतायामुपनिषत्प्र-काशिकाटीकायां छान्दोग्योपनिषद्विवरणभूतायां सप्तमोध्यायः समाप्तः॥७॥

एतद्विषयकमधिकरणमुपन्यस्यते। अत्र मुक्तस्य विदुषः देहे-न्द्रियाणि सन्ति न सन्तीति विमर्शे।

अभावं वादरिराह ह्येवम्। ब्र० सू०।४।४।१०।

मुक्तस्य शरीराभावं वादरिर्मन्यते यतः अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशत इति श्रुतिस्तथैवाह।

भावं जैमिनिर्विकल्पामननात् ब्र० सू०।४।४।११।

भावं मुक्तस्य शरीरादेः सत्तां जैमिनिराचार्यो मन्यते कस्मात्। विकल्पामननात्। स एकधा भवति त्रिधा भवति पञ्चधा सप्तधेति भूमविद्यायां तस्य वैविध्यामननात्। तच्च वैविध्यं मुक्तस्य शरीरविषयम्। अणुपरिमाणस्याच्छेद्यस्यात्मनो वैविध्यासम्भवात्। अशरीरश्रुतिस्तु कर्मजन्यशरीरविषया।

द्वादशाहवदुभयविधं वादरायणोऽतः ॥ ब्र० सू० ।४।४।१२॥

पूर्वनिर्दिष्टः सङ्कल्पः। अतश्शब्देन परामृश्यते। अतः सङ्क-ल्पवशादेव सशरीरत्वाशरीरत्वलक्षणविधाद्वयमप्यस्तीति वादरायणो मन्यते। यथा सङ्कल्पं मुक्तशरीरादिभावाभावौ भवत इत्यर्थः द्वादशाह-वत्। द्वादशाहस्य यथोभयविधत्वं सङ्कल्पभेदेनास्ति। द्वादशहमृद्धिकामा उपेयुरित्युपैति चोदनायाः सत्रत्वं "द्वादशाहेन प्रजाकामं याजयेदिति

यजतिचोदनाया अहीनत्वञ्च द्वादशाहस्य भवति तद्वत्। शरीरादिमत्त्वं तदभावश्च भगवत्सङ्कल्पाधीनं मुक्तस्येति ज्ञेयम्।

तन्वभावे सान्ध्यवदुपपत्तेः। ब्र० सू०। ४। ४। १३॥

स्वसृष्टतन्वाद्युपकरणाभावेऽपि भगवत्सृष्टैरुपकरणैरेव मुक्तस्य सर्वभोगोपपत्तेः सान्ध्यवत् स्वप्नवत्। यथा स्वप्ने पूर्वोक्तरीत्या परमेश्वर सृष्टैः शरीरेन्द्रियैर्बद्धजीवो भुङ्क्ते तद्वन्मुक्तोऽपीत्यर्थः। नन्वणुपरिमाणस्य प्रत्यगात्मनः कथमनेकशरीरेषु व्यापित्वमित्यत आह।

प्रदीपवदावेशस्तथाहि दर्शयति। ब्र० सू०। ४। ४। १५॥

प्रभाया दीपस्येव ज्ञानेन धर्मभूतेन जीवस्यानेकशरीरेष्वावेशो भवति तथाहि दर्शयति श्रुतिः। वालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः सचानन्त्याय कल्प्यते। इति। ज्ञानसङ्कोचाऽसङ्कोचाभ्यां बद्धमुक्तयोर्विशेषो बोध्यः। तत्र बद्धस्य भोगे तत्तत्कर्मैव नियामकं मुक्तस्य तु परमात्मसङ्कल्पायत्तस्येच्छैवेति भावः।

ननु प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं किञ्च न वेद नान्तरमितिश्रुत्या ज्ञानसामान्यनिषेधात् मुक्तस्य कथमनेकशरीरेष्वभिमानानुगुणज्ञानव्याप्तिस्तत्राह।

स्वाप्ययसम्पत्त्योरन्यतरापेक्षमाविष्कृतं हि। ब्र० सू०। ४। ४। १६॥

न बाह्यमितिवचनं न मुक्तविषयं किन्तु सुषुप्तिमरणान्यतरविषयं तत्र स्वाप्ययः सुषुप्तिः 'स्वमपीतो भवति तस्मादेनं स्वपितीत्याचक्षते इतिश्रुतेः सम्पत्तिश्चोत्क्रान्तिर्मरणमितियावत्। 'वाङ्मनसि सम्पद्यते। इत्यारभ्य तेजः परस्यां देवतायामिति श्रवणात् हि यतः सुषुप्तिमरणयोर्जीवस्य विशेषज्ञानाभावत्वं मोक्षदशायां सर्वज्ञत्वञ्च श्रुत्यैवाविष्कृतम्। अत्रैव। नाह खल्वहं सम्प्रत्यात्मानं जानाम्ययमहमस्मीति नो एवेमानि भूतानीति स्थितम्॥

समन्वयाध्याये तृतीयपादे भूमाधिकरण श्रुतंह्येवमेव भगवद्दृशेभ्यस्तरति शोकमात्मविदित्युपक्रम्य एव श्रीसनत्कुमारेणोक्ते

भगवान् श्रीनारद आह । भूमानं भगवो विजिज्ञासे भूम्नोलक्षणमाह । यत्र नान्यत् पश्यति नान्यत् शृणोतीत्यादिना तत्र संशयः किं वा प्राणो भूमा किंवा परमात्मेति । प्राण इति पूर्वपक्षः प्राणो वा आशया भूयानिति पूर्वत्र प्राणस्यैव निर्दिष्टत्वात् । इति प्राप्त उच्यते ।

भूमा सम्प्रसादादध्युपदेशात् । ब्र० सू० । १ । ३ । ८ ॥

भूमा परमात्मैव न तु प्राणविशिष्टो जीवः कुत ? सम्प्रसादादध्युपदेशात् । सम्यक्प्रसादो यस्मिन् स सम्प्रसादो जीवात्मा एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते । इत्यादि श्रुतिप्रसिद्धस्तस्मात्प्राणशब्दसूचितात् अधिऊर्ध्वं एष तु अतिवदति यः सत्येनातिवदतीति तुशब्देन प्राणोपदेशात् पूर्ववृत्तादुत्तरस्य भूमोपदेशस्य वैलक्षण्यं गम्यते तस्मात् प्राणोपदेशतोविलक्षणात् भूम्न उपदेशात् प्राणपदार्थाद्भिन्नो हि भूमपदार्थ इत्यर्थः । यद्वा एष तु वा अतिवदतीतिशब्देन प्राणोपासकात्सत्योपासकस्याधिकतयोपदेशात् । उपासकभेदादुपास्ययोरपि भेद इत्यर्थः ।

अयम्भावः । श्रीमन्नारदपृष्टेन श्रीसनत्कुमारेण नामादिप्राणावधिकपञ्चदशपदार्थेषु पूर्वपूर्वत उत्तरोत्तरस्याधिक्यविधानवत प्राणशब्दनिर्दिष्टाज्जीवादधिकतया निर्दिष्टः सत्यशब्दाभिधेय एवभूमेति कथमधिकतया सत्यस्योपदेशोऽवगम्यत इति चेत् । स वा एष एवम्पश्यन्नेवं मन्वान एवं विजानन्नतिवादीभवतीति प्राणवादिनोऽतिवादित्वमुक्त्वा एष तु वा अतिवदति यः सत्येनातिवदतीति तु शब्द एव प्राणोपासकात्सत्योपासकं व्यावर्त्यं पूर्वातिवादित्वनिमित्तात्प्राणादस्यातिवादित्वनिमित्तं सत्यमधिकतयोपदिशति सत्येनेतीत्थंभूतलक्षणे तृतीया सत्येन परब्रह्मणोपास्येनोपलक्षितोयोऽतिवदतीत्यर्थः । सत्यशब्दश्च ब्रह्मणि प्रसिद्धः ।

धर्मोपपत्तेश्च । ब्र० सू० । १ । ३ । ९ ॥

धर्माणां निरतिशयसुखरूपत्वामृतत्वस्वमहिमप्रतिष्ठितत्वादीनामन्यत्राघटमानानां परमात्मन्येवोपपत्तेश्च भूमा परमात्मैवेति स्थितम् । प्रकृतमनुसरामः ॥

# अष्टमाध्यायस्य प्रथमः खण्डः ।

अथ यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तरआकाशस्तस्मिन् यदन्तस्तदन्वेष्टव्य तद्वाव विजिज्ञासितव्यमिति ॥ १ ॥

तञ्चेद्ब्रूयुर्यदिदमस्मिन् ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः किन्तत्र विद्यते यदन्वेष्टव्यं यद्वाव विजिज्ञासितव्यमिति ॥ २ ॥

दहरविद्या प्रस्तूयते । विद्यान्तरारम्भे अथ शब्दो वर्त्तते अस्मिन् ब्रह्मपुरे परब्रह्मणः पुरं स्थितिहेतुत्वात् पुरशब्दितं तस्मिन्नुपासकशरीरे यत् दहरमल्पं पुण्डरीकं हृत्पुण्डरीकरूपं वेश्मास्मिन्नन्तः दहर आकाशस्तस्मिन् आकाशे यदन्तस्तदन्तर्वर्ति च यत्तदुभयं श्रवणमननाभ्यामवगन्तव्यं ध्यातव्यञ्चेत्यर्थस्तदन्वेष्टव्यमित्यत्र तदिति नपुंसकलिङ्गनिर्देशः लिङ्गसामान्यविवक्षया द्रष्टव्यः । तद्वावेति । वावेत्यवधारणे । तदेव विजिज्ञासितव्यं मीमांसितव्यम् । इति गुरुणोक्त इति शेषः ॥१॥

तं गुरुं प्रति यदि शिष्या ब्रूयुः पृच्छेयुः । यदिदमित्याद्युक्तानुवादः । यद्वाव विजिज्ञासितव्यम् । तदत्र हृत्पद्मागताकाशे किं विद्यते ब्रह्म च न सम्भवति तस्य स्वव्याप्तस्य दहराकाशत्वायोगादितिभाव इति ब्रूयुरितिसम्बन्धः ॥ २ ॥

यावान्वा अयमाकाशस्तावनेषोऽन्तर्हृदय आकाश उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते ते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणि यच्चास्येहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितमिति ॥ ३ ॥

तदा स गुरुर्ब्रूयात् । किमिति अन्तः शरीरान्तः हृदये हृद्यत इति हृदयशब्दवाच्ये हृत्पद्मगते भूताकाशे आकाश आकाशाख्यः परमात्मास्ति । एष यावान् अयं बहि र्विद्यमानं

आकाश आकाशाख्यः परमात्माऽस्ति, एष यावान् प्रकाश आकाशाख्यः परमात्मा तावान्वै गुणतः परिमाणतश्च तावानेवेतिदहराकाशस्यातिमहत्वञ्चोक्त्वा उभे अस्मिन् द्यावापृथिवी अन्तरेव समाहिते उभावग्निश्च वायुश्च सूर्याचन्द्रमसावुभौ विद्युन्नक्षत्राणीति प्रकृतमेव दहराकाशमस्मिन्निति निर्दिश्य तस्य सर्वजगदाधारत्वमभिधाय यच्चेहास्ति यच्च नास्ति सर्वं तदस्मिन्समाहितम् । इह लोके यद्भोग्यजातमस्ति यच्च मनोरथगोचरमिह नास्ति सर्वं तद्भोग्यजातं दहराकाशे समाहितमित्यर्थः ॥३॥

**तञ्चेद् ब्रूयुरस्मिꣳश्चेदिदं ब्रह्मपुरे सर्वं समाहितं सर्वाणि च भूतानि सर्वे च कामा यदैनज्जरावाऽऽप्नोति प्रध्वंसते वा किं ततोऽतिशिष्यत इति ॥ ४ ॥**

**स ब्रूयान्नास्य जरयैतज्जीर्यति न वधेनास्यहन्यते एतत्सत्यं ब्रह्मपुरमस्मिन् कामाः समाहिता एष आत्माऽपहतपाप्मा विजरोविमृत्युर्विशोकोविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पो यथाह्येवेह प्रजा अन्वाविशन्ति यथानुशासनं यं यमन्तमभिकामा भवन्ति यं जनपदं यं क्षेत्रभागं तं तमेवोपजीवन्ति ॥ ५ ॥**

तं गुरुं प्रति यदि ब्रूयुः शिष्याः किमिति । अस्मिन् ब्रह्मपुरे शरीरान्तर्गते ब्रह्मणि इदं प्रत्यक्षसिद्धं सर्वमित्यादिपूर्वोक्तानुवादः । यदैतत् शरीरं जरामाप्नोति प्रध्वंसते वा शरीरं किन्ततस्तदातिशिष्यते । न किमपि स्वयमपि नश्यतीति यावत् । तथाचोक्तमाहात्म्यं न विजिज्ञास्यत्वसाधकं जरानाशाख्यदोषेण तदभावस्यापि साधयितुं शक्यत्वादित्युक्तं भवति । इति ब्रूयुरितिसम्बन्धः ॥ ४ ॥

तदा स गुरुर्ब्रूयान्नास्य शरीरस्य जरयैतद्ब्रह्म जीर्यति अस्य वधेन न हन्यते । कुतः । एतद्ब्रह्मपुरं पूर्णं परंब्रह्म सत्यं नित्यम् । अचिन्त्यशक्ति च प्रमितं च यतः । तथाच भवदीयो

हेतुः स्वरूपासिद्ध इत्युक्तं भवति । जिज्ञास्यत्वोपपादकतया तस्यैव-माहात्म्यान्तरमाह । अस्मिन्निति । काम्यन्त इति कामा अस्मिन्समाहिताः पूर्णकाम इति यावत् नास्य जरयैतज्जीर्यत इत्याद्युक्तमेव सहेतुकं विशदयति एष इति । एष हृत्पद्मस्थाकाशस्थः परमात्मा नित्यमेव स्वतोऽपहतपाप्मा । अतएव न तत्कार्यं जरादिकमस्येत्याह—विजरइत्यादि । अविजिघत्सोऽपिपास इत्यनेन बुभुक्षादिनाऽपीडाभाव उच्यते । तत्रापि हेतुमाह । सत्यकाम इति यदिष्टं तस्य तत् स्वत एव भवेदित्यर्थः ॥ इदञ्च प्रागुक्तपूर्णकामत्वे हेतुतया-योज्यम् । सत्यकामत्वेऽपि हेतुः सत्यसङ्कल्प इति । अमोघसङ्कल्प इत्यर्थः । सङ्कल्पानुसारिणी इच्छेति प्रसिद्धमिति भावः । महिमान्तरमाह । यथेति । यथा योग्यमेव तारतम्येनेति यावत् । इह एनं राजानं प्रजाः । यथानुशासनं तच्छासनमतिक्रम्य तदाज्ञानुसारेण अन्वाविशन्ति अनुसरन्तीत्यर्थः ॥ यं यमिति यं यमन्तदेशं यं जनपदं राष्ट्रं क्षेत्रभागम् । अभिप्रतिकामा भवन्ति तंतमेवोपजीवन्ति । यथानुशासनमित्येतदपि सङ्गमनीयम् । तच्छासनानुसारेणैव न स्वातन्त्र्येणेत्यर्थः ॥ ५ ॥

**तद्यथेह कर्मजितो लोकः क्षीयत एवामेवामुत्र पुण्यजितो लोकः क्षीयते तद्यइहात्मानमननुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेष्वकामचारो भवत्यथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान् कामांस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥ ६ ॥**

इत्यष्टमाध्यायस्य प्रथमः खण्डः ॥ १ ॥

---

कर्मसाध्यलोकपारतन्त्र्यं प्रदर्श्य क्षयिष्णुत्वं दर्शयति तद्यथेहेतिं ॥ राजसेवादिकर्मणा अर्जितो लोकः यथा क्षीयतेऽन्तवान् भवति एवमेव परलोकं पुण्येन सम्पादितो लोकः पराधीनोपभोगः

त्तीयते । तद्य इहात्मानमिति । तत् तस्मात्कर्मार्जितेषु लोकेषु पारतन्त्र्यं-त्तयिष्णुत्वात् ये विद्वांस इह लोके आत्मानं परमात्मानं यथोक्तगुण-सम्पन्नं शास्त्राचार्योपदिष्टं य एतांश्च पूर्वोक्तान् सत्यकामसत्यसङ्कल्पा-दींश्चाननुविद्य अनुपास्य परलोकं व्रजन्ति तेषां सर्वेषु लोकेषु कामचारो न भवति । अस्वतन्त्रा भवन्ति यथा राजाज्ञानुवर्त्तिनीनां प्रजानामित्यर्थः । व्यतिरेकं प्रदर्श्यान्वयं दर्शयति । अथ इहेति । अथ येऽन्ये इह लोके आत्मानम्, एतान् अपहतपाप्मत्वादींश्च काम्य-मानान् कल्याणगुणानुविद्य उपास्य परलोकं व्रजन्ति तेषां सर्वेषु लोकेषु कामचारो भवति । यथेष्टं प्राप्तास्तृप्ता न पारतन्त्र्यमनु-भवन्तीत्यर्थः ॥ ६ ॥

इत्यष्टमाध्यायस्य प्रथमः खण्डः ॥ १ ॥



एतत्खण्डान्तर्गतवाक्यविषयकमधिकरणमुपन्यस्यते । अत्र दहराकाशो भूताकाशः । आकाशशब्दस्य तत्रैव प्रसिद्धत्वात् दहर-शब्दस्यापि सूक्ष्मार्थत्वेन तत्र वृत्तिसम्भवाच्च । यावान्वायमाकाशस्ता-वानेषोऽन्तर्हृदय आकाशमित्यादिना निर्दिश्यमानस्योपमानोपमेय भावस्य वाह्याभ्यतरभेदमाश्रित्योपपादयितुं शक्यत्वात् । इति पूर्वपक्षे प्राप्त उच्यते ।

( दहर उत्तरेभ्यः ) ब्र० सू० । १ । ३ । १४ ॥

दहराकाशः परमात्मैव कुतः । उत्तरेभ्यो वाक्यशेषगतेभ्यो हेतुभ्यः भूताकाशोपमेयत्वसर्वाधारत्वनिरतिशयभोग्यत्वनिरुपाधिका-पहतपाप्मत्वादिधर्माणां परमात्मव्यतिरिक्तभूताकाशे असम्भवात् । इतश्च दहराकाशः परमात्मेत्याह ।

गतिशब्दाभ्यां तथाहि दृष्टं लिङ्गञ्च । ब्र० सू० ।१।३।१५॥

सर्वाः प्रजा अहरहर्गच्छन्तीति गतिर्ब्रह्मलोकमितिशब्दस्ताभ्यां दहरः परमात्मेति निश्चीयते । सता सोम्य तदा सम्पन्नो भवतीति

प्रत्यहं गमनं श्रुत्यन्तरे तथैव दृष्टम्। कर्मधारयसमासपरिग्रहे ब्रह्मैव लिङ्गं शब्दसामर्थ्यञ्चेत्यर्थः ॥ यदुक्तमाकाशशब्दस्य भूताकाशे प्रसिद्धत्वादिति तत्राह ।

प्रसिद्धेश्च । ब्र० सू० । १ । ३ । १७ ॥

यदेष आकाशआनन्दो नस्यादिति परमात्मन्यपि आकाशशब्दस्य प्रसिद्धत्वात् । यदुक्तं परमात्मनोऽल्पपरिमाणत्वं नोपपद्यते तत्राह ।

अल्पश्रुतेरितिचेत्तदुक्तम् । ब्र० सू० । १ । ३ । २१ ॥

तदुक्तं शाण्डिल्यविद्यायां निचाय्यत्वादेवं व्योमवच्चेति सूत्रखण्डेनोपासनार्थं विपुलस्याल्पत्वोपदेश उपपद्यत इति पूर्वमेवोक्तम् ।

तथा प्रदानवदेव तदुक्तम् । ब्र० सू० । ३ । ३ । ४२ ॥

तद्य इहात्मानमनुविद्य व्रजन्तीति दहरविद्याया।दहराकाशमात्मानं गुणिनं पूर्वमुपास्यमुक्त्या पुन एतांश्च सत्यान् कामानित्यपहतपाप्मत्वादिगुणानामप्युपासनं पृथगेवाभिधीयते। तत्र किं गुणवेदने दहराकाशस्य गुणिनस्तत्तद्गुणवत्त्वेन वेद्यत्वमस्ति नवेति संशयः। सकृदेव दहराकाशस्यापहतपाप्मत्वादिगुणविशिष्टत्वेन चिन्तयितुं शक्यत्वाद्गुणोपासने तत्तद्गुणविशिष्टतया तस्य चिन्तनीयं नावर्त्तनीयमिति प्राप्ते प्रचक्ष्महे। प्रदानवद्दहराकाशस्य गुणिनस्तेषां गुणानां चिन्तने तत्तद्गुणविशिष्टत्वेन चिन्तनमावर्तनीयम् । अयमर्थः। यद्यपि तेषां गुणानामपहतपाप्मत्वादीनामेकएव दहराकाशो गुणी तथापि तत्तद्गुणविशिष्टाकारविवक्षयाऽपहतपाप्मा विजर इत्यादौ नानात्वेन चिन्तनीय इति। यथेन्द्राय राज्ञे पुरोडाशमेकादशकपालं निर्वपेदिन्द्रायाधिराजायेन्द्राय स्वराज्ञे "इत्यस्यां त्रिपुरोडाशिन्यामिष्टाविन्द्रस्यैव राजत्वादिगुणविशिष्टत्वेऽपि राजाधिराजस्य राजगुणभेदेन तत्तद्गुणविशिष्टदेवताभेदात् पुरोडाशानां प्रदानस्य प्रक्षेपस्यावृत्तिस्तद्वत्। तदुक्तं देवताकाण्डे । नाना वा देवता पृथक्ज्ञानादिति । त्रयाणां यागद्रव्याणां भेदाविशिष्टरूपाणां देवतानाञ्चभेदात्

त्रिभिर्देवनासम्गन्धैः कल्प्यानां यागानां तत्तद्देवतोद्देशेन क्रमिकाणि प्रदानानि कर्त्तव्यानीति देवताकाण्डसूत्रार्थः। इति स्थितम्। प्रकृतमनुसरामः।

स यदि पितृलोककामो भवति सङ्कल्पादेवास्य पितरः समुत्तिष्ठन्ति तेन पितृलोकेन सम्पन्नो महीयते ॥१॥

अथ यदि मातृलोककामो भवति सङ्कल्पादेवास्य मातरः समुत्तिष्ठन्ति तेन मातृलोकेन सम्पन्नो महीयते ॥२॥

अथ यदि भ्रातृलोककामो भवति सङ्कल्पादेवास्य भ्रातरः समुत्तिष्ठन्ति तेन भ्रातृलोकेन सम्पन्नो महीयते ॥३॥

अथ यदि स्वसृलोककामो भवति सङ्कल्पादेवावास्य स्वसारः समुत्तिष्ठन्ति तेन स्वसृलोकेन सम्पन्नो महीयते ॥४॥

अथ यदि सखिलोककामो भवति सङ्कल्पादेवास्य सखायः समुत्तिष्ठन्ति तेन सखिलोकेन सम्पन्नो महीयते ॥५॥

अथ यदि गन्धमाल्यलोककामो भवति सङ्कल्पादेवास्य गन्धमाल्ये समुत्तिष्ठतस्तेन गन्धमाल्यलोकेन सम्पन्नो महीयते॥६

अथ यद्यन्नलोककामो भवति सङ्कल्पादेवास्यान्नपाने समुत्तिष्ठतस्तेनान्नपानलोकेन सम्यन्नो महीयते ॥७॥

अथ यदि गीतवादित्रलोककामो भवति सङ्कल्पादेवास्य गीतवादित्रे समुत्तिष्ठतस्तेनगीतत्वादित्लोकेन सम्पन्नो महीयते ॥८

अथ यदिस्त्रीलोककामो भवति सङ्कल्पादेवास्य स्त्रियः समुत्तिष्ठन्ति तेन स्त्रीलोकेन सम्पन्नो महीयते ॥९॥

ययमन्तमभिकामो भवति यं कामं कामयते सोऽस्यसङ्कल्पादेव समुत्तिष्ठति तेन सम्पन्नो महीयते ॥१०॥

इत्यष्टमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥



स मुक्तः पुरुषः यदि पितृलोककामो भवति अस्य मुक्तस्य श्रीपुरुषोत्तमानुग्रहादाविर्भूतसत्यसङ्कल्पादेव पितरस्समुत्तिष्ठन्ति । प्रयत्नान्तरनिरपेक्षसङ्कल्पसाध्यं पित्रादीनां समुत्थानं भवति ततश्च तेन-पितृलोकेन भोगेन सम्पन्नः सम्पत्तिरिष्टप्राप्तिस्तया समृद्धो महीयते पूज्यते । एवमुत्तत्राप्येवं व्याख्येयम् ॥१।२।३।४।५।६।७।८।९ ॥

यं यमन्तं प्रदेशमभिकामोऽभिभवति । यं च कामयते सः कामः प्राप्तुमिष्टसङ्कल्पादेव समुत्तिष्ठत्यस्य तेनेच्छाऽविघाततयाऽभिप्रेतार्थ-प्राप्त्या सम्पन्नो महीयते पूज्यत इत्यर्थः ॥१०॥

इत्यष्टमाध्यायस्य द्वितीयः खण्डः ॥ २ ॥



**त इमे सत्याः कामा अनृतापिधानास्तेषाᳬ सत्यानाᳬ सतामनृतमपिधानं यो यो ह्यस्येतः प्रैति नृतमिह दर्शनाय लभते ॥ १ ॥**

**अथ ये चास्येह जीवा ये च प्रेता यच्चान्यदिच्छन्नलभते सर्वं तदत्र गत्वा विन्दतेऽत्र ह्यस्यैते सत्याः कामा अनृतापिधानास्तथापि हिरण्यनिधिं निहितमक्षेत्रज्ञाउपर्य्युपरि सञ्चरन्तो न विन्देयुरेवमेवेमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विदन्त्यनृतेन हि प्रत्यूढाः ॥२ ॥**

ब्रह्मणि वर्त्तमाना इमे सत्या अपहतपाप्मत्वादयः कामाः ॥ अनृतं पिधानं येषां तेऽनृतापिधाना अनृताच्छादिताः । तेषां सत्यानां सतां कामानां विद्यमानानामेवानृतपिधानं संसारिकफलं कर्मानृतं तेनाच्छादनं ततश्च स्वात्मभूतपरमात्मनि वर्त्तमाना अपहतपाप्मत्वसत्यकामवसत्यसङ्कल्पत्वादयो धर्मा अनादिकर्मात्मकविद्यातिरोहितत्वान्नभासन्त

इत्यर्थः । अतः सत्यकामत्वानृतापिधानत्वादस्य जीवस्य यो यः पित्रादिरितः प्रैति लोकान्तरं गच्छति तस्य तद्दर्शनेच्छायामपि तद्दर्शनाय न लभते ॥ १ ॥

न केवलमेतावत् किन्त्वन्यदप्यस्तीत्याह । अथेति अथ पुनर्येचास्याविदुषो जीवाः जीवन्तः पुत्रभ्रात्रदयः ये च प्रेता मृताः सम्बधिनो यच्चान्यदिहलीके वस्त्रान्नपानादिगन्धमाल्यादिकं तत्सर्वमिच्छन्नपि न लभते सत्सर्वमत्र दहराकाशाख्ये ब्रह्मणि गत्वा विन्दते लभते अत्रास्मिन् हार्दाकाशे सत्याः कामाः वर्त्तन्ते हि यस्मादस्योपासकस्य सत्याः कामाः काम्यमाना अनृतापिधाना अनृतेन सांसारिककर्मफलेनाऽपिधानाऽनाच्छादितास्सन्तो भोग्यभूता अपहतपाप्मत्वादय एतन्निष्ठा अतोनिरतिशयभोग्यत्वमित्यर्थः । ननु हृत्पुण्डरीकाशे परमात्मायेत्तिष्ठत्ति । तर्हि प्रतिदिनं सुषुप्तौ गच्छद्भिरस्माभिः कुतो न लभ्यते ऽतः तत्र नास्तीत्याशङ्कां सदृष्टान्तं परिहरति । तद्यथेति । तत् निदर्शनं यथा हिरण्यनिधिं निहितं भूमेरधस्तान्निदिप्रमत्तेत्रज्ञा निधिशास्त्रैर्निधिक्षेत्रमजानन्तः निधेरुपर्य्युपरि सञ्चरन्तो न विन्देयुर्नजानीयुरेवमेवेमाः सर्वाः प्रजाः सुषुप्तिकालेऽहरहर्गच्छन्त्यः सुषुप्तौ सति सम्पद्य न विदुरित्युक्तरीत्याऽविभागं गच्छन्त्यः दहराकाशाख्यं ब्रह्मरूपं लोकं न विदन्ति न जानन्तीत्यर्थः । तत्र हेतुमाह । अनृतेन हि प्रत्यूढाः प्रतीपं नीताः स्वभावन्तरं नीताः प्राप्ताआच्छादिता इति यावत् ॥ २ ॥

**स वा एष आत्मा हृदि तस्यैतदेवनिरुक्तं हृदयमिति तस्मा द्धृदयमहरहर्वा एवम्वित् स्वर्गलोकमेति ॥३॥**

**अथ य एष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्येनरूपेणाभिनिष्पद्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तस्य ह वा एतस्य ब्रह्मणो नाम सत्यमिति ॥ ४ ॥**

अपहतपाप्मत्वादिगुणं यत् ब्रह्म प्रागभिहितं तद्हृदयवर्त्तित्वेन स्मारयति। स वा एष इति। य आत्माऽपहतपाप्मेति प्रक्रान्तः स वा एष आत्मा हृदि हृदयपुण्डरीक आकाशशब्देनाभिहितः, हृत्पुण्डरीकाकाशाख्याकाश इत्येकं नोमोक्तं तस्य नामान्तर मपि निर्वचनपूर्वकमाह। तस्येति। तस्य हृत्पद्मगतस्य परब्रह्मणस्तस्य वक्ष्यमाणस्य हृदयमितिनाम्नः। एतदेव निरुक्तं निर्वचनं हृयमिति। अयपयगतौ हृदिगतमिति यस्मात् तस्मात्। हृदयं हृदयनामकम्। एवं वेत्तुः फलमाह। अहरिति। अहरहः प्रत्यहम्। एवंवित् एतादृशदहराकाशोपासननिष्ठः सुखरूपं लोक्यमानं ब्रह्म प्राप्नोतीत्यर्थः॥ ३॥

तथा वेत्तुः कथं ब्रह्मप्राप्तिः प्राप्तस्य वा किं भवतीति जिज्ञायामाह। अथेति। अथशब्दः प्रकृतापेक्षत्वं द्योतयति। सम्प्रसादपदं प्रत्यगात्मनि लाक्षणिकं सम्प्रसादशब्दशक्यसुषुप्तिस्थानसम्बन्धित्वाज्जीवस्य। तथाचाहरहर्वा एवंविदिति पूर्ववाक्यनिर्दिष्ट उपासकः प्रत्यगात्मा। आस्माद्धेयतयापरिदृश्यपानाच्छरीरात्समुत्थायोत्क्रम्य परं ज्योतिः श्रीभगवन्तं परब्रह्म पुरुषोत्तममुपसम्पद्य साक्षात्स्वात्मेनानुभूय स्वेनरूपेण तत्स्वरूपगुणादिविषयानवच्छिन्नानुभवितृत्वरूपेण तदात्मकतयावतिष्ठते आविर्भावस्वरूपं किमिति जिज्ञासायामाह। एष आत्मेति होवाचेति। एष प्राप्यत्वेन निर्दिष्टः ज्योतिश्शब्दवाच्यः परमात्मा भगवान्, आत्मा, इति होवाच। एतत परं ज्योतिश्शब्दितं परब्रह्म। अमृतमविनाशि भूमा यो वै भू मा तदमृतमित्युक्तम्। अतएवाभयम् भयशून्यम्। तस्यैवनामान्तरमाह। तस्येति। तस्य हवा एतस्य ब्रह्मणोनामाभिधानम् किं तत्सत्यमिति॥ ४॥

**तानि ह वा एतानि त्रीण्यक्षराणि सतीयमिति तद्यत्सत्त-**

दमृतमथयत्ति तन्मर्त्यमथ यद्यं तेनोभे यच्छति यदनेनोभे- यच्छति तस्माद्यमहरहर्वा एवं वित् स्वर्गं लोकमेति ॥ ५ ॥

इत्यष्टमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

तन्निर्वचनायाक्षराण्याह । तानीत्यादिना तानि ह वा एतानि ब्रह्मणो नामाक्षराणि त्रीण्येतानि सत्तीयमिति । सकारस्तकारोयमिति च । ईकारस्तकार उच्चारणार्थोऽनुबन्धः । तन्निर्वक्ति । तद्यदिति तत् तत्र यत्सकारस्तदमृतं चेतनं सद्ब्रह्मात्मकम् । अथ यत्ति तकारस्तन्मर्त्यमचेतनम् । अथ यद्यमक्षरं तेनाक्षरेणोभे यच्छति अमृत-त्वमर्त्यत्वरूपेणोपलक्षिते उभे यत् यच्छतीति यं, तदेवोपसंहरति यदनेनोभयं यच्छति तस्माद्यम् । अनेन चेतनाचेतनत्वरूपेणोपलक्षिते उभे यतो यच्छति तस्माद्यमित्यर्थः । एवं वेत्तुः फलमाह । अहरह-र्वेति ॥ एवंविदित्यस्य प्रागुक्तरीत्याऽर्थोऽवसेयः ॥ ५ ॥

इत्यष्टमाध्यायस्य तृतीयः खण्डः ॥ ३ ॥

---

अथ य आत्मा स सेतुर्विधृतिरेषां लोकानामसंभेदाय नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्नशोको न सुकृतं न दुष्कृतं सर्वे पाप्मानोऽतोनिवर्त्तन्तेऽपहतपाप्मा ह्येष ब्रह्मलोकः॥ १

उक्त लक्षण आत्मा एषां लोकानामसंभेदायासङ्कराय सेतु-रिव विधृतिर्विधारकः सर्वेऽपि वर्णाश्रमक्रियाकलापाः पृथिव्यादीनां गन्धशैत्यौष्ण्यादयो धर्माश्च परमात्माज्ञया व्यवस्थिता भवन्ति यदि स्वशासने जगन्नधारयेत्सर्वेषां धर्माणां साङ्कर्यमेव प्रसज्येत इति भावः । नैतं सेतुमिति । एतं परमात्मानं सेतुमहोरात्रे परिच्छे-दकत्वेन न तरतः न प्राप्नुतः । तरति प्राप्तिवचनः वेदान्तं तरतीति वत् । अतएवेनं न जरा तरति न प्राप्नोति तथा न मृत्युर्नशोको न सुकृतं धर्मः दुष्कृतमधर्मो न प्राप्नोति । उक्तार्थं निगमयति

सर्वेपाप्मान इति । अपहतपाप्माह्येष ब्रह्म लोक इति ब्रह्मरूपो लोकएषोऽपहतपाप्मा हि हेतौ यस्मादपहतपात्मा तस्मात्सर्वे पाप्मानो निवर्त्तन्त इत्यर्थः ॥ १ ॥

**तस्माद्वा एतं सेतुं तीर्त्वान्धः सन्ननन्धो भवति विद्धः सन्नविद्धो भवति उपतापीसन्ननुपतापी भवति । तस्माद्वा एतं सेतुं तीर्त्वा अपि नक्तमहरेवाभिनिष्पद्यते सकृद्विभातोह्येवेष ब्रह्मलोकः ॥ २ ॥**

**तद्य एवैतं ब्रह्मलोकं ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषां सर्वेषु लोकेषु कामचारो भवति ॥३॥**

तस्मादेतस्य मुक्तस्यापहतपाप्मत्वादेव एतं सेतुं परमात्मानं तीर्त्वा प्राप्य ब्रह्मप्राप्तितः पूर्वमन्धोऽपि आन्ध्यादीनां पापकार्यत्वात् । अनन्धस्तद्दोषरहितो दिव्यदेहविशिष्टो भवति । प्राग्विद्धो दुरुक्तिवाणैः । अविद्धो भवति । पूर्वमुपतापी रोगी सन्नपि परमात्मानं प्राप्यानुपतापी भवति । तस्मादेवमस्य मुक्तनिष्पापत्वादेव । एतं सेतुं परमात्मानं प्राप्य नक्तमप्यहरेव निष्पद्यते अहसदृशी सा रात्रिः । तत्र हेतुः । सकृद्विभातः सर्वब्रह्मस्वरूपप्रकाशस्यानावृततयाभासमानत्वादित्यर्थः ॥२॥

तत् तत्र एवं सति एतं ब्रह्मलोकं परमात्मानं ब्रह्मचर्य्येण स्त्रीविषयकतृष्णात्यागेन शास्त्राचार्य्योपदेशादिना जानन्ति तेषां ब्रह्मचर्य्यवतामेव एष ब्रह्मलोकः ब्रह्माख्यलोकप्राप्तिः नान्येषां स्त्रीविषयसम्पर्कजाततृष्णानां ब्रह्मविदामपीत्यर्थः तेषामेव सर्वेषु लोकेषु कामचारो भवति सर्वलोकानुभवः । तस्मात् परं साधनं ब्रह्मचर्य्यं विद्यायामितिभावः ॥ ३ ॥

इत्यष्टमाध्यायस्य चतुर्थः खण्डः ॥ ४ ॥

———



**अथ यद्यज्ञ इत्याचक्षते ब्रह्मचर्यमेव तद्ब्रह्मचर्येण ह्येव**

**यो ज्ञाता तं विन्दतेऽथ यदिष्टमित्याचक्षते ब्रह्मचर्य्यमेव तदब्रह्मचर्य्येण ह्येवेष्ट्वात्मानमनुविन्दते ॥ १ ॥**

कथं ब्रह्मचर्यस्य ब्रह्मलोकप्राप्तिसाधनत्वं यज्ञादीनामेव तत्साधनत्वेनान्यत्रविहितत्वादित्याशङ्क्याह। अथेति। यत् यज्ञ इत्याचक्षते विद्वांसस्तद्ब्रह्मचर्यसाध्यत्वाद्ब्रह्मचर्य्यमवेत्यर्थः। कथं यज्ञस्य ब्रह्मचर्य्यत्वमित्यत आह। ब्रह्मचर्य्येणेति। हि यस्मात् ब्रह्मचर्येण योज्ञाता ब्रह्मविषयकज्ञानवान् स तं लोकं यज्ञस्यापि पारंपर्य्येण फलभूतं विन्दते लभते। ज्ञानसाधनस्य ब्रह्मचर्य्यस्य यज्ञसाधनत्वात् यज्ञोऽपि ब्रह्मचर्य्यमेवेति। यदिष्टमित्याचक्षते ब्रह्मचर्यमेव तत्। कथम्। ब्रह्मचर्येण साधनेन तमीश्वरमिष्ट्वा पूजयित्वाऽऽत्मानं परमात्मानमनुविन्दते जानाति ॥१॥

**अथ यत्सत्रायणमित्याचक्षते ब्रह्मचर्य्यमेव तत् ब्रह्मचर्य्येण ह्येव सत आत्मनस्त्राणं विन्दतेऽथ यन्मौनमित्याचक्षते ब्रह्मचर्य्यमेव ब्रह्मचर्य्येण ह्येवात्मानमनुविद्य मनुते ॥२॥**

**अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्य्यमेव तदेष ह्यात्मा न नश्यति यं ब्रह्मचर्येणानुविन्दतेऽथ यदरण्यायनमित्याचक्षते ब्रह्मचर्य्यमेव तत्तदरश्च ह वै ण्यश्चार्णवौ ब्रह्मलोके तृतीयस्यामितोदिवितदैरंमदीयꣳ रस्तदश्वत्थः सोमसवनस्तदापराजितापूर्वब्रह्मणः प्रभुविमितꣳ हिरण्मयम् ॥३॥**

यत्सत्रायणं वहुयजमानकं वैदिकं कर्म इत्याचक्षते ब्रह्मचर्यमेव तत्। सत इत्यनुद्यात्मान इतिव्याख्यानम्। अनेन सतो भगवत स्त्राणमयतेऽनेनेति सत्त्रायणमिति निरुक्तिः सूचिता। सतः परस्मादात्मनस्त्राणरक्षणं ब्रह्मचर्यसाधनेन विन्दते अतः सत्रायणशब्दमपि ब्रह्मचर्यमेव तत्। अथ यन्मौनं वाङ्नियमनलक्षणमित्याचक्षते तत् ब्रह्मचर्य्यमेव ब्रह्मचर्येणैव साधनेन युक्तः सन्नात्मानं शास्त्राचार्याभ्यामनुविद्य पश्चान्मनुते। अनेन मनुतेऽनेनेति मौनमितिनिर्वचनं सूचितं भवति ॥ २ ॥

अथ यदनाशकायनमित्याचक्षते ब्रह्मचर्यमेव तत्। यमात्मानं ब्रह्मचर्येणानुविन्दते स एष आत्मा ब्रह्मचर्यसाधनवतो न नश्यति। एतेनाप्यनाशकं नाशशून्यं ब्रह्मऽयतेऽनेनेत्यनाशकायनमितिनिर्वचनं प्रदर्शितं भवति। अथ यदरण्यायतनमित्याचक्षते ब्रह्मचर्य्यमेवतत अरण्यशब्दयोरर्णवयोर्ब्रह्मचर्य्यवतोऽपनादरण्यायनं ब्रह्मचर्यम्। तत् तत्र हि ब्रह्मलोकेऽरश्चाह वै प्रसिद्धोण्यश्चार्णवौ समुद्रौ। समुद्रोयमे वा सरसि-तिष्ठतः। तृतीयत्वंभुवमन्तरिक्षञ्चापेक्ष्य। तृतीयाद्यौस्तस्यांतृतीयस्यामितोऽस्माल्लोकादारभ्य गम्यमानायां दिवि। तत्त्रैव चैरंमदीयनामकं सर इरयामृतेन माद्यन्ते यस्मिन् तदैरंमदीयममृतमयं सर इत्यर्थः। चाश्वन्थो वृक्षः सोमसवनोनामतः सोमोऽमृतं तन्निःस्रवोऽमृतस्रव इति वा तत्रैव च ब्रह्मलोके ब्रह्मचर्य्यसाधनरहितैर्ब्रह्मचर्यसाधनद्भ्योऽन्यैर्न-जीयते इत्यपराजितानाम पूः पुरी ब्रह्मणः प्रमुणा विशेषेण मितं हिरण्यमयं सौवर्णं मण्डयमितिशेषः। स्वभोग्यभूमित्वेन विशेषतः परिगृहीतमित्यर्थः॥ भगवतोव्यापित्वेऽपि विग्रहविशिष्टतया सन्निधानाद्विमतत्वमतश्चतद्देशविशिष्टब्रह्मप्राप्तिरिति भावः॥३॥

**तद्य एवैतावरञ्चण्यश्चार्णवौ ब्रह्मलोके ब्रह्मचर्येणानुविन्दन्ति तेषामेवैष ब्रह्मलोकस्तेषाꣳ सर्वेषु लोकेषु कामचारो भवति ॥ ४ ॥**

ब्रह्मचर्य्यस्य सर्वसाधनेभ्यउत्कृष्टत्वमाह। तद्येति। तत् तत्र ब्रह्मलोके एतावर्णवौ यावरण्याख्यावुक्तौ ब्रह्मचर्येण साधनेनानुविदन्ति ये तेषामेवेष यो व्याख्यातो ब्रह्मलोकः तेषां ब्रह्मचर्यसाधनवतां ब्रह्मविदां सर्वेषु लोकेषु कामचारो भवति। नान्येषामब्रह्मचर्य्यपराणां वाह्यविषयासक्तबुद्धीनां कदाचिदपीत्यर्थः॥४॥

इत्यष्टमाध्यायस्य पञ्चमः खण्डः ॥ ५ ॥

अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल एष शुक्ल एष नील एष पीत एष लोहितः ॥ १ ॥

तद्यथा महापथ आतत उभौ ग्रामौ गच्छतीमंचामुञ्चैवमेवैता आदित्यस्य रश्मय उभौ लोकौ गच्छन्तीमंचामुश्चामुष्मादादित्यात् प्रतायन्ते ता आसु नाडीषु सृप्ता आभ्यो नाडीभ्यः प्रतायन्ते तेऽमुष्मिन्नादित्ये सृप्ताः ॥ २ ॥

उक्तब्रह्मलोकप्राप्तिसाधनतया मूर्द्धन्यनाडीगमनं प्रस्तौति—अथेति। या एता वक्ष्यमाणहृदयस्य कमलाकारस्य ब्रह्मोपासनास्थानविशेषस्य सम्बन्धिन्यो नाड्यो हृदयमांसपिण्डात् सर्वतो विनिःसृता आदित्यमण्डलादिव रश्मयःस्ताश्चैताः पिङ्गलस्य वर्णविशेषस्याणिम्नः सूक्ष्मरसस्य रसेन पूर्णाः तिष्ठन्ति=वर्त्तन्ते, तथा शुल्कनीलपीत लोहितानां रसस्य पूर्णाः सौरेण तेजसा पीताख्येन पाकाभिनिर्वृत्तेन कफेनाल्पेन सम्पर्कापिङ्गलं भवति। सौरंतेजः पिङ्गलाख्यम्। सौरं तेजः पीताख्यं तदेव च वातभूयस्त्वान्नीलं भवति। तदेव कफभूयस्त्वाच्छुक्लं कफेन समतायां पीतम्। शोणितवाहुल्येन लोहितः कथं भवतीति श्रुतिः। स्वाहादित्यसम्बन्धादेव तत्तेजसो नाडीष्वनुगतस्यैते वर्णविशेषाः। कथम्। असौ वा आदित्यः पिङ्गलो वर्णत एष आदित्यः शुक्लोऽप्येषनील एष पीत एव लोहित आदित्य एव ॥ १ ॥

तत् निदर्शनं यथा महापथो महामार्गः। आततो विस्तृतः। उभौ ग्रामौ गच्छति। कौ तौ। इमञ्चामुञ्च। एवमेवादित्यस्य रश्मयः। इमञ्चामुञ्चेत्युभौ लोकौ गच्छतः। उभौ लोकौ गच्छन्तीत्युक्तमेवप्रकारं विशदमाह—अमुष्मादिति। आदित्यमण्डलाद्रश्मयः प्रतायन्ते व्याप्ता भवन्ति ता आसु नाडीषु सृप्ता गताः। आभ्यो नाडीभ्यः प्रतायन्ते ये नाडीस्था रश्मयः व्याप्ता भवन्ति तेऽमुष्मिन्नादित्ये सृप्ताः गताः। रश्मिशब्दस्योभयलिङ्गत्वात्त इत्युक्तम् ॥ २ ॥

तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्यासु नाडीषु तदा नाडीषु सृप्तो भवति तं न कश्चनपाप्मा स्पृशति तेजसा हि तदासम्पन्नो भवति ॥ ३ ॥

अथ यत्रैतद् बलिमानं नीतो भवति तमभित आसीना आहुर्जानासि मां जानासि मामिति स यावदस्माच्छरीरादनुत्क्रान्तो भवति तावज्जानाति ॥ ४ ॥

तत् तत्रैवं सति यत्र यदा एतत् एष सुप्तो जीवः समस्तः उपसंहृतेन्द्रियः सम्पन्नः । बाह्यविषयसम्पर्कजनितकालुष्याभावात् सम्यक् प्रसन्नः । स्वप्नं न पश्यति । तदा आसु नाडीषु सृप्तः । पुरीतद्गतब्रह्मगमनाय प्रविष्टो भवति । तं सुप्तजीवं न कश्चन पाप्मा धर्माधर्मरूपः स्पृशति कुतः ? तेजसेति । तेजसा ब्रह्मणा हि तदा सम्पन्नः सङ्गतो भवति अत्र तेजश्शब्दस्य प्रकाशकगुणयोगाद् ब्रह्मपरत्वम् । सता सोम्य तदा सम्पन्नो भवतीति श्रुतेः । सम्पत्तिर्नाम देहेन्द्रियाधिष्ठातृत्वराहित्येन ब्रह्मण्यवस्थानम् । सम्पत्त्यविकरणस्य करणत्वविवक्षया तृतीया निर्देशः ॥ ३ ॥

नाडीरेवं स्तुत्वा ताभिरूर्ध्वगमनं प्रदर्शयितुं मरणकालं प्रसञ्जयति । अथेति । अर्थान्तरप्रस्तावार्थोऽथशब्दः । यत्र यदा एतत् एषः पुरुषः । अवलिमानं रोगादिना देहस्यावलभावं नीतः प्राप्तो भवति । वैराग्यार्थं दौर्बल्यावस्थामेव विशदयति । तमिति । तमुतापिनं पुरुषमभित आसीना ज्ञातय आहुः । किमिति जानासि मां जानासि मामिति । स यावदस्माच्छरीरादनुत्क्रान्तो भवति । तावज्जानाति ॥ ४ ॥

अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते स ओमिति वा होद्वा मीयते स यावत् क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषाम् ॥ ५ ॥

तदेष श्लोकः शतं चैका च हृदयस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवत्युत्क्रमणे भवति ॥ ६ ॥

इत्यष्टमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

यत्र यदा एष अस्माच्छरीरादुत्क्रामति अथ तदा एतैरेव रश्मिभिर्नाडीस्थसौररश्मिभिः प्रकाशितनाडीद्वारः ऊर्ध्वलोकानुसारी आक्रमते गन्तुमभिमुखो भवति, स विद्वान् ओमिति भगवन्नाम उद्वा तस्योदितिनामेति च कीर्तयन्नेव मीयते प्रमीयते गच्छति । तथाच मृत्युसमये तस्य भगवन्नामस्मरणं भवतीत्यर्थः । स विद्वानुत्क्रमिष्यन् यावत् क्षिप्येन्मनो यावता कालेन मनसः क्षेपः स्यात्तावता कालेनादित्यं गच्छति, क्षिप्रं प्राप्नोति । आदित्यप्राप्तौ किं स्यादित्यत आह । एतद्वै खल्विति । एतद्वै खलु प्रसिद्धं ब्रह्मलोकस्य द्वारं य आदित्यस्तेन द्वारभूतेन ब्रह्मलोकं गच्छति । विद्वान् प्रपद्यते अनेनेति प्रपदनं प्राप्तिसाधनं य आदित्योऽविदुषाञ्च निरोधकम् सूर्यमण्डलभेदासामर्थ्यान्न गन्तुमविद्वांसः शक्नुवन्तीत्यर्थः ॥ ५ ॥

तदेषः श्लोकः । तस्मिन् विषये एष वक्ष्यमाणः श्लोकः पठ्यते । शतं चैका चेकोत्तरशतं नाड्यो हृदयस्य सम्बन्धिन्यः प्रधानतो भवन्ति तासां नाडीनामेका मूर्द्धानमभिनिःसृता विनिर्गता । तया मूर्द्धन्यनाड्या ऊर्ध्वमायान् गच्छन् अमृतत्वमेति मुक्तिं प्राप्नोति । विष्वङ् नानागतयस्तिर्यग्विसर्पिण्य उद्धूर्वगाश्चेतरा नाड्यो भवन्ति संसारगमनद्वारभूता न मोक्षाय, ततः किम् तयोत्क्रमण एवोत्क्रान्त्यर्थमेव भवतीत्यर्थः द्विरुक्तिः प्रकरणसमाप्त्यर्थः ॥ ६ ॥

इत्यष्टमाध्यायस्य षष्ठः खण्डः ॥ ६ ॥

---

य आत्मापहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः सविजिज्ञासि-

तव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥ १ ॥

तद्धोभये देवासुरा अनुबुबुधिरे तेहोचुर्हन्त तमात्मानमन्विच्छामो यमात्मानमन्विष्य सर्वांश्च लोकानाप्नोति सर्वांश्च कामानितीन्द्रो हैव देवानामभिप्रवव्राज विरोचनोऽसुराणां तौ हासंविदानावेव समित्पाणी प्रजापतिसकाशमाजग्मतुः।२।

तौ ह द्वात्रिंशतं शतं वर्षाणि ब्रह्मचर्य्यमूषतुस्तौ ह प्रजापतिरुवाच किमिच्छन्तावबास्तमिति तौ होचतुर्य आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोकोऽविजिघत्सोऽपिपासः सत्यकामः सत्यसङ्कल्पः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः स सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मनमनुविद्य विजानातीति भगवतो वाचो वेदयन्ते तमिच्छन्तावास्तमिति।३।

ब्रह्मचर्य्यं मोक्षस्य साधनभूतमिति प्रागभिहितम्। तत्किमनुष्ठितमनुतिष्ठतां सर्वेषां मोक्षमापादयति केषाञ्चिदेवेति जिज्ञासायां योग्यानामेवेत्येतमर्थं प्रस्ताव्याख्यायिकामाह – य आत्मेत्याद्युत्तरखण्डषट्केन आख्यायिकां वक्तुं भूमिकामारचयति—य आत्मेति । व्याख्यातमेतत् । योऽधिकारी तमुक्तगुणमात्मानमनुविद्य शास्त्राचार्योपदेशेनापरोक्षतो-ज्ञात्वा विजानाति स सर्वाँल्लोकान्सर्वान् कामान्, इच्छाविषयांश्च योग्यतानुसारेणाप्नोतीति प्रजापतिरुवाच । कदाचिद्देवासुरसमक्षमिति-शेषः ॥ १ ॥

तदनु तदनन्तरं तत् आत्मज्ञानं सर्वलोकसाधनमित्येतत् । उभये के ते देवासुराः बुबुधिरे वोद्धुमारेभिरे ह किल । कथम् ॥ यमात्मानमन्विष्य परोक्षमपरोक्षज्ञाने सम्पाद्य सर्वान् कामान् सर्वांश्च लोकानाप्नोति तमात्मानं वयमन्विच्छामः = श्रवणमननाभ्यामवगच्छामः हतेत्यास्वादने । एतादृशफलसाधनमात्मानं को न सम्पादयेदिति । इत्यूचुर्ह किल । इन्द्रविरोचनौ प्रतीतिशेषः । अतएवेन्द्रो देवसमर्थे तेषा-

मुपदेशायेति यावत्। स्वयं तमात्मानं श्रोतुं प्रजापतिमपि प्रवव्राज,प्रजापतिसकाशं जगाम ह वै प्रसिद्धमेतत् । एवं विरोचनोऽप्यसुराणामर्थे प्रजापतिमभिप्रवव्राज। एकगुरुकुलवासार्थिनोस्तयोर्गमनकाले परस्परंप्रीतिरभूत् , किं नेत्याह—ताविति। ताविन्द्रविरोचनौ असंविदानावेव प्रीतिरहितावेव अन्योन्यं संविदमकुर्वाणाविति वाह—आश्चर्य्यम्। तस्मिन्नपि समये तयोः प्रीतिर्नाभूदिति। विद्यार्थिताज्ञापनाय समित्पाणी सन्तौ आजग्मतुरागतवन्तौ॥ २॥

तौ ह प्रजापतिरुवाच य एषोऽक्षिणि पुरुषो दृश्यत एष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेत्यथ योऽयं भगवोऽप्सु-परिख्यायते यश्चायमादर्शे कतम एष इत्येष उ एवैषु सर्वेष्वन्तेषु परिख्यायत इति होवाच॥ ४॥

इत्यष्टमाध्यायस्य सप्तमः खण्डः॥ ७॥

---

गत्वा च तावुक्तगुणकमात्मश्रवणाय द्वात्रिंशतं द्विर्त्रिंशत्सङ्ख्यानि वर्षाणि ब्रह्मचर्य्यं गुह्येन्द्रियनियमादिव्रतं चरन्तावूषतुर्ह किल। तत्रैवेतिशेषः। तौ एवं नियमेन स्वसमीपवासिनौ प्रजापतिरुवाच। किमिति। किमिच्छन्तौ युवामत्रावास्तमिति। तावेवं पृष्टावूचतुर्ह। य आत्मेत्यादिः पूर्वोक्तप्रजापतिवाक्यानुवादः इति। एवं रूपं भगवतः पूज्यस्य तव वचो वाक्यं तदर्थभूतमात्मानं वेदयन्ते वेत्तुमिच्छन्ति देवासुरा इति शेषः। अतस्तमात्मानं तेभ्य उपदेष्टुं त्वत्तो ज्ञातुमिच्छन्त। वावामवास्तमवासस्व। गुरुभयात् पुरुषव्यत्यासेनोक्तिः। इति होचतुरित्यन्वयः॥ ३॥

तावेवं प्रकटिताभिप्रायौ प्रजापतिरुवाच। स्वस्यानृतवक्तृतापरिहाराय विरोचनस्य सम्यग्ज्ञानाप्राप्तये चेन्द्रस्य शुद्धभावेन पुनरागमनं जानन् संमुग्धमेवोपदिदेश हेत्याश्चर्ये। अयोग्यानां महान्तो न सम्यगुपदिशन्तीति किमिति। य एषः जागृदवस्थाप्रेरकोऽक्षिणि अन्तः

पुरुषः पूर्णषड्गुणः दृश्यते, दिव्यदृष्ट्या स एष आत्मा सर्वलोकादि-साधनविषयत्वेनोक्तापहतपाप्मत्वादिगुणक आत्मा इति होवाचेति पूर्वेणान्वयः। ननु कुतोऽस्य चक्षुरन्तःस्थस्य परमात्मत्वमित्यत आह होवाचेत्यादि। एतत् चक्षुरन्तस्थममृतं नित्यमुक्तम्। अभयं कुतोऽपि-भयशून्यं ब्रह्मपूर्णगुणम् इति होवाचेति चार्थे। एवं सोपपत्तिकमक्षिस्थ भगवदभिप्रायेण ब्रह्मणोक्ते विरोचनो योऽयोग्यत्वाद्य एषोन्तरक्षणि पुरुषो देहप्रतिविम्बो दृश्यतेऽस्माभिरेष आत्मा प्रागुक्तापहतपाप्मत्वा-दिगुणक आत्मेति ब्रह्मणोभिप्रायः। इति मत्वेममभिप्रायं भूयोदर्शनेन निश्चेतुं इन्द्रसहित एव पुनरपि पृच्छति। अथेति। इन्द्रोऽपि तस्य विपरीतज्ञानाय तदनुसारेणैव पप्रच्छेति ज्ञातव्यम्। अथेति प्रश्ने-भो भगवः पूज्यः योऽयं पुरुषः देहप्रतिविम्बोऽप्सु परिख्यायते यश्चाय-मादर्शे। एष देहप्रतिविम्बः कतमः, किमुक्तरीत्याऽपहतपाप्मत्वादि-गुणकात्मैवोत तदन्य इति विरोचनाभिप्रायः। इत्यूचतुरितिशेषः। स मुग्धमेवोत्तरमाह। एष इति। एष जागृदवस्थाप्रेरकतया प्रकृतोऽक्षिस्थः उ एव उत्कृष्टो हरिरेवैषु पूर्वोक्तेष्वबादिष्वन्तेषु स्थानेषु प्रतिविम्बादिप्रेरक-तया परिख्यायते। समन्तात् ज्ञायते दिव्यदृष्ट्येत्यभिप्रायेणोवाच प्रजा-पतिः। एवमभिप्रायेणोक्तेप्ययोग्यत्वाद्विरोचनः। एष एव देहप्रतिविम्बे-षु सर्वेष्वन्तेषु अबादिष्वपहतपाप्मत्वादिगुणकात्मतया परिख्या-यत इति मत्वा देहप्रतिविम्ब एव सर्वत्रापहतपाप्मत्वादिगुणक आत्मेति ब्रह्माभिप्राय इति निश्चितवान्॥ ४॥

इत्यष्टमाध्यायस्य सप्तमः खण्डः॥ ७॥

---

**उदशराव आत्मानमवेक्ष्य यदात्मनो न विजानीथस्तन्मे-प्रब्रूतमिति तौ होदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति तौ होचतुः सर्वमेवेदमावां भगव आत्मानं पश्याव आलोमभ्य आनखेभ्यः प्रतिरूपमिति॥ १॥**

अनन्तरं प्रजापतिर्नेदं दृश्यमानं देहप्रतिबिम्बं ब्रह्म, तस्य-देहगुणेन गुणवत्त्वमपि देहदोषेण दुष्टत्वमपि भविष्यति न्यायसामान्या-दित्यभिप्रायेण प्रतिबिम्बे दोषान् सूचयितुमाह । उदशराव इत्यादिना । उदपूर्णशरावे आत्मानमात्मत्वावच्छिन्नं देहमवेक्ष्यावलोक्य यदात्मनो विद्यमानमङ्गादिकं न विजानीथ तदज्ञातमङ्गादिकं मे प्रब्रूतमित्युवाच । तौ चोदपूर्णशरावे आत्मानमवेक्षांचक्राते । भो भगवः ? इमावावां सर्वमेवात्मानं पश्यावः । सर्वमित्युक्तमेव विशदमाहतुः । आलोमभ्य — इत्यादि । लोमपर्य्यन्तं नखपर्य्यन्तं यत् देहप्रतिबिम्बं तत् पश्याव इत्यू-चतुरिति सम्बन्धः ॥ १ ॥

**तौ ह प्रजापतिरुवाच साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षेथामिति तौ ह साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वोदशरावेऽवेक्षांचक्राते तौ ह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥**

तौ ह पुनः प्रजापतिरुवाच साध्वलंकृतौ सुवसनौ भूत्वा, उदशरावे, अवेक्षेथां । तौ साध्वलङ्कृतौ सुवसनौ परिष्कृतौ भूत्वा उदशरावेऽवेक्षांचक्राते तथा कृतवन्तौ तौह प्रजापतिरुवाच किं पश्यथ इति ॥ २ ॥

**तौ होचतुर्यथैवेदमावां भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतौ च एवमेवेमौ भगवः साध्वलङ्कृतौ सुवसनौ परिष्कृतावित्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति तौ ह शान्तहृदयौ प्रवव्रजतुः ॥ ३ ॥**

**तौ हान्वीक्ष्य प्रजापतिरुवाचानुपलभ्यात्मानमननुविद्य व्रजतो यतर एतदुपनिषदो भविष्यन्ति देवा वाऽसुरा वा ते परा भविष्यन्तीति सह शान्तहृदय एव विरोचनोऽसुराञ्जगाम तेभ्यो हैतामुपनिषदं प्रोवाचाऽऽत्मैवेह महय्य आत्मा परिचर्य-आत्मानमेवेह महयन्नात्मानं परिचरन्नुभौ लोकमवाप्नोतीमञ्चामुञ्चेति ॥ ४ ॥**

यथैवेदं पूर्वोक्तम्, किन्तदित्यतः तदेव विशदयति--आवां भगव इत्यादि। इत्यूचतुः। अनन्तरं विम्बानुरूपप्रतिविम्बस्रष्टा आत्मेत्युवाच प्रजापतिः। एवं हर्यभिप्रायेण प्रतिविम्बस्याब्रह्मतायां न्यायसाम्येन दोषसूचनायोक्तेऽप्ययोग्यत्वात् विरोचनप्रतिरूपमेव ब्रह्म तत्पूजायै स्वात्मपूजैव कार्येति मत्वा प्रजापतिसूचितमपि दोषमपश्यन्निन्द्रेण सह जगामेत्याह श्रुतिः॥ ३॥

तौ हेति॥ शान्तहृदयौ सम्यग् ब्रह्मणा आत्मतत्त्वमुपदिष्टमित्यभिप्रायवन्तौ तौ गच्छन्तावन्वीक्ष्य प्रजापतिः स्वमाध्यस्थ्यज्ञापनायोवाच-किमिति। आत्मानमपहतपाप्मत्वादिगुणकमात्मानमनुपलभ्याननुविद्य-श्रवणमननाभ्यामज्ञात्वा व्रजतः गच्छतः। अतो यतरे देवा वा असुरा एतदुपनिषदापातप्रतीतार्थवेत्तारो परा भविष्यन्ति श्रेयोमार्गात्पराभूता-बहिर्भूता भविष्यन्ति, मदभिप्रेतार्थस्य दुरवगाहत्वादित्युवाचेति सम्बन्धः। एवमुक्तोपि स विरोचनः शान्तहृदय एव किमत्र गहनमित्यभिप्राय एवासुरान् प्रति जगाम। गत्वा च तेभ्योऽसुरेभ्यः "एतां य एषोन्तरक्षणीत्येवं रूपां देहप्रतिविम्बमेव ब्रह्म, विम्बप्रतिविम्बयोश्चैक्यं तच्चोक्त रीत्या देहाभिमानिजीवैक्ये पर्य्यवस्यत्येतामुपनिषदं प्रोक्तवान्। इह जगति आत्मा जीव एव महय्यः पूज्योऽलङ्कारादिना, आत्मा जीवः परिचर्य्यः सेव्यः। परब्रह्मपूजार्थिभिरिति शेषः। एवं जीवपूजाकरणे फलमाह। आत्मानमेवेत्यादिना। आत्मानमेवेह लोके देहं महयन् परिचरंश्चोभौ लोकाववाप्नोतीमं चामुञ्च। अनेन स सर्वांश्च लोकानाप्नोतीत्यादिब्रह्मोक्तमेव फलमुक्तमिति ज्ञातव्यम्॥ ४॥

**तस्मादप्यद्येहाददानमश्रद्दधानं यजमानमाहुरासुरो बतेत्यसुराणाꣳ ह्येषोपनिषत्प्रेतस्य शरीरं भिक्षया वसनेनालंकारेणेति संस्कुर्वन्त्येतेन ह्यमुं लोकं जेष्यन्तो मन्यन्ते॥ ५॥**

इत्यष्टमाध्यायस्य अष्टमः खण्डः॥ ८॥

इदं विरोचनेनावबुद्धमसुरमतमद्याप्यनुवर्त्तत इत्याह । तस्मादिति । यस्मादसुरेष्वियमुपनिषत् प्रवृत्ता तस्मादिह लोके आददानं दानमकुर्वाणमश्रद्दधानं सत्कार्येषु श्रद्धारहितं अयजमानं यज्ञाकारिणंपुरुषमाहुरासुरः खल्वयं यत एवं स्वभाववानिति विद्यमाना आहुः शिष्टाः । तत्र हेतुरसुराणां ह्येषोपनिषत् यागदानश्रद्धावैधुर्य्यहेतुभूतनास्तिक्यबुद्धिरसुराणामेवहि । एतदेव विशदयति । प्रेतस्येति । प्रेतस्य मृतस्य शरीरं शवमपि भिक्षया यथा कथञ्चित् भिक्षादिना प्राप्तेन वसनेनालङ्कारेण च पूजयन्ति कुणपसंस्कारेणैव परलोकजयं मन्यमाना इत्यर्थः ॥५॥

इत्यष्टमाध्यायस्याष्टमः खण्डः ॥ ८ ॥

---

**अथहेन्द्रोऽप्राप्यैव देवानेतद्भयं ददर्श यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवतिस्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥ १ ॥**

विरोचनवृत्तं दर्शयित्वा देवराजगामिनं वृत्तविशेषमाह अथेति । विरोचनगमनानन्तरम् । इन्द्रो देवानामप्राप्यैतत् वक्ष्यमाणं भयं भयङ्करं न्यायसाम्येन प्रजापत्यभिप्रेतं दोषं ददर्श । हेत्यास्वादने मदभिप्रायो योग्यानामेव स्फुरति नायोग्यानामिति न्यायसाम्यं दर्शयन् भयं ददर्शेत्युक्तमेव विशदयति । यथैवेत्यादिना । यथैव खल्वयमस्मिञ्छरीरे साध्वलङ्कृते देहप्रतिविम्बोऽपि साध्वलङ्कृत सुवसने च सुवसनः परिष्कृते परिष्कृतः नखलोमादिदेहस्यापगमे देहप्रतिविम्बोऽपि परिष्कृतः नखलोमादिरहितो भवति । एवमेवायं देहप्रतिविम्बोप्यस्मिञ्छरीरे नखलोमादिभिर्देहावयवत्वस्य तुल्यत्वादन्धेचक्षुषोऽपगमेऽन्धो भवति स्रामे स्रामः चक्षुर्नासिका वा यस्य सदा स्रवति सः स्रामः । परिवृक्णे च्छिन्नहस्ते देहप्रतिविम्बोऽपि तथा भवति तथास्य देहस्य नाशमन्वेष देहप्रतिविम्बो नश्यति । नहीदृशवस्तुज्ञानेन मोक्षादीनामवाप्तिर्भवितु-

मर्हति तस्यैतद्विलक्षणज्ञानसाध्यत्वादिति भावः ॥ उपलक्षणमेतत् एतदमृतमभयमेतद्ब्रह्मेत्युक्तामृतत्वादीनां प्रतिविम्बे अनुपपत्ति -श्च द्रष्टव्या ॥ १ ॥

ससमित्पाणिः पुनरेयाय तꣳह प्रजापतिरुवाच मघवन्यच्छान्तहृदयः प्राव्राजीः सार्धं विरोचनेन किमिच्छन्पुनरागम इति स होवाच यथैव खल्वयं भगवोऽस्मिञ्छरीरे साध्वलंकृते साध्वलङ्कृतो भवति सुवसने सुवसनः परिष्कृते परिष्कृत एवमेवायमस्मिन्नन्धेऽन्धो भवति स्रामे स्रामः परिवृक्णे परिवृक्णोऽस्यैव शरीरस्य नाशमन्वेष नश्यति नाहमत्र भोग्यं पश्यामीति ॥२॥

एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिꣳशतं वर्षाणीति स हापराणि द्वात्रिꣳशतं वर्षाण्युवास तस्मै होवाच ॥ ३ ॥

इत्यष्टमाध्यायस्य नवमः खण्डः ॥ ६ ॥

---

अतो नाहमत्रास्मिन् देहप्रतिविम्बे भोग्यं फलं पश्यामीति निश्चित्य स मघवा समित्पाणिर्ब्रह्मचर्य्यं वस्तुं पुनरेयाय तं ह प्रजापति-रुवाच यच्छान्तहृदयः प्राव्राजीः गतवानसि विरोचनेन सार्धं किमि-च्छन् पुनरागम इति स स्वाभिप्रायप्रकटमकरोद्यथैव खल्वयमि-त्यादि एवमेवेति चान्वमोदत प्रजापतिः । अन्यत्सर्वं पूर्ववत् ॥ २ ॥

एवमेवैष मघवन् हे मघवन् एषः देहप्रतिविम्ब एवमेव त्वदुक्त-प्रकारेण दोषवानेव । एतमेवात्मानं भूयः पुनरपि व्याख्यास्यामि निर्दो-षतया प्रतिपादयिष्यामि । अन्तःकरणशुद्ध्यर्थं द्वात्रिंशतं वर्षाणि ब्रह्मचर्य्यं वसेत्याज्ञप्तो मघवान् तथैव कृतवानित्यर्थः । तथोषितवते तस्मै मघवते प्रजापतिर्होवाच ॥ ३ ॥

इत्यष्टमाध्यायस्य नवमः खण्डः ॥ ६ ॥

य एष स्वप्ने महीयमानश्चरत्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श तद्यपीदँ शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ १ ॥

यश्चात्मापहतपाप्मत्वादिगुणको विहितः एष सः। यः स्वप्ने महीयमानः स्त्र्यादिभिः पूज्यमानश्चरति एषस्वप्नद्रष्टा भोग्यतादिलक्षणयुक्तामृतत्वादियुक्त आत्मेति होवाच नायं पूर्वोक्तदेहगतान्धस्राम्याद्यनुविधायित्वलक्षणदोषदुष्ट इति भावः। स एवमुक्त इन्द्रः शान्तहृदयः प्रवव्राज। स हाप्राप्यैव देवान् पूर्ववदस्मिन्नात्मनि भयं ददर्श कथम् तदिदं शरीरं यद्यप्यन्धं भवति स्वप्नद्रष्टात्माऽनन्धो भवति। यदि शरीरं स्रामं भवति। सस्वप्नावस्थ आत्मा ऽस्रामः। नैवैष स्वप्नद्रष्टा आत्माऽस्य देहस्य दोषेण दुष्यति ॥ १ ॥

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्ति त्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीति ॥ २ ॥

स समित्पाणिः पुनरेयाय तँ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति सहोवाच तद्यद्यपीदं भगवः शरीरमन्धं भवत्यनन्धः स भवति यदि स्राममस्रामो नैवैषोऽस्य दोषेण दुष्यति ॥ ३ ॥

न वधेनास्य हन्यते नास्य स्राम्येण स्रामो घ्नन्तित्वेवैनं विच्छादयन्तीवाप्रियवेत्तेव भवत्यपि रोदितीव नाहमत्र भोग्यं पश्यामीत्येवमेवैषमघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि वसापराणि द्वात्रिँशतं वर्षाणीति सहापराणि द्वात्रिँशतं वर्षाण्युवास तस्मै होवाच ॥ ४ ॥

इत्यष्टमाध्यायस्य दशमः खण्डः ॥ १० ॥

---

अस्य देहस्य वधे न स हन्यते नचास्य स्राम्येण चक्षुरादिगतानवरतसलिलगलनविषयत्वेन स्रामः नतावदयं देहप्रतिविम्ववद्देहदोषयुक्तः। किन्तु घ्नन्तित्वेवैनम्। एवशब्द इवार्थः एवं केचन घ्नन्तीव विच्छादयन्तीव विशेषेण छादयन्ति गर्तादौ अप्रियवेत्तादुःखजनकविषयभोक्तैव रोदितीव भातीत्यर्थः नाहमत्रेति। स्वप्नावस्थ आत्मनि भोग्यं फलं न पश्यामि। हन्यमानत्वद्राव्यमाणत्वबन्धुजनमरणाप्रियवेत्तृत्वरोदनत्वदर्शनात्स्वप्नावस्थस्य नभोग्यमित्यर्थः॥ २॥

समित्पाणिरिति पूर्ववत्॥ ३। ४॥

इत्यष्टमाध्यायस्य दशमः खण्डः॥ १०॥



**तद्यत्रैतत्सुप्तः समस्तः संप्रसन्नः स्वप्नं न विजानात्येष आत्मेति होवाचैतदमृतमभयमेतद्ब्रह्मेति स ह शान्तहृदयः प्रवव्राज स हाप्राप्यैव देवानेतद्भयं ददर्श नाहंखल्वयमेवँ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति॥ १॥**

**स समित्पाणिः पुनरेयाय तँ ह प्रजापतिरुवाच मघवन् यच्छान्तहृदयः प्राव्राजीः किमिच्छन् पुनरागम इति स होवाच नाहंखल्वयं भगव एवँ सम्प्रत्यात्मानं जानात्ययमहमस्मीति नो एवेमानि भूतानि विनाशमेवापीतो भवति नाहमत्र भोग्यं पश्यामीति॥ २॥ एवमेवैष मघवन्निति होवाचैतं त्वेव ते भूयोऽनुव्याख्यास्यामि नो एवान्यत्रैतस्माद्वसापराणि पञ्चवर्षाणीति सहापराणि पञ्चवर्षाण्युवास तान्येकशतँ सम्पेदुरेतत्तद्यदाहुरेकशतँ हवै वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवास तस्मै होवाच॥ ३॥**

इत्यष्टमाध्यायस्यैकादशः खण्डः॥ ११॥



तत् तस्यामवस्थायां यत्र यस्मिन् एतत् एषः सुप्तः समस्तः सङ्कुचितेन्द्रियव्यापारः सम्प्रसन्नः वाह्यविषयसम्पर्कजनितकालुष्य-रहितः । स्वप्नं न विजानाति । किमु जाग्रत्पदार्थमितिभावः । एष सुप्ताधारः प्राज्ञ आत्मेतिहोवाचैतदमृतमभयमेतद्ब्रह्मेति इन्द्रस्तत्रापि दोषं ददर्श कथं नाह नैव सुपुप्तस्थोऽप्यात्मा खल्वयं सम्प्रति सम्यगिदानीं चात्मानं जानाति नैव जानाति अयमहमस्मीति नो एवेमानि भूतानि चेति । ह इत्याश्चर्ये अयमस्मीतिविशेषज्ञानाभावे सुपुप्तौ विनष्टप्राय इत्यर्थः विनाशमेव विनाशमिव अपीतः अपिगतः विनष्टप्रायः ॥ १ ॥

इमं पूर्वपक्षं ब्रह्मणे निवेद्य सम्यक्वैलक्षण्येन परमात्मानं ज्ञातुं पुनरागत इत्याह समित्पाणि रित्यादिना ॥ २ ॥

हे मघवन् एष आत्मा एवमेवेति होवाच । एतं विलक्षणं परमात्मानं व्याख्यास्यामि । एतस्मात्पुनः । किञ्चित् कालं ब्रह्मचर्याचरणरूपाद्व्रतादन्यत्र तस्माद्दत इति यावत् नो एव नैव व्याख्यास्यामि यतो अतोवसापराणि पञ्चवर्षाणीत्युवाच प्रजापतिः । स एवमादिष्ट इन्द्रोऽपराणि पञ्चवर्षाण्युवास स ह । एवमिन्द्रस्य चतुर्वारं गुरुकुलवासे कियन्ति वर्षाणि सम्पन्नानीत्यपेक्षायां श्रुतिः स्वयमेवाह । तानीति । तानीन्द्रेणोषितानि वर्षाणि एकशतमेकेनाधिकं शतमेकाधिकशत सङ्ख्याकानि सम्पेदुः सम्पन्नानि बभूवुः । अयमर्थः प्रसिद्ध इत्याह । एतदिति । यदाहुर्विद्वांस एकशतं वर्षाणि मघवान् प्रजापतौ ब्रह्मचर्य्यमुवासेति । तस्मै अनुष्ठितब्रह्मचर्याय स प्रजापतिरुवाचोपदिदेश ॥ ३ ॥

इत्यष्टमाध्यायस्यैकादशः खण्डः ॥ ११ ॥

---

**मघवन्मर्त्यं वा इदं शरीरमात्तं मृत्युना तदस्यामृतस्य शरीरस्यात्मनोऽधिष्ठानमात्तो वै स शरीरः प्रियाप्रियाभ्यां न**

**वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्त्यशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः ॥ १ ॥**

**अशरीरो वायुरभ्रं विद्युत्स्तनयित्नुरशरीराण्येतानि तद्यथै- तान्यमुष्मादाकाशात्समुत्थाय परंज्योतिरुपसम्पद्य स्वेन रूपेणा- भिनिष्पद्यते ॥ २ ॥**

हे मघवन् इदं शरीरं मर्त्यं मरणशीलमेव न केवलमेतावन्मात्रं किन्तु मृत्युनाऽऽत्तं ग्रस्तं सततमेव । इदञ्च कथनं वैराग्यार्थम् । तच्छरीरं प्राकृतशरीरराहित्यलक्षणामृतत्वस्वरूपात्मनोभोगाधिष्टानम् । जीवात्मना भोगार्थं गृहीतमित्यर्थः। यः प्राकृतः सशरीरो जीवः सः प्रिया- प्रियाभ्यामात्तः सम्बद्धः ॥ तदेवमुपपादयति । न वै शरीरस्येति । कर्मारब्धशरीरवतः पुंसस्तदनुगुणसुखदुःखयोगस्यावश्यंभावित्वात् । प्रियाप्रिययोरपहतिरपगतिर्नास्ति । कर्मारब्धदेहसम्बन्धाभावपूर्वकभग- वद्भावाप्तिरूपस्य पुरुषार्थतया मुक्तिरूपत्वमुपपद्यत इत्याशयः ॥ व्यतिरेकं दर्शयति । अशरीरमिति । कर्मजन्यप्राकृतशरीररहितं सन्तं प्रियाप्रिये न स्पृशतः ॥ १ ॥

अशरीरो वायुः शिरःपाण्यादिलक्षणशरीरशून्यः अभ्रं विद्युत् स्तनयित्नुरित्येतानि अभ्रादीनिचाशरीराणीत्यर्थः । अभ्रं भूत्वा मेघो भवतीत्यादिवत्। अभ्रस्तनयित्न्वोरवस्थाभेदेन भेदः ॥ तत् वक्ष्यमाणं निदर्शनं यथा । एतानि वाय्वादीनि । अमुष्मादाकाशात्समुत्थाय स्वकार्य- करणायोर्ध्वदेशेऽभिवृद्धिं प्राप्य परशब्दोवाय्वादीनां कारणावस्थावाची । ज्योति शब्दस्तु कारणानां कार्योत्पादनद्वारेण तदभिव्यक्तिहेतुतया प्रयुक्तम्। तानि कारणद्रव्यमुपागत्य कार्यावस्थां हित्वा कारणसदृशेन रूपेण विशिष्टानि भवन्ति । वायुर्हि आवहप्रवाहादिरूपेण सप्त- विधत्वं हित्वा वायुत्वमात्रेणावतिष्ठते विद्युच्च विद्युत्त्वं हित्वा तेज- स्त्वेन अभ्रस्तनयित्नू चाभ्रत्वादि प्रहाणेन स्वकारणभूतरूपेण एवं

प्रत्यगात्माऽपि मार्गविशेषेण देशविशेषावच्छिन्नं परं ब्रह्म प्राप्य संसार्य्यवस्थाप्रहाणेन परमसाधर्म्यरूपेणाविर्भवति ॥ २ ॥

**एवमेवैष सम्प्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसम्पद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः स तत्र पर्येति जक्षन् क्रीडन्रममाणः स्त्रीभिर्वा यानैर्वा ज्ञातिभिर्वा नोपजनꣳ स्मरन्निदं शरीरꣳ स यथा प्रयोग्य आचरणे युक्त एवमेवायमस्मिञ्छरीरे प्राणो युक्तः ॥ ३ ॥**

**अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणमथ यो वेदेदमभिव्याहराणीति स आत्माऽभिव्याहाराय वागथ यो वेदेदं शृणवानीति स आत्मा श्रवणाय श्रोत्रम् ॥ ४ ॥**

एवमेवैष सम्प्रसादः प्रत्यगात्मा । अस्माच्छरीराच्चरमशरीरात्समुत्थाय परंज्योतिश्शब्दवाच्यं परं ब्रह्म भगवन्तमुपसम्पद्य तत्समीपं गत्वा स्वेन रूपेणाविर्भूतापहतपाप्मत्वादिगुणको निष्पन्नो भवति न रूपान्तरेणागन्तुकेन खलु केनचिदभिनिष्पद्यते । स उत्तमः पुरुषः सम्पादनीयः । उत्तम पुरुष इत्यर्थः । उत्तमः पुरुषस्त्वन्य इति श्रीमुखवचनात् । भगवतएवोत्तमपुरुषत्वेनोपसम्पादनकर्तरि उत्तमपुरुषत्वस्य बाधितत्वात्स तत्र पर्य्येतीत्युत्तरवाक्यभङ्गप्रसङ्गाच्च स उपसंयत्ता परमात्मनि पर्य्येति परितोऽनुभवति । यद्वा अनुसञ्चरति कामरूप्यनुसञ्चरन् यत्र यत्र धाता गच्छतीतिश्रुत्यन्तरात् जक्षन् भक्षयन् क्रीडन् हसन्वा रममाणः ॥ यथेष्टं भोगानाप्नोतीत्यर्थः । रमणातिशयप्रकारमेवाह । नोपजनमिति । स्त्रीपुरुषयोरन्योऽन्योपगमेन जायते इत्युपजनमिदं शरीरं तन्न स्मरन् तत्स्मरणं ह्यब्रह्मात्मकतया दुःखरूपमतोमुक्तिदशायां न तं स्मरतीत्यर्थः । न तदस्मरणे मुक्तस्य सर्वज्ञत्वहानिः अब्राह्मकतया दुःखरूपत्वेनानुभूतत्वात् । आत्मनो शरीरस्य भावत्वेन प्राक्शरीरसम्बन्धः किन्निबन्ध इत्यत आह । स यथेति स दृष्टान्तो

यथा। प्रयुज्यत इति प्रयोज्योऽश्वो वा वलीवर्दो वा यथालोक आचरत्यनेनेत्याचरणोरथोऽनोवा तस्मिन्नाचारणे युक्तस्तदाकर्षणाय । एवमस्मिञ्छरीरे रथस्थानीये प्राणसहचारीप्रत्यगात्मा संसारदशायां स्वकर्मफलभोगनिमित्तं नियुक्तः। अनेन रथदृष्टान्तेन देहात्मनोर्व्यतिरेकोदृढीकृतो भवति ॥ ३ ॥

शरीरेन्द्रियेभ्योऽतिरिक्तमात्मानं व्युत्पादयन् तस्य निरुपाधिकं द्रष्टृत्वं निरूपयति। अथेति। यत्रयस्मिन्नुपकरणत्वेनानुविषण्णं निवद्धं चक्षुः प्रकाशमानत्वादाकाशरूपमालोकरूपं वा प्रकाशयतीति शेषः स चाक्षुषः चक्षुरुपकरणकः पुरुष आत्मा तस्य दर्शनाय रूपोपलब्धये चक्षुः करणमात्रम् । एतेनेन्द्रियाणां करणत्वं रूपादीनां ज्ञेयत्वमात्मनश्च द्रष्टृत्वमुक्तं भवति तस्मात्सिद्धं भवति । शरीरेन्द्रियेभ्योभिन्नआत्मेति ॥ तदेव विशदरूपेण दर्शयति । अथेति । यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणं गन्धग्रहणाय करणं घ्राणम् । ज्ञातात्वात्मा । एवमुत्तरत्रापि योज्यम् । अथ यो वेदेदं वचनमभिव्याहराणिवदिष्यामीति स आत्माऽभिव्याहरणक्रियासिद्धये करणं वागिन्द्रियम् । अथ योयं वेदेदं शृणवानीति स आत्मा श्रोत्रं करणम् ॥ ४ ॥

**अथ यो वेदमन्वानीति स आत्मा मनोऽस्य दैवं चक्षुः स वा एष एतेन दैवेन चक्षुषा मनसैतान् कामान् पश्यन्रमते य एते ब्रह्मलोके ॥ ५ ॥**

**तं वा एतं देवा आत्मानमुपासते तस्मात्तेषां सर्वेच लोका आयत्ता सर्वे च कामाः सर्वांश्च लोकानाप्नोति सर्वांश्च कामान् यस्तमात्मानमनुविद्य विजानातीति ह प्रजापतिरुवाच ॥६॥**

इत्यष्टमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥



अथ यो वेदेदमन्वानीति सम्पादनीयानीति वेद स आत्मा, अस्य- आत्मनः। मनः दैवं दिव्यं चक्षुः । विधूतकर्मनिर्मितशरीरेन्द्रियमुक्तः मन-शब्दाभिहितेन दिव्येन स्वाभाविकज्ञानेन सर्वान् कामाननुभवन्मोदत इत्यर्थः ॥ ५ ॥

यस्मादेष आत्मा प्रजापतिनोक्त आत्मा तस्मात्ततः श्रुत्वा तमात्मानं देवा उपासते तदुपासनाच्च तेषां सर्वे लोका आत्ताः प्राप्ताः सर्वे च कामाः । अन्यत्वेऽपि मनुष्याणामपि तमात्मान मुपासीनानां तत्प्राप्तिर्भवतीत्याह । स सर्वांश्च लोकानाप्नोतीति । इन्द्रवद्य आत्मानं प्रत्यगात्मस्वरूपमनुविद्य ज्ञात्वा तं परं ब्रह्म विजानाति ब्रह्मदिदृक्षोः प्रत्यगात्मनः स्वस्वरूपं ज्ञातव्यमेव स्वयमपि कल्याण-गुण एव सन् अनन्तकल्याणगुणगणार्णवं परब्रह्मानुभविष्यतीति ब्रह्मोपासनं दहरविद्याफलमेव । अत्र प्रत्यगात्मविद्यायाः ब्रह्मविद्या-ङ्गत्वेनाङ्गीभूतब्रह्मविद्याफलमेव तदङ्गप्रत्यगात्मविद्यायाः स्तुत्यर्थं निर्दिश्यत इत्यर्थः । ह सामान्येन किल प्रजापतिरुवाच । अतः सर्वेषा-मात्मज्ञानं तत्फलप्राप्तिश्च तुल्यैव भवति ॥ द्विरुक्तिर्विद्यासमाप्त्यर्था ॥६॥

इत्यष्टमाध्यायस्य द्वादशः खण्डः ॥ १२ ॥

---

इदञ्च वाक्यं फलपादे चिन्तितं स्वेनरूपेणाभिनिष्पद्यत इत्यस्माच्छब्दात्परं ज्योतिरुपसम्पद्य देवादिवदागन्तुकेन केन चिद्रूपेण सम्पन्नो भवतीति गम्यत इति प्राप्त उच्यते ।

सम्पद्याभिर्भावः स्वेन शब्दात् । ब्र० सू० ४।४।१॥

प्रत्यगात्मा ।परंज्योतिरुपसम्पद्याविर्भावः । आविर्भूतापहतपाप-सत्वादिगुणस्वरूपोभवत्यनया श्रुत्या प्रतिपाद्यते कुतः स्वेनशब्दात् स्वेनेतिविशेषणात् । अन्यथा रूपेणेत्यनेनैवागन्तुकरूपपरिग्रहे सिद्धे स्वेनेति विशेषणस्यानर्थक्यापत्तेः ॥ बद्धावस्थायामावृतस्वरूप प्रत्यगात्माऽर्चिरादिमार्गेण भगवन्तं सम्पद्य निरावरणेन स्वेन स्वाभा-विकेन रूपेणाविर्भवतीत्यर्थः । ननु स्वाभाविकस्वरूपस्य नित्यप्राप्त-त्वाद्बद्धावस्थातो मुक्तावस्थायां को विशेष इत्यत आह ।

मुक्तः प्रतिज्ञानात् । ब्र० सू० । ४ । ४ । २ ॥

कर्मात्मिकाविद्यावशात् कार्यकारणरूपप्रकृतिसम्परिष्वक्तो नानातापसंतप्तो नानातर्कविमोहितोऽनादिबद्ध इत्युच्यते । स नित्य प्राप्तमपि निजं रूपं न जानाति । मुमुक्ष्ववस्थायाञ्च शास्त्राचार्य्यानुग्रहाद्ज्ञातस्वरूपोऽपि कार्यकारणप्रकृतिसंसर्गात्स्वेनरूपेण नाभिनिष्पद्यते । स एव विद्यामहिम्ना अर्चिरादिमार्गेण परं ज्योतिरुपसम्पन्नः सर्वबन्धविनिर्मुक्तः स्वेनरूपेणाभिनिष्पद्यते, तदा मुक्त इत्युच्यते । इति विशेषोऽस्ति कुतः प्रतिज्ञानात । यऽऽत्माऽपहतपाप्मेत्युपक्रम्य । एतं त्वेव ते भूयोऽनुव्याख्यास्यामीति जागरितावस्थात्रयतदालयशरीरादिनिखिलदोषविनिर्मुक्तस्वरूपप्रतिपादनविषयकप्राजापतिप्रतिज्ञानात् । असति विशेषे प्रजापतिप्रतिज्ञानस्यानर्थक्यं स्यादित्यर्थः । ननु निवृत्ततिरोधानस्याप्यात्मस्वरूपस्य कथंचित्साध्यत्वसम्भवेऽपि न तस्य पुरुषार्थत्वे प्रमाणमस्तीत्यत्राह ।

आत्मा प्रकरणात् । ब्र० सू० । ४ । ४ । ३ ॥

य आत्मापहतपाप्मेत्यादिवाक्यसंदर्भप्रतिपाद्यापहतपाप्मत्वादिगुणाष्टकविशिष्टतयाऽत्यन्तानुकूलत्वेन परमपुरुषार्थभूतोऽऽत्मा । अपहतपाप्मत्वादीनां कथं जीवसम्बन्धित्वमित्यत्राह । प्रकरणादिति । अवस्थात्रयकलुषितं जीवं प्रकृत्यैवापहतपात्मत्वादिगुणानामाम्नानादिति स्थितम् ॥

प्रत्यगात्मा परं ज्योतिरुपसम्पद्य स्वाभाविकेन स्वस्वरूपेणाविर्भवत्युक्तं तत्र कीदृशं तत्स्वरूपमितीदानीं चिन्त्यते । किमपहतपाप्मत्वादिगुणकमेवास्य स्वाभाविकं स्वरूपम् । उत चैतन्यमात्रम् । इति संशये प्रथमं तावत् प्राप्तमपहतपाप्मत्वादिगुणकमित्याह ।

ब्राह्मेण जैमिनिरुपन्यासादिभ्यः । ब्र० सू० ।४।४।५॥

ब्राह्मेणापहतपाप्मत्वादि सत्यसङ्कल्पत्वावसानेन गुणेन विशिष्टः सन्नयमाविर्भवतीति जैमिनिराचार्यो मन्यतेस्माअपहतपाप्मत्वादयो हि दहरवाक्ये ब्रह्मगुणा उक्तास्तेषां प्रजापतिवाक्ये प्रत्यगात्मन्यपि । य आत्माऽपहतपाप्मेत्यादिनोपन्यासात् ।

चितितन्मात्रेण तदात्मकत्वादित्यौडुलौमिः ॥ ब्र० सू० ।४।४।६॥

ब्रह्मणि चिद्रूपे उपसन्नः प्रत्यगात्मा चिन्मात्रेण रूपेणाविर्भवति । "प्रज्ञानघन एवेति" तस्य तदात्मकत्वश्रवणादित्यौडुलोभिर्मन्यते ।

एवमप्युपन्यासात् पूर्वभावादविरोधं बादरायणः ॥ ब्र० सू० ।४।४।७।

एवमपि चिन्मात्रत्वप्रतिपादनेसत्यपि पूर्वभावात् पूर्वोक्तादपहतपाप्मत्वादिगुणसम्पन्नविज्ञानस्वरूपप्रत्यगात्माविर्भावात् । अविरोधं मोक्षस्वरूपं भगवान्बादरायणो मन्यते कुतः । उपन्यासात् । प्रजापतिवाक्ये ब्राह्मस्यापहतपात्मत्वादेर्मुक्तजीवसम्बन्धितयोपन्यासात् । विज्ञानघन एवेत्यत्रापहतपाप्मत्वादीनामेवकारेण व्यावृत्तिः कर्त्तुमशक्या । तेषां य आत्माऽपहतपाप्मेत्यादिश्रुतिसिद्धत्वात् । एवकारस्य जडत्वव्यावृत्तिपरत्वाच्च । यथा रसघन एवेत्यत्रैवकारेण रूपस्पर्शादीनां व्यावृत्तिर्न कर्त्तुं शक्या प्रमाणान्तरेण तदुपलब्धेः एवकारस्य द्रव्यान्तरव्यावृतिपरत्वाच्च । तस्मात्परं ज्योतिरुपसम्पद्योभयश्रुत्यविरुद्धेनापहतपाप्मत्वादिगुणयुक्तेन स्वाभाविकेन स्वेन रूपेण प्रत्यगात्माविर्भवतीति स्थितम् ॥

**श्यामाच्छवलं प्रपद्ये शवलच्छ्यामं प्रपद्ये, अश्व इव रोमाणि विधूयपापं चन्द्र इवराहोर्मुखात्प्रमुच्य धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसम्भवामीति ॥१॥**

इत्यष्टमाध्यायस्य त्रयोदशः खण्डः ॥ १३॥

---

श्यामात् श्यामरूपविशिष्टभगवद्विग्रहात् तत्स्वरूपमुपास्य श्यामादिति ल्यप्लोपे पञ्चमी । शवलं चिदचिद्भिन्नाभिन्नं परं ब्रह्म प्रपद्ये शवलात्तदुपासानन्तरं श्यामं प्रपद्ये, इतिनिरन्तरं त्रिविध्येनोपासे, इत्यर्थः । अश्वो रोमाणीव पापमप्रारब्धमनायासेनैव विधूय चन्द्र इव राहोर्मुखात् प्रारब्धपापात् शनैर्भोगेन क्षीयमाणात् प्रमुच्य स्थूलं सूक्ष्मञ्च धूत्वा विहाय कृतात्मा—आविर्भूतरूपोऽहमकृतं

नित्यं ब्रह्मलोकमभिसम्भवामि गन्तास्मीत्यनेनाभिप्रायेण प्रपद्ये, इत्याह, वेदपुरुषः।१।

इत्यष्टमाध्यायस्य त्रयोदशः खण्डः॥ १३ ॥

---

आकाशो ह वै नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा प्रजापतेः सभां वेश्म प्रपद्ये यशोऽहं भवामि ब्राह्मणानां यशो राज्ञां यशो विशां यशोऽहमनुप्रापत्सि स हाहं यशसां यशः श्येतमदत्कमदत्कं श्वेतं लिन्दुमाभिगां लिन्दुमाभिगाम् ॥ १ ॥

इत्यष्टमाध्यायस्य चतुर्दश खण्डः॥ १४ ॥



प्रजापतेः सभामिति । प्रजापतेः परमात्मनः सभामास्थानं वेश्म प्रपद्ये प्राप्नुयां यशोऽहं भवामि ब्राह्मणानं मध्ये यशस्वी भवामीत्यर्थः । एवं यशो राज्ञामित्यादियोज्यम् । स इत्येतद्वक्ष्यमाण-मत्रापि सम्बध्यते । यशसां यशस्विनां यशः यशप्रदः सोऽहं यद्य-शसां यशः उत्तमयशोरूपं श्वेतं स्वसनगं कं स्वानन्दानुभवात्मकमत्ती-त्यदत्कं परब्रह्म तदनुग्रहेण यशः प्रापत्सि प्राप्तवानस्मि यन्मम यशोदात् तदेवादकं श्वेतलिन्दु रतिदम् । अभिगां प्राप्नुयामिति । वेदपुरुषष्य ब्रह्मणो वाक्यम् पुनरुक्तिः पूर्ववत् ।।१।।

यथा नद्यो नामरूपे विहाय इत्यादिना मुक्तावस्थायां प्रसिद्ध-नामरूपत्यागसम्भवाच मुक्तात्मन आविर्भूतज्ञानवत्तया ऽऽकाश-शब्दस्यापि तत्रोपपन्नत्वात् । तद्ब्रह्म तदमृतमितिमुक्तावस्थोच्यत इतिप्राप्ते । ब्रूमः ॥ आकाशशब्दार्थोऽत्र परमात्मा भवितुमर्हति । कुतः । अर्थान्तरत्वव्यपदेशात् । आकाशशब्दार्थस्य । ते यदन्तरेत्यनेन नामरूपास्पृष्टस्यैव ! नामरूपयोर्निर्वहितेति नामरूपनिर्वोढुर्नामरूप निर्वोढृत्वशून्यादर्थादर्थान्तरत्वेन व्यपदेशादित्यर्थः । बद्धावस्थायां जीवस्य कर्माधीनतया नामरूपे भजतः स्वयं नामरूप निर्वोढु

व्याकर्त्तुमशक्यत्वान्मुक्तावस्थायां जगद्व्यापारासम्भवस्य वक्ष्यमाणत्वात् सुतरां नामरूपनिर्वोढृत्वासम्भवाच्च । परमात्मनस्तु सर्वजगन्निर्मितिकुशलस्य ॥ अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि तस्मादेतन्नामरूपमन्नञ्च जायते "सर्वाणि रूपाणि विचिन्त्य धीरो नामानि कृत्वाभिवदन्यदास्ते" इत्यादिश्रुत्यैव तन्निर्वोढृत्वं सुप्रतिपन्नम् । आदिपदार्थस्य नित्याविर्भूतबृहत्वमहत्वादिभगवदसाधारणधर्मस्य व्यपदेशाच्च । नापि पूर्वं मुक्तः प्रकृतः । ब्रह्मलोकमभिसम्भवानीति ब्रह्मलोकशब्दितपरमात्मन एव प्रकृतत्वात् । आकाशशब्दस्यापि व्यापकत्वेनासङ्गत्वेनच परमात्मन्येव प्रसिद्धत्वादिति ॥ प्रकृत मनुसरामः ॥

इत्यष्टमाध्यायस्य चतुर्दशः खण्डः ॥ १४ ॥



**तद्धैतद्ब्रह्मा प्रजापतय उवाच प्रजापतिर्मनवे मनुः प्रजाभ्य आचार्य्यकुलाद्वेदमधीत्य यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य कुटुम्बे शुचौ देशे स्वाध्यायमधीयानो धार्मिकान् विदधदात्मनि सर्वेन्द्रियाणि सम्प्रतिष्ठाप्याहिꣳसन् सर्वभूतान्यन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते न च पुनरावर्त्तते न च पुनरावर्तते ॥ १ ॥**

इत्यष्टमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥



इति छान्दोग्योपनिषद्यष्टमोऽध्यायः समाप्तः ॥ ८ ॥



एषा मुमुक्षुभिरवश्यमादरणीयेत्याशयेन वेदपुरुष एतदुपनिषत्प्रवर्त्तकान् वदन्नेतदुपनिषदुक्तगुणोपासकानामावश्यापेक्षितान्यमनियमान् प्रदर्शयन्नपुनरावृत्तिरूपं फलञ्चाह । तद्धैतदित्यादिना । तत् पूर्वोक्तम् । एतत् । श्यामाच्छबलमित्यादिकमुपनिषद्रूपं वाक्य·

जन्यविज्ञानं ब्रह्मा चतुर्मुखः प्रजापतये कश्यपायोपदिदेश किल प्रजापतिः मनवे स्वायम्भुवाय मनुः प्रजाभ्यः । यत एवमियमुपनिषत् परम्परागता अतएव यदुपनिषदुक्तार्थस्यावश्यमादरणीयत्वादद्यतनोऽपि यः कश्चिन्मुमुक्षुराचार्यकुलाद्वेदमधीत्य यथाविधानमित्येतत् पूर्वोत्तराभ्यां सम्बध्यते । गुरोः कर्मसेवारूपं गुरुदक्षिणारूपं वा अतिशेषेण अशेषेण कुटुम्बी गृहस्थाश्रमवान् इदमितराश्रमिणामुपलक्षणम् ॥ धार्मिकान् व्यापारान् विदधत् कुर्वाणः । आत्मनि एतदुपनिषदुक्तगुणवति सर्वेन्द्रियाणि प्रतिष्ठाप्य नियम्य तीर्थेभ्योयज्ञेभ्योऽन्यत्र विना सर्वाणि भूतान्यहिंसन् हिंसामकुर्वाणः यावदायुषं वर्त्तयन् वर्त्तमानस्तं परमात्मानं दृष्ट्वा ब्रह्मलोकमभिसम्पद्यते प्राप्नोति । स्वर्गलोकप्राप्त इव पुनरावर्त्तते किंनेत्याह । नचेति चशब्दोऽवधारणार्थः । कदाचिदपि क्वचिदपि केनापिनिमित्तेन नैवावर्त्तत इत्यर्थः । द्विरुक्तिरशेषावधारणार्था: ॥ १ ॥

इत्यष्टमाध्यायस्य पञ्चदशः खण्डः ॥ १५ ॥

---

पूर्णानन्दमहोदधिः परतमो नित्यः परस्मात्सदा ।
सर्वज्ञः सकलेशिता गुणनिधिर्नित्योरक्षवस्तद्विदाम् ॥
सर्वस्मादधिकं मम प्रियतमस्त्विष्टादपीष्टोत्तमः ।
सर्वस्माच्च हितात्सदाहिततमः प्रीतो भवेन्मे हरिः ॥
निम्बभानुमहं नौमि पूर्णानन्दप्रदं विधुम् ।
राजीवलोचनं विज्ञं हंसवंशविभूषणम् ॥

श्री १०२ सनन्दनादिप्रवर्तितसत्सम्प्रदायानुगताशेषरसिकचक्रचूडामणि श्रीस्वामिहरिदासपदाश्रिताश्रितानुगेनामोलकरामविदुषा संगृहीतायां छांदोग्योपनिषत्प्रकाशिकाटीकायामष्टमोध्यायः समाप्तः ॥

